सत्तासमयोऽपि निर्विरोधं विक्रमार्कीयसप्तदशाष्टादशशताब्द्यां निर्णीयते ।

एभिर्वाचकवाख्योप्पतिभिरुक्तव्यतिरिक्ता अपरेऽपि ग्रन्थाः गुम्फिता भवेयुः, परं कति किं विषयपोषकाः ? इत्यद्यापि न निर्णीतम् ।

प्रसिद्धं चैतद्यदुत तथाभूतसदाचरणसमुत्पन्नयशःप्रसरधवलिताखिलदिक्ककाणां सत्पुरुषाणा सतीमतल्लिकानां च ब्रह्मचर्यादिविशुद्धाचरण-चारुचरित्रमपि श्रवणगोचरतां गतं प्रणाशयति प्राणिनामनेकभवसञ्चितकर्मकदम्बकम् । अतः कथानकादिश्रवणरसिकानां हितहेतवे कथा-कारैरेषा श्रोतृजनसुकृतवल्लीसमुज्जीवनकाम्यकुल्याकल्पा कथा प्रस्तावचतुष्टयेन विभज्य निबद्धा ।

अमुष्या विषयविभागस्त्वेतदवलोकनेनैव स्वयमेवावबुध्यते बुद्धिमद्भिरित्यतिकथने न ममावश्यकतेति ।

एतस्याः संशोधनसमये द्वे पुस्तके समुपलब्धे । तयोरेकम्—"लिखिता चेयं प्रतिः सकलवाचकसंसत्सीमन्तिनीतिलकमहोपाध्यायश्री-५ श्रीभावविजयगणिशिष्यपं० मानविजयगणिना भृगुकच्छबन्दिरे स्ववाचनार्थम् । कल्याणमस्तु श्रीजिनचरणारविन्दसेवनमधुकराणाम् ।" इत्येतदुल्लेखाङ्कितपुस्तकादर्शादादर्शीभूतं चतुर्विंशतिपत्रात्मकं नूतनं शुद्धं पूज्यपादप्रवर्तकश्रीमत्कान्तिविजयमुनिपुङ्गवसत्कम् । द्वितीयं पुनः सप्तदशपत्रात्मकं पुरातनं नात्यशुद्धं कथाकारप्रशस्तिरहितं पत्तनस्थसागरगच्छीयचित्कोशसत्कम् ।

एतत्पुस्तकद्वितयीनिरीक्षणेन महता प्रयासेन संशोधितेऽप्यत्र निबन्धे मतिमान्द्यादक्षरयोजकदोषाद्वा यत्र किमप्यशुद्धं कृतं जातं वा भवेत्तत्र संशोधयन्तु कविकोटीकोटीरा इति प्रार्थयते—

प्रवर्तकश्रीमत्कान्तिविजयचरणसेवाहेवाकः

चतुरविजयो मुनिः ।

॥ अर्हम् ॥

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरचरणकमलेभ्यो नमः ।

# श्रीमद्भावविजयगणिविरचिता चम्पककमालाकथा ।

ॐ नमो विश्वविख्यातकीर्त्तये स्फारमूर्त्तये । श्रीशङ्खेश्वरपार्श्वाय, त्रैलोक्याह्लादकारिणे ॥ १ ॥ यो बाल्ये सुरचाणूरं, विजिग्येऽरिष्टनाशकृत् । यशोदयाश्रितं वन्दे, तं वीरं पुरुषोत्तमम् ॥ २ ॥ ऐन्द्रीदिगिव मार्तण्डं, या बोधं जनयत्यलम् । तां शारदां श्रये नावमिव शास्त्राब्धिपारदाम् ॥ ३ ॥ स्वगुरून् सज्जनांश्चैव, वन्दे विश्वोपकारकान् । दुर्वृत्तमपि ये सूक्त्या, नयन्ति श्रेष्ठवृत्तताम् ॥ ४ ॥ शिष्टाचारं विधायेति, शीलमाहात्म्यमञ्जुलाम् । कथां चम्पकमालाया, यथा दृष्टां तनोम्यहम् ॥ ५ ॥ सर्वजन्तूपकारित्वात्, प्रधानमिति पारगैः । दानं चतुर्विधे धर्मे, यद्यप्यादौ निवेशितम् ॥ ६ ॥ शीलमेव तथाऽप्याप्तैः, सुदुष्पालमुदीरितम् । तैर्यदस्यैव रक्षार्थं, स्थापिता नवगुप्तयः ॥ ७ ॥ चारित्रवपुषः प्राणभूतमप्येतदेव हि । यदस्मिन् सर्वथा नष्टे चारित्रं हि सदप्यसत् ॥ ८ ॥ अन्यव्रतानां भग्नानां, सन्धानं जातु जायते । भग्नस्यास्य[1] तु तत् पक्वमृत्कुम्भस्येव दुष्करम् ॥ ९ ॥ सम्यगाराधितस्यास्य, प्रभावोऽप्यद्भुतावहः । ऐहिकः पारत्रिकश्च, सुप्रतीतो जगत्त्रये॥ १०॥

---

१ शीलस्य ॥

ज्ञात्वा विशेषैरित्याद्यैः, शीलस्यापि प्रधानताम् । तन्माहात्म्यं वंदे[1] तस्याः, शीलवत्या निदर्शनात् ॥ ११ ॥ तथा ह्यत्रैव भरते, भरिते कमलाभरैः । देशोऽस्ति मालवो नाप, यस्य स्वर्गोऽपि मालवम्[2] ॥ १२ ॥ पुराणि यत्र राजन्ति, विमानानीव ताविषे । वैराप्सरांसि[3] सद्धामान्युलसद्विबुधानि च ॥ १३ ॥ ग्रामाश्च विषयग्रामा, इव यत्र विदामपि । श्यामारामाभिरामा[4] द्राक्, प्रीतिमन्तर्वितन्वते ॥ १४ ॥ सुधासारं सुरत्रस्तो, मन्येऽब्धिर्न्यासयद्भुवि । नो चेत्कथं स्युः सर्वत्रेक्षवस्तत्र सुधारसाः ॥ १५ ॥ सिद्धिः स्याद्बहुधान्याया[6], यत्राल्पेऽप्यागतेऽम्बुदे । स्वल्पेऽप्यधिगते शास्त्रे, कुशाग्रीयमताविव ॥ १६ ॥ दुर्भिक्षोपप्लवो यत्र, कृतसर्वाङ्गिविप्लवः । तमिस्रोपद्रवः स्वर्ग, इव जातु न जायते ॥ १७ ॥ यत्र मैत्रीजुषोऽन्योन्यं भान्ति सन्मुदिता जनाः । कारुण्यपुण्या दुष्कर्मोपेक्षादक्षा मुमुक्षुवत् ॥ १८ ॥ तत्राचलातपत्राभाऽचलायास्तापहारिणी । रराज राजधानी स्वर्जयिन्युज्जयिनी पुरी ॥ १९ ॥ सुखावहा वर्हां दीप्रा, शिप्रा क्षिप्राङ्गिपावने । रेजे यदन्तिके सिद्धापगेव स्वर्गसंनिधौ ॥ २० ॥ ररजारामराजी यां, परितः परितोषकृत् । यया जितं ह्रिया मेरुमाश्रयत् खलु नन्दनम् ॥ २१ ॥ प्राकारः प्रवरो यस्यां जलाढ्यपरिखाञ्चितः । सप्रेमप्रेयसीजुष्टः, प्रेयानिव दधौ श्रियम् ॥ २२ ॥ यत्रार्हतां गृहाः शातकु-

---

१ 'दीप्तिज्ञानयत्नविमत्युपसंभाषोपमन्त्रणे वदः' ३।३।७८ इत्यात्मनेपदं अत्र 'वदे' दीपयामीत्यर्थः । २ मा मा लक्ष्म्या लेशस्तम् । ३ नगरपक्षे अपां सरासि अप्सरांसि वराणि अप्सरांसि येषु तानि तथा । विमानपक्षे वरा अप्सरसो येषु तानि तथा । ४ ग्रामपक्षे श्यामैरारामैरभिरामाः । विषयग्रामपक्षे श्यामा षोडशवार्षिकी अप्रसूताङ्गना च । एवंविधा या रामा वशास्ताभिरभिरामाः । अत्र श्यामाशब्दस्य संज्ञाशब्दत्वेन पुंवद्भावः । ५ न्यस्तवान् । ६ बहुधान्यलाभा । पक्षे बहुधा बहुप्रकारा न्याया युक्तयो यस्यां सा । ७ नदी । ८ सेवितः । ९ स्वर्णम् ॥

म्भकुम्भाङ्कसानवः । नवोदितार्कसंपृक्तमुदयाद्रिं व्यडम्बयन् ॥ २३ ॥ सौधेषु यत्र धनिनां, प्रायो द्रविणसंमितिः । असूचि केतुभिः कोटिसंख्यानुमितिहेतुभिः ॥ २४ ॥ न साम्यं यन्महेच्छानामर्थीच्छाधिकदायिनाम् । सुरद्रुमणयो भेजुः, समीहामितदायिनः ॥ २५ ॥ तत्रासीत्रासितारातिघूको विक्रमतेजसा । सान्वर्थनामा स्थामाढ्यो, विक्रमादित्यपार्थिवः ॥ २६ ॥ यो धैर्येण च बुद्ध्या चाग्निकवेतालनिर्जरम् । उपाचरत्तथा राज्यं, तं च चक्रे यथाऽऽत्मसात् ॥ २७ ॥ दानशौण्डो ददौ दानं, तथा सोऽत्यर्थमर्थिनाम्[1] । अब्दा इवाब्धेर्दातृत्वं यथा तस्यार्थिनोऽप्ययुः[2] ॥ २८ ॥ आजन्मतोऽपि विमलं यस्तथा शीलमाश्रयत् । परस्त्रीसोदर इति, यथाऽद्यापि स गीयते ॥ २९ ॥ महाप्रभावैर्यश्चित्ते, सिद्धसेनदिवाकरैः । अपास्य मिथ्यात्वतमः, सम्यक्त्वोद्द्योत आहितः ॥ ३० ॥ स्तवानुभावाद्भित्त्वोग्रैलिङ्गं[3] तैरेव सूरिभिः । प्रादुष्कृतं पार्श्वबिम्बमर्चन् यो भृशमैधत ॥ ३१ ॥ यः स्वर्णं स्वर्णमत्योंत्थं, नृणां दत्वानृणां धराम् । कृत्वा संवत्सरं स्वीयं, सत्त्रात् सर्वगं[4] न्यधात् ॥३२॥ निघ्नन् पीडां सहित्वापि, परदुःखानि योऽनिशम् । जीमूतवाहनादीनां, कथामवितथां[5] व्यधात् ॥ ३३ ॥ कलाचार्य इवाबोधि, सकलाः सकलाः कलाः । तथाऽपि सोऽभवत् स्वल्पकलावत्यपि सादरः ॥ ३४ ॥ इत्यनेकगुणास्थानं, सोऽन्यदा विबुधैर्वृतः । आस्थानं भूषयामास, सुधर्मामिव वासवः ॥ ३५ ॥ गोष्ठी शिष्टैस्तदारेभे, तस्य संसदि संमदात् । कलावैषम्यविषयतारतम्यविवेचिनी ॥ ३६ ॥ तां निशम्य नृपोऽवादीत्, भो भो ब्रूत विशारदाः ! । विषमामप्यहं सम्यक्कलयामि न कां कलाम् ॥३७॥ तेऽप्यभ्यधुः सभ्यधुर्या, वर्यधीजितगीष्पते ! । न हि काऽपि कला विश्वे, साऽस्ति वेत्ति न यां प्रभुः ॥३८॥

---

१ उदाराणाम् । २ अब्धेरर्थिनः अब्दा इव मेघा इव यस्य राजोऽर्थिनो दातृत्वं ययुः । ३ शिवलिङ्गम् । ४ सर्वव्यापिनम् । ५ सत्याम् ॥

याः शास्त्रशस्त्रकरणाभ्यासरूपाः कला विभो ! । याश्च प्रज्ञाप्रकाशोत्थास्त्वयि सर्वा वसन्ति ताः ॥ ३९ ॥ तां तदुक्तिं समाकर्ण्य, सकर्णः कोऽपि कोविदः । धूतमूर्द्धाऽभ्यधान्मूर्द्धाभिषिक्तमिति युक्तवाक् ॥ ४० ॥ स्वामिन्नमी न मीमांसापूर्वं सर्वे वदन्त्यदः । प्रीणयन्ति प्रियालापैः, किं तु त्वामिष्टदायिनम् ॥ ४१ ॥ यतः—

अवास्तवैर्वास्तवैर्वा, संस्तवैः संस्तवैषिणः । ये प्रियोक्तिप्रियान्नाथान्, रञ्जयन्ति जयन्ति ते ॥ १ ॥

इत्येते तेजसां धाम, बहुधा मधुरोक्तिभिः । स्तुवन्ति त्वां घनमित्र सारङ्गाः कमलार्थिनः ॥ ४२ ॥ सत्यं पृच्छसि चेद्देव !, वाचाटोऽहं तदा ब्रुवे । को वाचाटं विना राज्ञः, प्रतीपं[१] प्रतिपादयेत् ॥ ४३ ॥ यद्यपि त्वं कला वेत्सि, सर्वाः सर्वसहापते ! । तथाऽपि न स्त्रीचरितकला ते विषयो मतेः ॥ ४४ ॥ क्रियाकारकभावार्थगूढादीन्यपि ये विदुः । सर्वशास्त्रविदः स्त्रीणां, हृद्गूढं तेऽपि नो विदुः ॥ ४५ ॥ ये वञ्चयन्ते सुधियः, स्वधिया त्रिदशानपि । तेऽपि सत्तमहेलाभिर्[३]महेलाभिः प्रवञ्चिताः ॥ ४६ ॥ चेतो विलासेन्द्रजालैर्मोहयन्ति विशां[४] वशाः । शक्तिर्मूढहृदां च स्यात्, क्व तच्चरितचिन्तने? ॥ ४७ ॥ मदिरावन्मदिराक्षी-क्षीवयत्यङ्गिनं[५] क्षणात् । मरौ सरिदिव क्षीवे, तत्त्वचिन्ता च दुर्लभा ॥ ४८ ॥ तन्नाथ ! नारीचरितं दुर्बोधं धीमतामपि । व्योम्नीव विष्किरपदं[६], मीनक्रम इवाम्भसि ॥ ४९ ॥ तज्ज्ञानं च विना नाथ !, वेत्सि त्वं सकलाः कलाः । इति प्रवदतामेषां, गीरङ्गीक्रियते कथम् ? ॥ ५० ॥ तन्निशम्य नृपः सम्यग् . दध्यावध्याममानसः[७] । सत्यमस्य वचो नूनमनूनज्ञानशेवधेः ॥ ५१ ॥ नीतिशास्त्रादिसंवादिवचनं ह्यस्य तेषु यत् । पारावारादप्यपारं, कुस्त्रीचरितमीरितम् ॥ ५२ ॥ सत्यप्येवं परीक्षेऽहं, सत्य-

---

१ विचारपूर्वकम् । २ प्रतिकूलम् । ३ उत्तमसुरतक्रीडाभिः । ४ मनुष्याणाम् । ५ मत्तं करोतीति । ६ पक्षिचरणम् । ७ निश्चिन्तमानसः ॥

मप्येतदात्मना। न किं जात्यमपि स्वर्णं, परीक्ष्येत तदर्थिभिः ? ॥ ५३ ॥ कन्यामन्यां शठंमन्यां काञ्चित् परिणयाम्यहम्। कषोपलोपमां वाक्यस्वर्णस्यास्य परीक्षणे ॥ ५४ ॥ विमृश्येति विशामीशः, प्रत्यासन्नेऽशनक्षणे। सभाजनं विसृज्यागात्, स्नानवेश्म मनोरमम् ॥ ५५ ॥ तत्र स्नात्वा स विधिना, गत्वा च जिनसद्मनि। अर्हतामर्हणामस्तगर्हणां विदधे विभुः॥५६॥ ततोऽसौ भोजनस्थानमागतो बुभुजे सुखम्। दिनशेषं विशेषज्ञैः, समं गोष्ठ्या समत्यगात् ॥ ५७ ॥ अथ ज्ञात्वेन्दुभर्त्तारं, निशायां संगमोद्यतम्। सन्ध्यारागाङ्गरागाढ्या, गगनश्रीरजायत ॥ ५८ ॥ यस्योदयोऽस्ति तस्यास्तमप्यस्तीतीव सूचयन्। तदार्यमा जगामास्तमस्तपर्वतमस्तके ॥ ५९ ॥ खगमस्तङ्गतं वीक्ष्य खगाः कोलाहलं परे। चक्रिरे स्वस्ववाग्योगैस्तद्वियोगासहा इव ॥ ६० ॥ लोकंपृणार्कभूपास्तैर्ध्वान्तैर्लोकापकारिभिः। तदा प्रस्फुरितं चौरैरिवावसरवेदिभिः ॥ ६१ ॥ संकुचत्पद्मवदनास्तदा निःश्रीकतां गताः। वीक्ष्याऽब्जिन्यः स्वकान्तास्तं, मम्लुः सत्य इव द्रुतम् ॥ ६२ ॥ ततस्तत्ताभियोगोऽसौ, कृतसान्ध्यविधिः कृती। शुद्धात्मागत्य शुद्धान्तं, भेजे तल्पमनल्पधीः ॥ ६३ ॥ तत्र वारवधूवारोपचारैरपि स प्रभुः। नाप स्वापं कोविदोक्तमर्थं स्त्रीगोचरं स्मरन् ॥६४॥ दध्यौ च वामवामाक्षीदुश्चरित्रं विदामपि। दुर्बोधमुक्तं तत्कीदृग्, भावि द्रक्ष्यामि वा कथम् ? ॥ ६५ ॥ दिदृक्षा यद्यपीदृक्षाऽस्मादृक्षाणां न युज्यते। खलाः खलु परच्छिद्रवीक्षासज्जा न सज्जनाः ॥ ६६ ॥ मया वीक्ष्यं तथाऽप्येतन्निर्णेतुं तत्सुधीवचः। सम्यग् वीक्षां विना वस्तुनिर्णयः खलु दुष्करः ॥ ६७ ॥ शिष्टगीर्न मृषा यद्यप्यहं वीक्षे तथाऽप्यदः। श्रुताद् दृष्टं विशिष्टं हि, शिष्टं शिष्टजनैर्ननु ॥ ६८ ॥ अद्यैव च परीक्षा सा, विधातुमु-

१ पूजाम्। २ सूर्यम्। ३ पक्षिणः। ४ यस्मात्। ५ उक्तम् ॥

चिता मम । कार्यौत्सुक्ये विलम्बो हि, भवेदरतिकारणम् ॥ ६९ ॥ विमृश्येति भुवो भर्त्तैकाकी नाकीव शक्तिमान् । नीलाम्बरो बल इव, निशितासिकरो निशि ॥ ७० ॥ निर्गत्यान्तःपुरादन्तःपुरं छन्नतया भ्रमन् । द्वे कन्यके क्वचित् क्रीडासक्ते व्यक्ते ददर्श सः ॥ ७१ ॥ युग्मम् ॥ संलापं स तयोः श्रोतुं, तत्र यावदवास्थितः । तयोरेकाऽवदत्तावत्, स्वभावसरला कनी ॥ ७२ ॥ हलेऽहं विहितोद्वाहा, सोत्साहा स्वपतिं सदा । सेविष्ये परमप्रीत्या. नीत्यायातमिदं खलु ॥ ७३ ॥ गृहभारस्य वोढायां, त्रिवोढाज्ञां प्रदास्यति । सततं तां वहिष्येऽहं, शिरसा सरसा हृदि ॥ ७४ ॥ पतिव्रतानां स्त्रीणां हि, भवेद्भर्त्तैव दैवतम् । तदाज्ञाराधनं तासां, तद्धर्मपरमो मतः ॥ ७५ ॥ उक्तं हि—

न दानैः शुद्ध्यते नारी, नोपवासशतैरपि । अव्रताऽपि भवेच्छुद्धा, भर्तृहृद्गतमानसा ॥ १ ॥

अन्धं च कुब्जकं चैव, कुष्टाङ्गं व्याधिपीडितम् । जीवितावधि भर्त्तारं, पूजयेत्सा महासती ॥ २ ॥

त्यजेत्पुत्रं च मित्रं च, पितरावपि शोभनौ । जीवितावधि भर्त्तारं, न त्यजेत् सा महासती ॥ ३ ॥

इति नीतिवचोमन्त्राकर्णनाभ्रष्टघृष्टता । आजन्माराधयिष्ये स्वं, धवं राधेव माधवं ॥ ७६ ॥ तदाकर्ण्यापरा शाठ्यधरारुहधराऽवदत् । मुग्धे ! किमिवं वक्षीदं, जाड्यालस्यादिसूचकम् ॥ ७७ ॥ सतीत्वलालसा त्वादृक्, स्याद्बुद्धिविकलालसा । दक्षा मादृक्षा तु सर्वं, स्वाभीष्टं साधु साधयेत् ॥ ७८ ॥ अहं हि जातवीवाहा, गता च श्वशुरालयम् । करिष्ये कान्तमेकान्तासक्तं नानाप्रलोभनैः ॥ ७९ ॥ परैरपि नरैः प्रेम, विधास्ये गुणबन्धुरैः । नानारसार्थिनी भृङ्गी, नैकमेव द्रुमं भजेत्

१ निपुणे । २ किमतैरिव शब्दयोजनं कथयस्यर्थमभिन्नमेव हि । किमिवास्ति सुखं शरीरिणां विषयातीवविलुप्तचेतसाम् ॥ १ ॥

॥ ८० ॥ क्वं चातुर्यमप्येकनरासक्तौ भवेत्कथम् ?। अनेकच्छेकसख्यं हि, प्रोक्तं चातुर्यकारणम् ॥ ८१ ॥ प्रौढस्त्रीणामसङ्गोऽपि, शाम्येदेकनरेण किम् ?। एकेनाम्बुघटेनेवारण्यानीनां दवानलः ? ॥ ८२ ॥ एकस्त्रिया न तुष्यन्ति, कामिनो मानवा अपि। तेभ्यो भूयिष्ठकामाक्षी, तुष्येदेकनरेण किम् ?॥ ८३ ॥ यदुक्तम्—

नाग्निस्तृप्यति काष्ठानां, नापगानां महोदधिः। नान्तकः सर्वभूतानां, न पुंसां वामलोचनाः ॥ १ ॥

यद्दक्षापि सती स्यात्तत्, तादृक् पुंसोऽसमागमात्। तादृशान्याश्रयालाभाच्छ्रयन्त्यम्बुधिमापगाः ॥८४॥ सदालि ! शालिलावण्यमौलि ! मालिन्यहृत्तनोः। पुण्यं तारुण्यमासाद्य, कामिचित्तैककार्मणम् ॥ ८५ ॥ करिष्येऽहं त्रिचतुरैश्चतुरैः प्रेमसज्जनैः। यथाऽवकेशिनः साम्यं, यौवनं लभते न मे ॥ ८६ ॥ युग्मम् ॥ अथाध्यासीदिति श्रुत्वा, तत्संलापमिलापतिः। अहो! मिथो विसंवादि कन्ययोर्मतमेतयोः ॥ ८७ ॥ असौ सौम्या शठा चेयं, शैशवादप्यहो ! कथम् ?। यद्वा केन कृता द्राक्षा, मधुरा तुम्बिका कटुः ?॥८८॥ यद्यप्याद्या सतीत्वेन, संस्तवार्हा तथाऽप्यहम्। स्वीकरिष्येऽपरां कार्यविशेषादसतीमपि ॥ ८९ ॥ चिकीर्षितो निर्णयो हि, स्यादीदृश्यैव नान्यया। जायते स्वर्णमानं हि गुञ्जया न तु मुक्तया ॥ ९० ॥ एनां पाणौकृत्य कृत्यं, करिष्ये चिन्तितं शनैः। त्वरया कार्यकरणं, वरणं विपदां खलु ॥ ९१ ॥ किं च—मद्बुद्धिरुद्धा यद्येषा, स्वेष्टं कर्त्तुं न शक्ष्यति। तदास्या दाक्ष्यदर्पोऽपि, दौष्ठ्येन सह नंक्ष्यति ॥ ९२ ॥ ध्यात्वेति तत्र ताम्बूलोद्गालक्षेपादिचिह्नकृत्। कृतकृत्य इवामन्दानन्दोऽगात् स्वगृहं नृपः ॥ ९३ ॥ स्वल्पनिद्रस्तत्र तल्पं, बभाज गुणभाजनम्। उपास्य च क्षणं

१ धारि ॥

निद्रां, निशाशेषे व्यबुद्ध्यत ॥ ९४ ॥ तदा च स्वद्विषोऽर्कस्यागमं संभाव्य नश्यतः । निशा स्वसूनोर्ध्वान्तस्य, पृष्ठेऽभूद्गन्तुमुत्सुका ॥ ९५ ॥ भाविस्वकान्ताविरहतीव्रदुःखात्तदाद्रुतम् । विधुर्विधुरतां भेजे, विच्छायः स न चेत्कथम् ? ॥ ९६ ॥ द्रष्टुं पेष्टुं च तां स्वामिदुर्दशामसहा ग्रहाः । तदा ह्रीणा इव क्षीणांशवः प्रापुरदृश्यताम् ॥ ९७ ॥ प्राची प्रेक्ष्यारुणं रागारुणं प्राचीनसंस्तवात् । सुप्रकाशस्मिता रागं, दधौ सन्ध्यामिषात् स्फुटम् ॥ ९८ ॥ भानुः स्वप्रग्रहग्रस्तोदग्रग्रहमहःस्मयः । पूर्वाद्रिमौलौ माणिक्यमौलितामाश्रयत्तदा ॥ ९९ ॥ तदा बालातपैः सूर्यो, द्यावाभूम्यावभूषयत् । प्रेयानिव समप्रेम्णा, स्वपत्न्यौ कुङ्कुमद्रवैः ॥ १०० ॥ तदा मित्रकरैः स्पृष्टास्तन्द्रां पद्मव्रजा जहुः । स्ववाक्यैः स्वागतं मित्रमप्राक्षुः पक्षिणो मुहुः ॥ १०१ ॥ तदा पयोधेः सौधाच्च, रविं क्ष्मापं च निर्गतम् । शिष्टास्तुष्टुविरे तुष्टास्तेजःपुञ्जविराजितम् ॥ १०२ ॥ प्रभातविधिमासूत्र्य, महीमान् महिमाश्रयः । आस्थानमण्डपमलञ्चक्रे व्योमेव भानुमान् ॥ १०३ ॥ साभिज्ञानं ततो गेहाद्युदीर्य प्रेष्य चानुगान् । तातं स तस्याः कन्यायाः, न्यायाढ्योऽजूहवन्नृपः ॥ १०४ ॥ तं चायातं स सम्मान्यः, सम्मान्याऽभीष्टया गिरा । स्माह श्रेष्ठिन् ! स्वपुत्रीं मे, देहि दक्षमतल्लिकाम् ॥१०५॥ श्रेष्ठभूयिष्ठभार्योऽपि, परिणेष्याम्यमूमहम् । आमुक्तमुक्तामालोऽपि, धत्ते पुष्पस्रजं न किम् ? ॥ १०६ ॥ तन्निशम्याभ्यधादिभ्यः, स्वामिन् ! सा परिणीयताम् । दिष्ट्या ते सौम्यदृष्ट्यापि, संबन्धः किं पुनस्त्वया ? ॥ १०७ ॥ कन्यां धन्यां वयं मन्यामहे या काम्यते त्वया । गौरी गौरीषु किं नार्च्या, यां महेशः समीहते ? ॥ १०८ ॥ इत्युदित्वा गृहं गत्वा, परिष्कृत्य निजाङ्गजाम् । पृथ्वीपतिमुपानिन्ये, हरिं पद्मा-

१ असमर्थाः । २ पुरातनपरिचयात् । ३ किरण । ४ हर्षेण । ५ अलङ्कृत्य ॥

मिवोदधिः ॥ १०९ ॥ तदैव दैवज्ञगिरा, नृपतिः परिणीय ताम् । इष्टिकाजातजातैकस्तम्भस्थे धामनि न्यधात् ॥ ११० ॥ स्तम्भे तस्मिन् गृहाधारे, सुधालेपातिकोमले । कीटिका अपि नारोढुमशकन् किं पुनः परः ? ॥ १११ ॥ स्वयं त्वग्निकवेतालबलात्तत्र ययौ नृपः । कृशाम्बीवाऽकृशां[1] रागदशामभिनयन्नयम् ॥ ११२ ॥ कल्पवृक्ष इवाभीष्टामदनाच्छादनादिकाम् । ददौ स तस्यै सामग्रीं, समग्राम[2]ग्रणीः सताम् ॥ ११३ ॥ दध्यौ सा तु महीशोऽयं, विना हेतुं रिपुर्मम । यन्मामिह गृहेऽक्षैप्सीत्, सारिकामिव पञ्जरे ॥११४॥ अथ चेन्मामिह क्षिप्त्वा चिकीर्षति सतीमसौ । तदान्या अपि किं स्वस्त्रीर्द्धाम्नि न क्षिपतीदृशे ?॥११५ ॥ यद्वा सख्या समं वार्त्ता, या मया निशि निर्मिता । तामश्रौषीदसौ नूनं पर्यटन्नष्टचर्यया ॥११६॥ तदा मदाश्रितं दाक्ष्यमदावेशमुदीक्ष्य वै । कर्त्तुं तदुपचारं मामुदुवाहैष मन्त्रवित् ॥ ११७ ॥ तत एव प्रतिज्ञाततीव्रभावां च मामसौ । कोशे[3] शस्त्रीमिवेशः स्त्रीकृत्य धाम्नि न्यधादिह ॥ ११८ ॥ अस्तु वस्तुस्वभावाज्ञोऽनेन वाऽन्येन हेतुना । मां रक्षितुं सोद्यमोऽसौ, न तु रक्षितुमीश्वरः ॥ ११९ ॥ यद्वाऽनेन विमर्शेनाधुना कृतमसाधुना । कुर्वे कालोचितं स्वालोचितं त्वग्रे विधास्यते ॥ १२० ॥ दम्भाम्बुवापी सापीति, श्रयन्ती प्रश्रयं बहिः । मनो रञ्जयितुं राज्ञश्चारुचाटून्यनाटयत् ॥१२१॥ मुग्धभावं च सा दुग्धमुखीवादर्शयत्तथा । सोऽप्रगल्भां यथाऽमंस्त, तां विदग्धां विदन्नपि ॥ १२२ ॥ आनुकूल्यरसः स्त्रीणामिति चेतसि जानती । भूपचित्तानुवर्त्तित्वं, प्रपेदेऽप्रेरिताऽपि सा ॥ १२३ ॥ अतुल्येनानुकूल्येन, तस्या राजाऽपि रञ्जितः । तां बभाजानुकूल्यं हि निर्मन्त्रं विश्वकार्मणम् ॥ १२४ ॥ सान्यदोचे नृपं स्वामिन्!, गमयामि कथं दिनम् ? । निर्व्यापारा

---

१ नट इव । २ पुष्टाम् । ३ शस्त्री यथा तीव्रतायुक्ता कोशे क्षिप्यते तथा मा स्त्रीकृत्य असौ ईशोऽत्र धाम्नि न्यधात् ॥

गात्रमात्रपरीवाराऽहमन्वहम् ॥ १२५ ॥ दिनैस्त्रिचतुरैरत्र, त्वं यत्राभ्येषि तद्दिनम् । सा क्षपा च क्षणायेते, वर्षायेते परे तु ते ॥ १२६ ॥ ततो लेखनसामग्रीं, मषीमुख्यां प्रदेहि मे । व्याक्षेपेण यथाऽनेन, कालक्षेपं करोम्यहम् ॥ १२७ ॥ तत्प्रार्थितः पार्थिवोऽपि, सदयः समपादयत् । पिप्रिये साऽपि प्रियेऽन्तर्नीरागा बाह्यभक्तिभाक् ॥ १२८ ॥

इत्थं नरेन्द्रो विविधैरुपायैरावर्जयत्तां दयितां तदिष्टैः ।
वशाऽपि साऽपिप्रिणदिङ्गितज्ञा, बाह्योपचारैर्वसुधाधवं तम् ॥ १२९ ॥

॥ इति श्रीतपागच्छाधिराजश्रीविजयदानसूरीश्वरशिष्यमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्याय-
श्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिविरचितायां
चम्पकमालाकथायां प्रथमः प्रस्तावः ॥

---

अथागात्तत्र गगनधूलिनामापरेद्यवि । सार्थनाथोऽर्थरूपाभ्यां, श्रीदश्रीनन्दनौ जयन् ॥ १ ॥ सोऽरञ्जयच्छलवस्तुसंभृतैः प्राभृतैर्नृपम् । सोऽपि तुष्टोऽमुचच्छुल्कं, तत्सार्थस्यार्थशेवधेः ॥ २ ॥ सदावासं च वासार्थं, सार्थपायार्पयन्नृपः । पण्यैः पुण्यैरगण्यैः स्वैर्भृत्वा सोऽप्यध्युवास तम् ॥ ३ ॥ याप्ययानगतं तं च, स्वगृहासन्नवर्त्मना । यान्तं भूपसभेऽन्येद्युरद्राक्षीत् सा नृपाङ्गना ॥ ४ ॥ दध्यौ चैवमहो! एषः, पुमान् सम्मानमङ्गतः । उल्लासयति मां नेत्राध्वना मन्मानसं गतः॥५॥ वर्णः सकर्णवर्ण्योऽस्य सौभाग्यं भुवनोत्तरम् । रूपमप्रतिरूपं च, न स्यात् कस्याद्भुतावहम् ॥ ६ ॥ अहं स्वे लोचने धन्ये, मन्ये याभ्यामयं पुमान् । लावण्यजलधिर्दृष्टोऽदृष्टोज्झितसुदुर्लभः ॥७॥ दृष्टोऽसौ सुभगोत्तंसो, न यया तज्जनिर्मुधा । दृष्टोऽपि परिरब्धोऽयं न यया तज्जनिर्मुधा ॥ ८ ॥ विधे! विधेहि पक्षौ मे, निधेहि करुणां मयि । यथोड्डीयाङ्ककमलमलङ्कुर्वेऽस्य मञ्जुलम् ॥ ९ ॥ चेतः! प्रसीद त्वं बाह्वोर्देहि विद्यां प्रसारिणीम् । अमू यथा प्रसार्यामुं, मनोऽभीष्टं परिष्वजे ॥ १० ॥ अद्यास्य दर्शनान्नेत्रे, यथा सफलतां गते । तथाऽस्य स्पर्शनाद्भावि, साफल्यं वपुषः कदा? ॥ ११ ॥ ध्यायन्तीति तदेकाग्रमनास्तस्मिन् गतेऽपि हि । वीक्षापन्नतया वीक्षामास तन्मार्गमेव सा ॥ १२ ॥ क्षणान्तरे च सा सावधाना दध्याविदं हृदि । ममास्य संयोगमृते, मृतेर्योगोऽपि संभवेत् ॥ १३ ॥ सङ्गोपायं तदस्य द्राक्, कुर्वे कञ्चन जीवितुम् । क्रियते जीवनोपाये, विलम्बो नालसैरपि ॥ १४ ॥ ध्यात्वेति धनिनस्तस्य, स्वाशयावेदनाशया । गताऽश्लोकभया श्लोकयुगं पत्रे लिलेख सा ॥ १५ ॥ तच्चैवम्—"नाथ! प्रदोषसंरुद्धसञ्चारा पद्मसद्मगा । भृङ्गी समीहते चिन्ताचान्ता मित्र! तवागमम् ॥ १६ ॥

---

१ आलिङ्गितः । २ अमू बाहू । ३ आलिङ्गामि । ४ विलक्षतया । ५ अयशोभयम् ॥

तदुपेक्षां भवान् भास्वन्, कर्त्ता चेत्तदभाग्यतः । हताशान्तकसंयोगं, तदा सा लप्स्यते ध्रुवम्" ॥ १७ ॥ इति श्लोकद्वयीपत्रं क्षिप्त्वा सत्पत्रबीटके । सा प्रत्यागच्छतस्तस्योत्सङ्गे दक्षाऽक्षिपतद्रुम् ॥ १८ ॥ तद्वीक्ष्य गगनायातं, दत्तं देवतयेव सः । ऊर्द्ध्वं पश्यन्नपश्यत्तां, गवाक्षस्थां मृगेक्षणाम् ॥ १९ ॥ तां च पश्यन्निर्निमेषमेष मेष इवोन्मदः । न बिभाय न जिह्राय, भीह्रियौ क्व नु कामिनाम् ? ॥ २० ॥ दध्यौ च हृदि मामेषा, पश्यन्ती स्निग्धया दृशा । ज्ञापयत्यान्तरं रागं, न ह्यरागैवमीक्षते ॥२१॥ नागवल्लीदलानां मे, बीटकं रागमालिनाम् । सत्यङ्कारमिव प्रेम्णस्तत एवेयमार्पयत् ॥ २२ ॥ तद्वीक्षे बीटकं सम्यग्, रागिण्याऽर्पितमेतया । सामान्यमपि मान्यं हि, वस्तु रागिजनार्पितम् ॥ २३ ॥ ध्यात्वेति बीटकं वीक्षमाणः श्लोकद्वयाङ्कितम् । पत्रं ददर्श तन्मूर्त्तमिव मन्मथशासनम् ॥ २४ ॥ तत्तन्मानसकोशस्थरागशेवधिबीजकम् । प्रवाच्य भृशमुत्कण्ठां, भेजे तत्सङ्गमाय सः ॥ २५ ॥ दध्यौ चास्या अहो ! रूपमहो ! लावण्यमुल्वणम् । अहो ! दाक्ष्यमहो ! स्नेहोऽन्योक्तिकौशलमप्यहो ! ॥ २६ ॥ दर्शनस्पर्शरागाः स्युरीदृशां हि मृगीदृशाम् । यथोत्तरं दुरापास्तन्नोपेक्षास्या ममोचिता ॥ २७ ॥ उपेक्षिता क्षिताशासौ, वशा कामदशावशात् । म्रियेत चेत्तदा स्यान्मे, स्त्रीहत्यापातकं महत् ॥ २८ ॥ तदुपायेन केनापि, मया गन्तव्यमेकशः । तस्याः समीपे पश्चात्तु, करिष्ये समयोचितम् ॥ २९ ॥ ध्यायन्निति गतः सौधं, मित्रायाऽसौ न्यवेदयत् । तां वार्त्तां परमप्रेमनिधयेऽम्बुधये धियाम् ॥ ३० ॥ ऊचे च मित्रेदं कार्यं, दुःसाधं प्रतिभाति मे । यदेकस्तम्भसौधस्थाभिसर्त्तव्या नृपाङ्गना ॥ ३१ ॥ न यामि चेत्तदा कामविवशा म्रियतेऽपि सा । तत्किं करोम्यहं पश्यन्निति तो व्याप्रमितस्ततटीम् ॥३२॥ यद्वा त्वदीयसाहाय्याद्भाव्यसंभाव्यमप्यदः । स्थपतेरुद्यमाद्भेजे, राट्सुतां कौलिको न किम् ? ॥ ३३ ॥ रजोऽपि वायुसा-

हाय्यादारोहति गिरेः शिरः । असहायो मणिरपि, न याति क्रममप्यहो ! ॥ ३४ ॥ तन्मन्ये कार्यमेतन्मे, साहाय्याद्धीमत-स्तव । भावीत्याकर्ण्य सङ्क्रान्ततदुःखः सोऽप्यदोऽवदत् ॥ ३५ ॥ सखे! सखेदं मा मेदं, वादीत्रादीव हीलितः । नासाध्यं कष्टसाध्यं वा, ममेदं वृद्धसेविनः ॥ ३६ ॥ वृद्धेभ्यो हि श्रुतं गोधा. चन्दनाह्वा महाबला । याति गेहे दुरारोहेऽप्यारोहाय सहायताम् ॥ ३७ ॥ कुतोऽप्यानीय तां तस्मान्नेष्यामि त्वां तदन्तिकम् । दीनं तद्विरहान् मीनमिव नीरवियोगतः ॥ ३८ ॥ त्वदीयहार्दसौहार्दप्रणुन्नोऽकार्यमप्यदः । करिष्येऽग्निरिवोदग्रवायुनुन्नो वनक्षयम् ॥ ३९ ॥ तन्मा कृथा वृथा चिन्तां, मति-मोहविधायिनीम् । चितातोऽप्यधिकां जीवज्जनज्वालनकर्मणा ॥ ४० ॥ स्वस्थीकृत्येति तं क्वापि, ग्रामे गत्वा स तस्करात् । प्राक् संस्तुताच्चन्दनाह्वगोधां तच्छिक्षितां ललौ ॥ ४१ ॥ तामादाय घटे क्षिप्तां सार्थेशेन समन्वितः । हस्तमात्रान्तराबद्ध-ग्रन्थिना रश्मिना युतः ॥ ४२ ॥ तस्यैकस्तम्भसौधस्य, संनिधौ सोऽगमन्निशि । घटादाकृष्य गोधां तत्कक्ष्यां रज्जुं बबन्ध च ॥ ४३ ॥ युग्मम् ॥ वंशमारोप्य सा तेनोदस्ता सीत्कारपूर्वकम् । गवाक्षे व्यलगद्गाढं, तत्रोत्कीर्णेव शिल्पिभिः ॥ ४४ ॥ सार्थेशोऽथ सुहृद्वाचा, हस्तयुग्मात्तरज्जुकः । पादाङ्गुष्ठाङ्गुलीमध्याक्रान्ततद्ग्रन्थिसन्ततिः ॥ ४५ ॥ तत्रारोहन् दुरारोहेऽ-प्यभीकस्तद्दिदृक्षया । प्राप वातायनं लङ्क. इव वंशाग्रमाशया ॥ ४६ ॥ युग्मम् ॥ तद्वयस्यस्तु तां गोधां, फूत्कारेण समा-गताम् । घटे क्षिप्त्वा निलीयास्थात्, क्वापि तत्सौधसंनिधौ ॥ ४७ ॥ सार्थनाथः पुनर्दीपोद्द्योतादेकाकिनीं स ताम् । विज्ञाय प्राविशत्तस्याः, सदने मनसीव सः ॥ ४८ ॥ सा पूर्ववीक्षिततया, तं झगित्युपलक्षितम् । अभ्युत्तस्थौ समं रोमह-

१ मित्रदुःखः । २ उत्क्षिप्ता । ३ एकस्तम्भसौधे ॥

र्वैर्हर्षभरोत्थितैः ॥ ४९ ॥ कटाक्षैर्लक्षयन्ती तं, पूजयन्तीव कैरवैः । सुस्मिता विस्मिता प्राक्षीन्मृगाक्षी स्वागतं च सा ॥५०॥ ऊचे च निर्विकल्पं मत्तल्पं स्वापायकल्पितम् । अलङ्कुरु कुरु प्रेमशाखिनं सफलं चिरात् ॥ ५१ ॥ ततः स तस्यां शय्यायां, सज्जायां समुपाविशत् । सुधामुधाकारिगिरा, ततो भूयोऽपि सेत्यवक् ॥ ५२ ॥ यतः प्रभृतिदृष्टस्त्वं, गच्छन् स्वच्छमतेऽध्वनि । तदादि कुरुते कामं, कामः कामपि मे व्यथाम् ॥ ५३ ॥ नष्टा निद्रा बुभुक्षा च, मम वेदनयाऽनया । भवत्सङ्गमपीयूषपिपासाऽ वर्द्धताधिकम् ॥ ५४ ॥ तदद्य हृद्य ! हृद्यस्मात्, स्मृत्वेदं सुन्दरं व्यधाः । भियं राज्ञोऽप्यवज्ञाय, यदिहागाहुरागमे ॥ ५५ ॥ तत्कृतार्थीकृतागत्य, यथा मे प्रार्थना त्वया । तथा स्वाङ्गेन सङ्गत्य, मां सार्थेश ! कृतार्थय ॥ ५६ ॥ सोऽभ्यधाद्वीटकान्तःस्थपत्राद् ज्ञात्वा त्वदाशयम् । स्वस्थीकर्त्तुं त्वामिहागां, न तु रन्तुं त्वयानघे ! ॥ ५७ ॥ भोग्या नान्यस्त्रीति नीतिधर्मशास्त्रवचः स्मरन् । सेवेऽन्यामपि नान्यस्त्रीं, किं पुनस्त्वां नृपप्रियाम् ? ॥ ५८ ॥ परलोकविरुद्धेऽपि, प्रवृत्तिर्नोचिता सताम् । लोकद्वयविरुद्धेऽस्मिन्, प्रवर्त्ते तत्कथं ? शुभे ! ॥ ५९ ॥ प्रेत्यभीतिमदृश्यत्वात्, प्रेम्णावगणयाम्यपि । तां प्रत्यक्षां पार्थिवोत्थामैहिकीं जरये कथम् ? ॥६०॥ दण्ड्यते स्वाङ्गनाशाद्यैरन्योऽप्यन्यायकृन्नृपैः । यत्पुनस्तद्वशासक्तो, दण्ड्यते तत्र का कथा ? ॥ ६१ ॥ पुन्नागा नागवन्नागः, सहन्ते सुहृदामपि । भुजङ्गे भूभुजङ्गे च, क्षान्तिः, प्रीतिश्च दुर्लभा ॥ ६२ ॥ नाकस्मान्मृत्युदं तस्मात्, त्वत्सङ्गं कर्त्तुमुत्सहे । किं पाकोऽपि हि किम्पाकमश्नीयात्तद्विपाकवित् ? ॥ ६३ ॥ तन्मार्मथि गृहान् गन्तुं, कृपां कृत्वा समादिश । त्वत्प्रेमपाशमुक्तोऽहं जीवामि ससुखं यथा ॥६४॥ यदुक्तम्—

१ अवाच्याम् । २ परलोकभयम् । ३ भीतिम् । ४ अपराधम् । ५ शिशु. । ६ "अपि" इत्यपि ॥

तावदेव सुखं यावन्न कोऽपि क्रियते प्रियः । प्रिये तु विहिते सद्यो, दुःखेष्वात्मा नियोज्यते ॥ १ ॥

साचख्यौ यदि मे स्वास्थ्यं, कर्तुमागास्तदा तु माम् । रमय स्फारदुर्वारमारापस्मारविह्वलाम् ॥ ६५ ॥ स्वस्थीभावो हि भावत्कभोगाभोगं विना न मे । ऋतेऽम्बु तृषितस्येव, बुभुक्षोर्वा विनाऽशनम् ॥ ६६ ॥ स्वास्थ्ये सत्येव नीत्यादिवाक्यमासेव्यते बुधैः । तदभावे त्वपि प्राज्ञैर्निषिद्धमपि सेव्यते ॥ ६७ ॥ यदुक्तम्—

निषिद्धमप्याचरणीयमापदि, क्रिया सती नावति यत्र सर्वथा ।

घनाम्बुना राजपथेऽतिपिच्छिले, क्वचिद्बुधैरप्यपथेन गम्यते ॥ १ ॥

तथा—

स्वस्थावस्थे शरीरे हि, निषिद्धं सद्भिरौषधम् । विपर्यये तु तैरेव तदप्याद्रियते ध्रुवम् ॥ १ ॥

सर्वत्रोत्सर्गापवादौ दृश्येते वाङ्मयेष्वपि । प्रस्तुतार्थेऽपि सार्थेशापवादवचनं शृणु ॥ ६८ ॥ कामार्त्तां वनितां प्रीत्या, याचमानां पुनः पुनः । भजमानां न भुञ्जीत, तं वै चण्डालदर्शनम् ॥ ६९ ॥ अपवादवचांस्येवं, स्मृत्यादीनां विदन्नपि । भोग्या नान्यस्त्रीति वाचा, किं मां वञ्चयते भवान् ॥ ७० ॥ सेहे प्रेत्यभयाद्दुःखं, तदोग्रं त्वद्वियोगजम् । दुःखादस्मान्महद्वीक्षे, साक्षात्तत्प्रेत्यजं यदा ॥ ७१ ॥ सविद्य ! विद्यते तावत्, परलोकस्य संशयः । तत्र दुःखं महदिति, शुद्धधीः श्रद्दधीत कः ? ॥ ७२ ॥ संशये परलोकस्य, तद्दुःखस्यापि संशयः । सन्दिग्धदुःखभीतेस्तत्करस्त्यजेदैहिकं सुखम् ? ॥ ७३ ॥

---

१ तद्दुःखम् । २ परलोकभवम् ॥

ऐहिकी राजभीर्योक्ता, सा तु तुल्यावयोर्द्वयोः । ज्ञातास्मद्दुर्नयो ह्येष, हन्यादावामुभावपि ॥ ७४ ॥ किं तु मय्यल्परागत्वात्, त्वं तां वेदयसे हृदि । अहं त्वयि त्वयि प्राज्यरागत्वात्तां न वेदये ॥ ७५ ॥ सङ्कोचरमपि स्नेहं, प्राणत्राणाय भीरुकः । जह्याच्छूरस्तु सत्प्रीतिकृते प्राणांस्तृणीयति ॥ ७६ ॥ उक्तं च केनचित्—

भवत्कृते खञ्जनमञ्जुलाक्षि ! शिरो मदीयं यदि याति यातु ।
दशाननेनापि दशाननानि नीतानि नाशं जनकात्मजार्थम् ॥ १ ॥

भवान्तरेऽपि सुप्रापाः, प्राणाः स्नेहः पुनः सताम् । दुष्प्रापः प्रेत्य तत्प्राणांस्त्रातुं मत्प्रेम कस्त्यजेत् ॥ ७७ ॥ राजा तु जातु जानीयान्नेदं ज्ञात्वाऽपि वा सहेत् । स्मरस्तु घस्मरोऽद्यैव, मां हताशां हनिष्यति ॥ ७८ ॥ तद्विमुञ्च वणिग्जातिसुलभं साध्वसं कृतिन् ! । मामामर्दय मद्दुःखं, मर्दयान्तर्दयां कुरु ॥ ७९ ॥ स्माहेभ्योऽद्रिप्रवाहेभ्योऽप्यस्थेम प्रेम योषिताम् । ता हि रक्ता विरक्ताश्च, जायन्ते क्षणमात्रतः ॥ ८० ॥ रक्ता च हरति द्रव्यं, या विरक्ता त्वसूनपि । तदर्थं देहसन्देहकार्यकार्यं करोति कः ? ॥ ८१ ॥ सोवाचायुक्तया वाचा, भवतः कृतमेतया । नार्यो नार्या न यत्सर्वा, न च सर्वे शुभा नराः ॥ ८२ ॥ दृश्यन्ते वज्रवत्केऽपि, पुरुषाः परुषाशयाः । विनाऽपि विप्रियं प्राणप्रियाप्राणापहारिणः ॥ ८३ ॥ स्त्रियोऽपि काश्चिद्वीक्ष्यन्ते, स्वकान्तविरहासहाः । जुह्वत्यः स्वं क्षणाज्ज्वालाजिह्वेऽनुगमनोद्यताः ॥ ८४ ॥ नार्योऽस्नेहा न तत्सर्वाः, सस्नेहा न नराः समे । महत् समानजातिष्वप्यन्तरं दृश्यते मिथः ॥ ८५ ॥ उक्तं हि—

---

१ भक्षणशीलः । २ भयम् । ३ अस्थिर. ॥

वाजिवारणलोहानां, काष्ठपाषाणवाससाम् । नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ १ ॥

हित्वा विमर्शं तत्सर्वं, प्रार्थनां मे कृतार्थय । दीनां स्वीकुरु मां कान्त !, त्वदेकायत्तजीविताम् ॥ ८६ ॥ तस्या वाणीं स वाणिन्याः, श्रुत्वान्तर्वाणिरप्यमूम् । तस्यां रक्तोऽभवत्को वा, व्यक्तोऽप्याभिर्न भिद्यते ? ॥ ८७ ॥ ततः स तां सतां मार्गं, विहायाङ्के न्यवीविशत् । गुणान् ज्ञानविवेकादीनुद्वास्य हृदयालयात् ॥ ८८ ॥ यतः—

जीवव्योम्नि ज्ञानभानुस्तावदुद्द्योततेतमाम् । कान्ता काम्बदनी यावद्रागाभ्रैः स्थगयेन्न तम् ॥ १ ॥

विवेकदीपो हृद्गेहे तावदेव प्रभासते । यावत् प्रबाधते श्यामाकटाक्षपवनो न तम् ॥ २ ॥

तावत् क्रीडन्ति हृत्सौधे, विनयादिगुणार्भकाः । यावन्नायाति तत्रोग्रो, रमणीरागराक्षसः ॥ ३ ॥

ततश्च तामसौ कामतामसौघहृतत्रपाम् । करणैर्विविधैः कामशास्त्रप्रोक्तैररीरमत् ॥ ८९ ॥ तां कामुकीं यथा कामं, कामी सोऽक्रीडयत्तथा । यथा सा काञ्चनीरागा, नीरागा भूपतावभूत् ॥ ९० ॥ अब्रवीत् साऽथ सार्थेशमेकशस्त्वत्समागमात् । नीलीरागा महाभाग !, जाताऽस्मि त्वय्यहं कृतिन् ! ॥ ९१ ॥ राहुः शशाङ्कमण्डल्या, इव तानवकृत्तनोः । मयाऽथ नाथ ! विश्लेषः, सोढुमीशिष्यते न ते ॥ ९२ ॥ प्रसद्य सद्यो मे देयास्तदा देयं स्वदर्शनम् । मा मां त्वदेकजीवातुं, सौभाग्यस्मर ! विस्मरः ॥ ९३ ॥ दिवसैः पञ्चषैरत्रायाति राजा तु जातुचित् । तत्ताध्वसान्मम प्रेमध्वंसं तन्मा कृथा वृथा ॥ ९४ ॥ आमेत्युक्त्वा गृहं गन्तुं, गवाक्षे तत्र सोऽगमत् । तयाऽनुगम्यमानोऽश्रुजलाप्लावितनेत्रया ॥ ९५ ॥ मित्रं प्रति

---

१ बहुशास्त्रवाक्याभिज्ञोऽपि । २ हरिद्रारागा ॥

ततः संज्ञां, चक्रे स प्राक् प्रतिश्रुताम् । तां श्रुत्वाऽऽगत्य सोऽपि द्राक्, प्राग्वद्रोधां मुमोच ताम् ॥ ९६ ॥ तत्पुच्छरज्जुमालम्ब्योत्तीर्णस्तूर्णं स मित्रयुक् । गेहं जगाम तां चित्ताभिमतां संस्मरन् भृशम् ॥ ९७ ॥ सा राजदयिता तूग्रतदीयविरहातुरा । आलिङ्गितकपिकच्छूरिव नाप रतिं क्वचित् ॥ ९८ ॥ तद्वियोगाग्निनाऽत्यर्थं, स्फूर्जता तन्मनोवने । चिन्ताज्वालाभिरज्वालि, तत्सातोरुतरुव्रजः ॥ ९९ ॥ तत्सङ्गतर्षोत्कर्षोऽथा, दुःखाद्वर्षायितं दिनम् । यूथभ्रष्टा कुरङ्गीव, कथञ्चित्साऽत्यवाहयत् ॥ १०० ॥ रात्रौ भूयोऽपि सार्थेशः, प्रेम्णाकृष्टस्तदन्तिके । प्राग्वदयौ वृष इवाकृष्टो नस्ताधराङ्गिना ॥ १०१ ॥ स्वां वशामिव निश्शङ्कं, रमयित्वा चिरं सताम् । निशाशेषेऽगमत्सौधमेवं चक्रे मुहुर्मुहुः ॥ १०२ ॥ उप्तो नेत्रारामिकाभ्यां, संसिक्तो वचनाम्बुदैः । तयोः प्रेमद्रुमः पुष्टिं, दधौ संभोगदोहदैः ॥ १०३ ॥ तौ बाढं निबिडस्नेहौ, निशाचन्द्रमसाविव । अन्योन्यविरहेऽगातां, विच्छायत्वं क्षणादपि ॥ १०४ ॥ ततो राज्ञ्या तया प्रोक्तस्तत्सौधस्तम्भमूलगाम् । सुरङ्गां स्वगृहान्मर्त्यैः, स विश्वस्तैरचीकरत् ॥१०५॥ स्तम्भभित्तिकृतद्वाराकृष्यतन्मध्यपूरणम् । तस्मिन्मनारक इव, सोपानान्यभितो न्यधात् ॥ १०६ ॥ विधाप्य स्तम्भमूलस्थद्वारान्ते शयनास्पदम् । स्तम्भाग्रेऽकारयद्गेहमध्ये द्वारमगोचरम् ॥ १०७ ॥ शिल्पिभिः सर्वमप्येतद्धनदानवशीकृतैः । छन्नं व्यधापयत् क्षिप्रं, वित्ताद्धा किं न जायते ? ॥ १०८ ॥ स्तम्बे भृङ्ग इव स्तम्भे, वसंस्तत्र स पद्मिनीं । राजहंसप्रियां सद्मसरो गत्वा बभाज ताम् ॥ १०९ ॥ नृपस्तत्रान्यदाऽऽयातः, प्रातःकाले ददर्श ताम् । चिह्नैः सद्यस्कसंभोगसूचकैरुपलक्षिताम् ॥ ११० ॥ अनावृतश्लथीभूतकबरीं शबरीमिव । विच्छिन्न-

१ राज्ञीपक्षे विच्छिन्ना पत्रलता पत्रवल्ली यस्याः सा तथा । क्रीडावनीपक्षे विशेषेण छिन्नपत्रा लता वल्ल्यो यस्यां सा तथा ॥

पत्रलतिकां, कपिक्रीडावनीमिव ॥ १११ ॥ उत्फुल्लगल्लसंलग्नताम्बूलरसलत्राम् । रतायासोद्भवन्निद्रामङ्कुचन्नेत्रपल्लवाम् ॥ ११२ ॥ गतकृत्रिमरागत्वाद्विरलारुणताञ्चितम् । रदक्षतपदैराढ्यमाबिभ्राणां रदच्छदम् ॥ ११३ ॥ तां वीक्ष्य क्षितिपो दध्यौ, हा धात्रीहापि रक्षिता । अन्यासक्ताऽभवदसौ, धिग् रामाः कामविह्वलाः ॥ ११४ ॥ चतुर्भिः कलापकम् ॥ एतत्कामितकल्पद्रौ, मय्यासक्तेऽपि सत्यसौ । सेवतेऽन्यं नरं स्त्रीणां, दुष्पूरत्वमहो ! महत् ॥ ११५ ॥ सती स्याच्चेदसौ तस्यादियं देहस्थितिः कथम् ? । स्यादेकस्याश्च ताम्बूलोद्गालादिकमियत्कथम् ? ॥ ११६ ॥ केनापि रसिकेनासौ, तन्नूनं रमतेऽन्वहम् । अहं तु मोहाद्व्यामोहाज्जानाम्येनां सतीमिति ॥ ११७ ॥ भियं ममाप्यनादृत्य, यो विशत्यत्र सोऽप्यहो ! । महत्साहसिको भावी, सिद्धो विद्याञ्जनादिना ॥ ११८ ॥ स च जारनरो नूनमिहासन्नो भविष्यति । सद्यस्कभोगलिङ्गाढ्यदेहाऽसौ दृश्यते यतः ॥ ११९ ॥ ध्यायन्निति स निर्ध्यायन्, भूनेता तत्र सर्वतः । काष्ठे कीटमिवाद्राक्षीत्, स्तम्भमध्यागतं न तम् ॥ १२० ॥ सोऽथागाद्गृहमज्ञातो, निद्राघूर्णितया तया । जिज्ञासुर्जारमार्जारं, तं स्त्रीप्रेमपयोहरम् ॥ १२१ ॥ ततश्छन्नं भ्रमन् रात्रावेष वेषान्तरं दधत् । अपश्यद्योगिनं कञ्चिद्भूरिविद्याबलाञ्चितम् ॥ १२२ ॥ कन्थया श्लथया मूर्त्तमाययेव वृताङ्गकम् । गृह्णन्तं चारुपक्वान्नपत्रपुष्पफलादिकम् ॥ १२३ ॥ तं वीक्ष्य जाताशङ्कोऽसौ, तदज्ञातोऽनुसञ्चरन् । तन्मठं प्राप्य कमठ इवासीन्निभृताङ्गकः ॥ १२४ ॥ युग्मम् ॥ यावत्तद्वृत्तवीक्षार्थं, तत्रैकाग्रोऽभवन्नृपः । तावदन्धारिकामध्यादाविश्चक्रे स बालिकाम् ॥ १२५ ॥ विद्यालघूकृतां विद्यान्तरेण तरुणीकृताम् । स तां भोजितपक्वान्नताम्बूलां बुभुजे

१ कृत्रिमरागस्ताम्बूलालक्तकादिः । २ विपरीतविनर्कान् । ३ अवलोकयन् । ४ घुणमिव । ५ स राजा । ६ कच्छप इव ॥

स्वयम् ॥ १२६ ॥ रमयित्वा चिरं सुप्ते, तस्मिन् योगिनि योगिनी । साऽपि स्वान्धारिकामध्यात्, प्रादुश्चक्रे स मुद्गकम् ॥ १२७ ॥ भृङ्गं भानुप्रभेवाञ्जान्तरं लघुतरं ततः । साऽऽविश्चक्रे विद्यया तं, कृत्वा प्रौढमरीरमत् ॥ १२८ ॥ कृतार्था तु लघूकृत्य, विद्यया तं समुद्गके । न्यधात् करण्डके नागं, संवेल्येवाहितुण्डिकी ॥ १२९ ॥ क्षिप्त्वान्धायामुपपतिसमुद्गं सोपपत्यगात् । तद्वीक्ष्य कौतुकं भूमानध्यासीदिति विस्मितः ॥ १३० ॥ गौरीं गिरीश इव यामवियुक्तां सदात्मना । अन्याङ्गसङ्गत्यागार्थं, लघूकृत्य दधात्ययम् ॥ १३१ ॥ साऽप्यन्यपुंसा रमते, क्रमते चेच्छया स्वया । सतीत्वन्यासमन्यासु, तत्कः कुर्यात्सुधीरपि ? ॥ १३२ ॥ भुङ्क्ते स्थिताऽप्युपपतिं, याऽभयोपपतिं सदा । सात्त्विकी तात्त्विकी साऽपि, भीरुरित्युच्यते कथम् ? ॥ १३३ ॥ यद्वा त्रैलोक्यजैत्रस्य, साहाय्यात्पुष्पधन्वनः । नैसर्गिकीमपि जहौ, भीरुतामबलाऽप्यसौ ॥ १३४ ॥ सुप्तो मृतोपम इति, लोकोक्त्या निर्भयाऽथवा ॥ सुप्तं पतिं मृतमिव, ज्ञात्वाऽसौ सेवते परम् ॥ १३५ ॥ नरोऽपि निशि सुप्तेऽस्मिन्, भाव्येष स्वीकृतोऽनया । विद्ययाऽयं वशीकृत्य, लघूकृत्य दधात्यसौ ॥ १३६ ॥ यस्याः प्रयोगादन्यस्य, लाघवं स्याद्गुरोरपि । विद्याऽपि भात्यविद्येव, सानयोः सन्नयोनयोः ॥ १३७ ॥ यद्वा विस्तारसङ्कोचौ, करोत्यङ्गिकजेषु या । सा विद्याऽपि न सामान्या, मान्या भानुप्रभेव मे ॥ १३८ ॥ दुश्चारिणीत्वमप्यस्याः संवृतं विद्ययाऽनया । न ज्ञायते यथा तस्या, मत्पद्व्या माययावृतम् ॥१३९॥ दौःशील्यमस्यास्तस्याश्च, स्वसंवेद्यमियच्चिरम् । करोमि परसंवेद्यमद्य वैद्य इवामयम् ॥१४०॥ मादृशामन्यदोषाविर्भावो यद्यपि नोचितः । तथाऽपि नासौ दोषाय, धूर्त्तदम्भप्रकाशने ॥ १४१ ॥ ध्यात्वेति भूधवो

१ उपपति पतिसमीपम् । २ अप्रतिबद्धा प्रवर्तते । ३ पतिसमीपे । ४ सता शोभनेन नयेन न्यायेन ऊनौ सन्नयोनौ तयोः, सन्न्यायरहितयोरित्यर्थः ॥

गत्वा, गेहं स सुखमस्वपीत् । निशान्ते च समुत्थाय, निशान्तात्तं मठं ययौ ॥ १४२ ॥ अत्याग्रहेण तं सिद्धं, भोजनाय निमन्त्र्य सः । स्तम्भहीनो महीनोऽगात्तदेकस्तम्भमन्दिरम् ॥ १४३ ॥ कारयित्वा रसवतीं, मर्त्यपट्टकाशनोचिताम् । पञ्चासनानि स्थालादिसनाथानि न्यवेशयत् ॥ १४४ ॥ निःश्रेणिकाप्रयोगेणारूढं तत्र स योगिनम् । कृतस्नानादिकर्माणमासयत् प्रथमासने ॥ १४५ ॥ क्षुधितायां स्वकान्तायां युष्माभिर्भोक्ष्यते कथम् ? । पङ्क्तिभेदो महापापं, मयाऽपि क्रियते कथम् ?॥ १४६ ॥ तदाविष्कृत्य सान्धार्याः, स्थाप्यतामन्यविष्टरे । तद्दर्शिनो विधेयस्य, विधेया वञ्चना न मे ॥ १४७ ॥ राज्ञेति साग्रहं प्रोक्तो, विममर्शेति योगवित् । यां नैक्षत जगच्चक्षुः, कथमैक्षत तामसौ ॥ १४८ ॥ निशि पर्यटता यद्वा, दृष्टा साऽनेन भाविनी । मर्मज्ञस्यास्य नाथस्य, नाऽथ स्याद्वञ्चना हिता ॥ १४९ ॥ ध्यात्वेत्याविष्कृत्य स द्राग्, विद्यया प्रौढतां गताम् । तां द्वितीयासने न्यास्थत्ततो राजेति तां जगौ ॥ १५० ॥ प्रादुष्कुरु प्रियं भद्रे !, स्वान्धारीस्थसमुद्गकात् । भोक्तुं युक्तं न शिष्टानां त्यक्त्वाऽभीष्टं क्षुधातुरम् ॥ १५१ ॥ भर्त्तुर्भिया ह्रिया च त्वं, माकार्षीर्मद्वचो मृषा । मदाज्ञाकारिकायास्ते, कर्त्ता ह्येष न विप्रियम् ॥ १५२ ॥ यथाऽयं त्वां दधानोऽदाद्योगित्वाय जलाञ्जलिम् । तं बिभ्रती सतीत्वाय, तथा त्वमपि पण्डिते ! ॥ १५३ ॥ तदेष तुल्यदोषत्वान्न त्वां दूषयितुं क्षमः । तुल्यदोषैः समं युक्तिर्निषिद्धा तार्किकैरपि ॥ १५४ ॥ तथा च तद्वचः—

यत्रोभयोः समो दोषः, परिहारोऽपि वा समः । नैकस्तत्र नियोक्तव्यस्तादृगर्थविचारणे ॥ १ ॥

किञ्च—

---

१ स्तम्भो जाड्यं तेन हीनः । २ राजा । ३ भवत्कान्तादर्शिनः । ४ वचने स्थितस्य । ५ छन्नं प्रियम् । ६ परिहारः समाधानम् ॥

रक्ष्यमाणा षडक्षीणममुनाऽक्षीणहृद्भुवा । त्वं ज्ञाताऽसि यथा तद्वत्, सोऽपि ज्ञातोऽस्त्ययं ! मया ॥ १५५ ॥ भियं ह्रियं च तद्दूरीकृत्योरीकृत्य मद्गिरम् । कान्तमाविष्कुरु स्वान्त, इव न्यस्तं समुद्गके ॥ १५६ ॥ इति राजाज्ञया वीतभयाकृष्य समुद्गकात् । तं तृतीयासने न्यास्थत्मा विद्याकृतगौरवम् ॥ १५७ ॥ ततो राजा जगौ राज्ञीं, योगिनीव त्वमप्यहो ! । मद्वाक्यं मानयाभीष्टमानयाशु निजं शुभे ! ॥ १५८ ॥ साऽऽह साहसभृन्नाहमित्वरीवाऽन्यगत्वरी । वेश्यादेश्या च नास्मीश ! तदेतत्कथ्यते कथम् ? ॥ १५९ ॥ प्राणाधारतया प्राणप्रियो नाथ ! त्वमेव मे । रक्षणाद्व्यापदापत्तौ, शरणं च त्वमेव मे ॥ १६० ॥ देव ! त्वमेव मे देवमणिः कामितपूरणात् । पोषकत्वाच्च भर्ता त्वं, जीवनाज्जीवितं च मे ॥ १६१ ॥ तदद्य यावन्नैवास्ति, त्वां विनाऽन्यः प्रियो मम । आमृतेस्त्वामृते नान्यं, करिष्यामि च वल्लभम् ॥ १६२ ॥ सर्वाभीष्टार्थदातारं, हित्वा त्वां स्वर्द्रुमोपमम् । करीरकल्पमपरं, सेवे स्यां करभी यदि ॥ १६३ ॥ कुलाङ्गजा कुलवधूर्नान्याप्यन्यं निषेवते । किं पुनस्त्वत्कुलधूरहं सत्कुलसंभवा ? ॥ १६४ ॥ तद्दीर्घदर्शिनां श्रेष्ठ !, सद्विपश्चिद्विपश्चिम ! । किमेतदविमृश्योक्तमसमञ्जसमञ्जसा ॥ १६५ ॥ तन्निशम्य नृपोऽध्यासीदहो! साहसभूरसौ । स्वदोषं निह्नुते सन्तं, मां कृत्वाऽलीकवादिनम् ॥ १६६ ॥ संवादयत्यसौ सौवचरित्रैस्तद्विदो वचः । तथाऽप्याविष्कारयिष्येऽनया जारं सदुक्तिभिः ॥ १६७ ॥ ध्यात्वेति भूधवोऽवादीदयि त्वं दयिते ! श्रृणु । दक्षब्रुवे ! ब्रुवे नाहमसत्यमसमञ्जसम् ॥ १६८ ॥ किं तु प्रातर्मया स्वैरमागतेन गतेऽहनि । दृष्टाऽसि सद्यः संभोगचिह्ना भोगाढ्यभूघना ॥ १६९ ॥ संभोगश्च न भोक्तारमन्तरेणोपपद्यते । तेना-

---

१ अत्यन्तकामिनेत्यर्थः । २ त्वां विना । ३ अपलपनि । ४ स्त्रीचरित्रं दुर्ज्ञेयमिति ॥

र्थापत्तिनिर्णीतमर्थं कथमपह्नुषे ॥ १७० ॥ प्रादुष्कुरु स्वोपपतिं, मुधा मा वञ्चयस्व माम् । मा भैषीस्त्वां च तं चाहं, न ह-
निष्यामि सर्वथा ॥ १७१ ॥ त्वया ह्याविष्कृते तस्मिन्, मत्तो नैवोभयोर्भयम् । विद्यादिभिर्मया त्वाविष्कृते तद्भावि
मृत्युकृत् ॥ १७२ ॥ श्रुत्वेति भीतिवात्यास्तगाढशाठ्याभ्रसंहतिः । द्यौरिवेषत्प्रसन्नेति, सा वचोभगणं दधौ ॥ १७३ ॥
सर्वंसह ! सहस्वामुं, मन्तुमप्युग्रमावयोः । मा भूच्चलाचलागीस्ते, सत्यसन्धाऽचलाचला ॥ १७४ ॥ इत्युदित्वा तया कृता-
त्सङ्केतात्तूर्णमागतः । चुक्षोभ सार्थपो भूपं, वीक्ष्यागस्त्यमिवोदधिः ॥ १७५ ॥ शीतज्वरार्त्तमिव तं, वीक्ष्य कम्पितभूघ-
नम् । नरेशः स्माह मा भैषीर्मन्तुः सोढो मया हि ते ॥ १७६ ॥ सार्थनाथः प्रणम्याथ, पृथ्वीनाथं कृताञ्जलिः । हर्षगद्गद-
गीरेवं, गुणविज्ञो व्यजिज्ञपत् ॥ १७७ ॥ दुष्टानामवतंसोऽहं, यत्कर्माकार्षमीदृशम् । शिष्टानामवतंसस्त्वं, यत्तदप्यसहः
प्रभो ! ॥ १७८ ॥ नृपा निर्मन्तुमप्यन्ये, ग्रसन्ते राक्षसा इव । त्वं तूग्रमन्तुमपि मां, बाधसे न शमीशवत् ॥ १७९ ॥ ये
तुच्छशक्तयोऽप्यन्यं, व्यथन्ते वृश्चिका इव । ते भूयांसो भुवि स्वामिन्, मानवा दौष्ट्यदानवाः ॥ १८० ॥ ये तु शेषाहि-
वद्भूरिशक्तयोऽपि क्षमाधराः । सागसेऽपि न कुप्यन्ति, त्वादृशास्ते सुदुर्लभाः ॥ १८१ ॥ सामर्थ्ये सहनं सारमिति सर्वे
विदो विदुः । तद्विस्मरन्ति जडवत्, सहनावसरे तु ते ॥ १८२ ॥ मिथो विरुद्धे अप्युच्चैः, क्षमाशक्ती महीपते ! । त्वां

---

१ अर्थापत्तिः प्रमाणविशेषः । यथा रोगादिरहितो देवदत्तो दिवाऽभुञ्जानोऽपि पीनोऽस्तीति केनाऽप्युक्तम् । तदाऽन्यः प्राह, दिवाऽ-
भुञ्जानस्य पीनत्वं रात्रिभोजनं विना नोपपद्यत इत्यसौ निशि भुङ्क्ते इत्यादौ रात्रिभोजननिर्णायकमर्थापत्तिप्रमाणम् । २ अचला भूमिः, यद्वाऽ-
चलाः पर्वतास्तद्वदचला । ३ सापराधायाऽपि । ४ जानन्ति ॥

प्राप्य लोकमध्यस्थं, मन्ये जाते सुसङ्गते ॥ १८३ ॥ असहिष्णुतया व्याप्ता, शक्तिमत्तेति निर्णयः । त्वय्येव व्यभिचारेण, विभो! कर्त्तुं न शक्यते ॥ १८४ ॥ तद्रत्नगर्भेत्याह्वानं, पृथ्व्याः सान्वर्थतां नयन् । दक्षैकरत्न ! सुचिरं, जय रञ्जय सज्जनान् ॥ १८५ ॥ चातुर्यदेवमूचानं, न्यस्य तुर्ये तमासने । प्रपञ्चमेदुरां न्यास्थत्, पञ्चमे तु निजां प्रियाम् ॥ १८६ ॥

प्रभोज्य भोज्यैः सरसै रसेशः, सर्वास्ततस्तान् बुभुजे स्वयं सः ।
सत्कृत्य सिद्धं व्यसृजत् सतन्त्रं, तं सार्थनाथं च दधौ स्वपार्श्वे ॥ १८७ ॥

इति श्रीतपागच्छाधिराजश्रीविजयदानसूरीश्वरशिष्यमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्याय-
श्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिविरचितायां
चम्पकमालाकथायां द्वितीयः प्रस्तावः ॥

---

१ यत्र यत्र शक्तिस्तत्र तत्रासहिष्णुता इत्येवंरूपो निर्णयः त्वयि व्यभिचारेण कर्तुं न शक्यते, सत्यामपि शक्तौ सहनाद्व्यभिचारः ॥

अथ सर्वाङ्गसुभगं, सार्थेशं स्निग्धया दृशा । प्रतिप्रतीकं नृपतिसुप्रतीको निभालयन् ॥ १ ॥ स्वर्णचम्पकमालावदम्लानां चम्पकस्रजम् । तन्मौलौ वीक्ष्य सञ्जाताश्चर्यः पर्यन्वयुक्त तम् ॥ २ ॥ युग्मम् ॥ माला सुमनसामङ्गसङ्गान्म्लायति नः क्षणात् । तवेयं म्लायति न किं, माला सुमनसामिव ? ॥ ३ ॥ स स्माहोर्वीश ! मा स्माहो ! मन्यथा इदमन्यथा । शीलप्रभावान्मत्पत्न्या, म्लायत्येषा न जातुचित् ॥ ४ ॥ कथमित्यथ राज्ञोक्तः, सोऽब्रवीत् श्रूयतां विभो ! । अस्त्यङ्गदेशे चम्पाख्या, नगरी श्रीगरीयसी ॥ ५ ॥ तत्र श्रेष्ठी धन इति, नामासीद्धनदोपमः । तस्याहं नन्दनो नाम्ना, धनकेलिरिति प्रभो ! ॥ ६ ॥ कलाकलापमादाय, शशीव त्यक्तशैशवः । सल्लावण्यामृतः स्वीयकुलाम्भोधिममूमुदम् ॥ ७ ॥ इतश्च पुर्यां कौशाम्ब्यां, श्रेष्ठी विमलवाहनः । तस्यासीन्नन्दना नाम्ना, रूपलक्ष्म्या च रुक्मिणी ॥ ८ ॥ तातात्ज्ञया पर्यणयं, तामहं समहामहम् । प्राणेभ्योऽपि प्रियां तां च, मानयन् सौधमानयम् ॥ ९ ॥ भुञ्जानश्च तया सार्कं, भोगान् निर्भाग्यदुर्लभान् । इति नीतिवचोऽश्रौषमन्यदा कोविदोदितम् ॥ १० ॥ जातषोडशवर्षोऽपि, यो भुङ्क्ते पैतृकं धनम् । स्यादुत्तमर्ण एवासौ, पित्तुर्न तु सुखावहः ॥ ११ ॥ यदुक्तम्—

जनकार्जिता विभूतिर्भगिनीति सुनीतिवेदिभिः सद्भिः । सत्पात्र एव योज्या, न तु भोग्या यौवनाभिमुखैः ॥ १ ॥

स्तन्यं मन्मनवचनं, चापलमपहेतुहास्यमत्रपताम् । शिशुरेवार्हति पांशुक्रीडां भुक्तिं च पितृलक्ष्म्याः ॥ २ ॥

श्रुत्वेति जलमार्गेण, यियासुर्धनमर्जितुम् । जलोपद्रवभीतेन, तातेनाहं निवारितः ॥ १२ ॥ स्थलाध्वना ततो नानावस्तुस्तोमभृतो वृषान् । आदाय व्यवसायार्थमहं देशान्तरं ययौ ॥ १३ ॥ तत्र चिन्तातिगं लाभं, प्राप्यान्यैः पण्यसञ्चयैः ।

---

१ प्रतिशरीरावयवम् । २ दिग्गजः । ३ पप्रच्छ । ४ पुष्पाणाम् । ५ देवानाम् ॥

लक्षशोऽपि वृषान् भृत्वा, यातस्तातममोदयम् ॥ १४ ॥ परस्वदेशयोरेवं, मुहुः कुर्वन् गमागमान् । धनमार्जयमालस्यावर्णवादममार्जयम् ॥ १५ ॥ रजोभिर्वृषभव्यूहक्षुण्णक्षोणीतलोत्थितैः । अकाण्डोद्यद्घनमिव, गगनं यद्भूत्तदा ॥ १६ ॥ जनो मे तेन गगनधूलिरित्यभिधां व्यधात् । ततः प्रतीता सैवासीदाख्या सर्वत्र मे विभो ! ॥ १७ ॥

इतश्च पुर्यां चम्पायां, वशावर्गमतल्लिका । वेश्या कामपताकाख्या, रूपसौभाग्यभूरभूत् ॥१८॥ मृगाक्षी वीक्षिताऽन्येद्युः, सा तद्गेहगवाक्षगा । अबलाऽपि मनोऽहार्षीत्, प्रसह्य बलिनोऽपि मे ॥ १९ ॥ यद्वा—वशिनोऽपि वशीकर्त्तुं, योर्वशीव प्रभूयते । वशीकरोति मच्चेतः, सा चेत्तत्र किमद्भुतम् ॥ २० ॥ मद्देहगेहसारस्य, चित्तवित्तस्य चोरणात् । गर्हार्हामपि तां मोहादचिकीर्षं प्रियामहम् ॥ २१ ॥ ततोऽनु धेनुमिव गौस्तस्याः सौधेऽनु तामगाम् । आकृष्टमानसो बाढं, तद्गुणैः कार्मणैरिव ॥२२॥ निविष्टां विष्टरे तत्र, पद्मे पद्मामिवोच्चकैः । दिशो दशोद्द्योतयन्तीं, हृद्यद्युतिकदम्बकैः ॥२३॥ भूषितावयवां रत्नालङ्कारैराशिरःक्रमम् । वर्द्धयन्तीं स्वसाहाय्यादनङ्गस्यापि विक्रमम् ॥ २४ ॥ कृतरम्भाजयारम्भां, रम्भागर्भाभविग्रहाम् । सुवर्णेन समं स्वाङ्गवर्णेन कृतविग्रहाम् ॥ २५ ॥ अगण्यपुण्यलावण्यवशीकृतरसाधराम् । तामद्राक्षमहं द्राक्षासवजिष्णुरसाधराम् ॥ २६ ॥ चतुर्भिः कलापकम् ॥ सापि वारवधूवारमुख्या सख्याय सादरा । मां समीक्ष्य समुत्थाय, कृताञ्जलिरदोऽवदत् ॥२७॥ स्वामिन्नेहि निजां सौम्यदृशं मयि निधेहि च । स्वाभीष्टमभिधेहि त्वं, यद्विधेयं विधेहि तत् ॥ २८ ॥ तयैव मुदितश्चित्ते, मुदितस्तद्गृहे वसन् । नित्यं तया सहाक्रीडं, रम्भयेव सुधाशनः ॥ २९ ॥ तत्प्रार्थितं धनं चादां, पित्रा प्रहितमन्वहम् । इत्थं मे वसतस्तत्र, जज्ञे द्वादशव-

---

१ मुनीनपि । २ नृपो यया ताम् । ३ मदिराजेतृरसवान् ओष्ठो यस्यास्ताम् ॥

त्सरी ॥ ३० ॥ वित्तार्थं वेश्यया दासी, मत्पार्श्वे प्रेषिताऽन्यदा । रिक्ता प्रत्याययौ भिक्षुकीव कीनाश[1]वेश्मनः ॥ ३१ ॥ ततो दूना चिदूना[2] सा, मां स्माहेति पणाङ्गना । क्षीणवित्तोऽपि किं नाद्य, वेश्मास्माकं जहासि भोः ! ॥ ३२ ॥ वेश्या वश्याः सवित्तानां, वित्तं[3] ह्येतज्जगत्त्रये । प्रेमास्माकं त्वयि कथं, तत्क्षीणविभवे भवेत् ? ॥ ३३ ॥ दृश्यते चापवित्तस्य, वयस्योऽपि रिपूभवन् । शोषयत्यम्बुहीनानि, भानुः पद्मानि किं न हि ? ॥ ३४ ॥ कलावन्तमपि क्षीणं, नाद्रियन्ते विचक्षणाः । शुभ-कर्मसु दैवज्ञाः[4], किं न क्षीणेन्दुमत्यजन् ? ॥ ३५ ॥ तद्गच्छ स्वच्छ ! भोगाशां, वर्जयावर्जयोद्यमम् । धनमर्जय दारिद्र्यं, मा-र्जयारींश्च तर्जय ॥ ३६ ॥ यदि चास्मासु ते स्नेहः, प्रगाढश्चिरमंस्तवान् । तदोपार्जितवित्तस्त्वं, भूयोऽपि द्रुतमापतेः ॥३७॥ तच्छ्रुत्वाऽचिन्तयमहो !, निर्दाक्षिण्या पणाङ्गना । चिरकालीनमपि या, स्नेहं हित्वैवमाह माम् ॥ ३८ ॥ यद्वा या द्रव्य-लोभेन, कुष्ठिनोऽपि स्मरीयति । तासां वित्तैकचित्तानां, कः स्नेहः पणयोषिताम् ॥ ३९ ॥ ध्यायन्निति गृहात्तस्या, निर्गतो विमना मनाक् । स्वीयभोगकृते वेश्याच्छिन्नसद्वस्त्रभूषणः ॥ ४० ॥ मेदस्वि[5]खेदः प्रस्वेदक्लिन्नकायः स्खलत्क्रमः । स्वगेहेऽगां च्युतः स्वर्गात्, स्वर्गीव नरजन्मनि ॥ ४१ ॥ युग्मम् ॥ समीक्ष्य तच्च पतितप्रायं शून्यमरण्यवत् । अहं भूवल्लभाऽभूवं, श्रवदश्रुजलाविलः ॥ ४२ ॥ वेश्यापमानदुःखाग्निदाहोर्द्ध्वं पिटको[6]पमम् । बन्धुगेहादिनाशोत्थं, दुःखं मेऽभूत् सुदुःसहम् ॥ ४३ ॥ ततः कथञ्चित्स्वस्थोऽहमप्राक्षं प्रातिवेश्मिकाम् । दशा मद्वेश्मनः केयं, पितरौ क्व स्नुषा च मे ? ॥ ४४ ॥ ते प्रोचुर्गणिकासक्तस्त्वं धनं निधनं नयन् । यत्स्थितस्तद्गृहे नागाश्चिरेणापि स्वमालयम् ॥ ४५ ॥ पिता ते तापितस्तेन, दुःखे-

---

१ कृपणगृहात् । २ चिदा ज्ञानेन ऊना । ३ प्रसिद्धम् । ४ ज्योतिषिकाः । ५ अत्यन्त– । ६ स्फोटकोपमम् ॥

नागात् परं भवम्। दुःसहः सुतविश्लेषः, किं पुनर्धननाशयुक् ?॥ ४६ ॥ दुःखैरत्युल्बणैर्भर्तृपुत्रवित्तवियोगजैः। प्रेत्यप-
त्यनुगेवाऽगात्तव माताऽपि तापिता ॥ ४७ ॥ ततः कान्ता तत्रावादीत्, मत्कान्तो गणिकारतः। अपेक्षते न मां नापि
रमां न च गृहक्षमाम् ॥ ४८ ॥ किं चापेक्षाकारिणौ मे, विपन्नौ श्वशुरावपि। नाथे सत्यप्यनाथायाः, स्थातुं युक्तं न मेऽत्र
तत् ॥ ४९ ॥ वेश्याऽपि भाटीद्रव्यार्थं, पीडयेन्मामिह स्थिताम्। निरपाये पितुर्धाम्नि, तत्प्रयातुं ममोचितम् ॥ ५० ॥
इत्युक्त्वा सा समादायावशिष्टं भूषणादिकम्। सौधस्य साश्रुनेत्राभ्यां, ददतीव जलाञ्जलिम् ॥ ५१ ॥ युष्माभिः सौधमे-
तन्मे, पतत्पातव्यमित्यरम्। सगद्गदं गदन्त्यस्मान्, स्वबन्धूनिव सादरम् ॥५२॥ मा रुंणन्मोऽरुणविभां, घनालीव पणाङ्गना।
वित्तार्थमिति साशङ्का, भृत्येनैकेन संयुता ॥ ५३ ॥ महसा सहसार्थेनागात्कौशाम्ब्यां पितुर्गृहान्। योषितः प्रोषिते कान्त-
पक्षे स्थानं तदेव हि ॥ ५४ ॥ चतुर्भिः कलापकम्॥ पित्राऽपि मृतभार्येण, सा सौधाधिकृता कृता। तां तत्र नीत्वाऽऽया-
तेनभृत्येनोक्तमिदं हि नः॥५५॥ सार्धं त्वरक्षकमिदं, लोकैर्नीतमिमां दशाम्। रात्रावाच्छिन्नवलभीवंशनीव्रकटादिभिः॥५६॥
इत्थं तावकतातादिवार्त्ता तावत्तवोदिता। वयस्य ! खेदं मा कार्षीर्दुर्वारा भवितव्यता ॥ ५७ ॥ इति पित्रादिवृत्तान्तं, श्रु-
त्वोक्तं प्रातिवेश्मिकैः। स्वामिन्नवापमहकमेकं वाचामगोचरम् ॥५८॥ अचिन्तयं च धिग् धिग्मां, मातापित्रादिदुःखदम्।
व्यसनासेवनावाप्तव्यसनं कुलपांसनम् ॥ ५९ ॥ कुलीनेनापि कौलीनं, व्यसनैर्धिग् मयाऽर्जितम्। ध्वस्तं वित्तं महत्त्वं च,
पूर्वजार्जितमूर्जितम् ॥ ६० ॥ आजन्मोद्द्योतयन्तः स्वाऽन्वयाभ्रं केऽपि सूनवः। नवोदितार्कवद्भान्ति, ध्वस्तदुःखतमो-

१ मा रौत्सीत्। २ मा इति माम्। ३ अहम्। ४ दुःखम्। ५ कलदूषकम्॥

भराः ॥ ६१ ॥ केचित्तु मन्दरुचयो, भास्वद्वंशोद्भवा अपि । रक्षन्ति न पितुर्नाम, धाम वा मादृशाः सुताः ॥ ६२ ॥ धिग्मे विवेकं स्नेहं धिग्, धिग् दाक्ष्यं धिग् विनीतताम् । वेश्यासक्तेन न ज्ञातौ, यन्मया पितरौ मृतौ ॥ ६३ ॥ व्यसनैर्नाशित-श्रीको, मातापित्रादिदुःखदः । सतां समाजे वदनं, दर्शयिष्याम्यहं कथम् ॥ ६४ ॥ गतानुशोचितैर्बालिशोचितैरथवा कृतम् । शोचनाद्धि भवेद्बुद्धिनाशस्तस्मात् पुनः क्षयः ॥ ६५ ॥ व्यवसायमथ द्रव्यलाभोपायं तनोम्यहम् । वित्ते हि सति भूयोऽपि, महत्त्वाद्याप्स्यते स्वयम् ॥ ६६ ॥ उक्तं च—

यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान्[1] गुणज्ञः । स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ते ॥१॥

बीजं विना कृषिरिव, नीवीवित्तं[2] विना मया । व्यवसायः कथं वित्तावाप्त्युपायः करिष्यते ? ॥ ६७ ॥ नीवीं विना हि व्यापारः, पारवश्यादिदुःखदः । सेवाप्रभृतिरेव स्यान्न च स क्रियते मया ॥ ६८ ॥ नीवी च श्वशुरादेव, लप्स्यते नान्यतो मया । स हि दाता सुतास्नेहाद्दुर्देयमपि मे धनम् ॥ ६९ ॥ श्वशुरप्रार्थना प्रत्यादिष्टा[3] यद्यपि धीमताम् । अनन्यगतिकत्वेन, करिष्यामि तथाऽपि ताम् ॥ ७० ॥ प्रियार्थमन्यदाऽप्यस्ति, गम्यं मे श्वशुरौकसि । तद्याम्यद्यैवास्तु कृत्यद्वयमेकश्रमेण मे ॥ ७१ ॥ रामां ततः समानीय, वासयामि स्वमन्दिरम् । रमां पुनः समानीयोद्वासयामि दरिद्रताम् ॥ ७२ ॥ ध्यात्वेत्यहं वपुर्मात्रपरिवारोऽङ्घ्रिवाहनः । प्रस्वेदजलसंपृक्तरजोभरविलेपनः ॥ ७३ ॥ असंस्कृतश्लथप्रौढधम्मिल्लातपवारणः । वटादितरुपत्रालीकृतभोजनभाजनः ॥ ७४ ॥ वित्ताभावात् स्वीयवस्त्रविक्रयेण कृताशनः । क्रमाजगाम कौशाम्बीपुर्यां श्वशु-

---

१ "श्रुतिमान्" इत्यपि । २ मूलधनम् । ३ निराकृता ॥

स्वेश्मनि ॥ ७५ ॥ त्रिभिर्विशेषकम् ॥ तत्र सामान्यवेषत्वान्न केनाप्युपलक्षितः । निषिद्धो दौवारिकेण, प्रवेशमपि नाप्नवम् ॥ ७६ ॥ ततोऽहं भिक्षुवेषेण, प्राविशं भिक्षुभिः समम् । भिक्षां तदादान्मे पत्नी, मां तूपालक्षयन्न सा ॥ ७७ ॥ चिरदृष्टतया भिक्षुवेषाद्वैषा न वेद मे[1] माम् । तदस्यै ज्ञापयामि स्वमित्यस्थां तत्र यावता ॥ ७८ ॥ तावत्सा भृकुटीभङ्गभीषणास्येत्युवाच माम् । आत्तभिक्षोऽपि किं भिक्षो !, वीक्षसे स्वास्पदं व्रज ॥ ७९ ॥ ततो निर्गत्य तद्गेहात्तदामन्नबहिर्भुवि । निषण्णोऽन्तर्विषण्णोऽहमेवमध्यायमुन्मनाः ॥ ८० ॥ लभेऽपमानमद्याहं, सर्वत्रापदशावशात् । यदज्ञानात् स्वपत्न्याऽपि, निर्भाग्योऽहं तिरस्कृतः ॥ ८१ ॥ सति भाग्योदये सौख्यं, विपक्षेभ्योऽपि लभ्यते । स्वबन्धुभ्योऽपि दुःखं च, लभ्यते तद्विपर्यये ॥ ८२ ॥ दशास्यं त्रिदशा भेजुर्दस्यवोऽपि दशोदये । तस्या विपर्यये तस्य, सोदरोऽप्याप दस्युताम्[2] ॥ ८३ ॥ तत्किं कुर्वेऽत्र तिष्ठामि, यामि वा स्वपुरीं पुनः ? । यद्वा विना रमां रामां, तत्र गत्वा करोमि किम् ? ॥८४॥ तच्चेदेतद्द्वयीमध्यात्, स्यादेकाऽप्यात्मसान्मम । निजां पुरीं यामि तदाऽन्यथा तु विपयान्तरम् ॥ ८५ ॥ किं चौत्सुक्येन कार्यस्य, हानिरित्युच्यते बुधैः । तदौत्सुक्यं विहायात्र, तिष्ठामि कतिचिद्दिनान् ॥ ८६ ॥ जातु प्रत्यभिजानीयान्मां जायाऽप्यत्र संस्थितम् । शनैः शनैः स्मर्यतेऽपि, भावो हि चिरविस्मृतः ॥ ८७ ॥ इत्यादिचिन्ताजालान्तःपतिते मयि दुर्विधे[3] । विधेर्नियोगाद्दिवसावसानमभवत्तदा ॥ ८८ ॥ प्रातः प्राप्तोदयः संप्रत्यस्तं याम्यहमप्यतः । त्वं मा शोचीरिति तदा, भानुर्मामन्वशादिव[4] ॥८९॥ तदा रथाङ्गाः क्रन्दन्तः, कान्ताविश्लेषदुःखतः । प्रियावियोगतप्तस्य, समदुःखा ममाभवन् ॥ ९० ॥ प्रास्फुरत् सान्ध्यरा-

१ जानाति । २ शत्रुताम् । ३ दरिद्रे । ४ अशिक्षयदिव ॥

गश्च, वेश्याराग इवास्थिरः । पद्माकराश्च निःश्रीकास्तदाऽऽमन्मादृशा इव ॥ ९१ ॥ दुःखैरहमिव व्यापि, तदा विश्वं तमोभरैः । मद्विपक्षैरिव प्रोच्चैः, कुमुदैर्मुदवाप्यत ॥ ९२ ॥ निरुद्धसारव्यापारा, मद्दशेवाऽभवन्निशा । पापैर्मत्कर्मभिरिव, तदा प्रस्फूर्जितं जनैः ॥ ९३ ॥ रात्रेर्यामे ततोऽतीते, कपाटार्गलतालकैः । सौधप्रतोलीं संवृत्य, द्वाःस्थः स्वस्थोऽस्वपत् सुखम् ॥ ९४ ॥ ततोऽहं द्वारपार्श्वस्थाऽट्टालकेऽवस्थिते वहिः । सुष्वाप नापं स्वापं तु, चिन्ताचान्तमनस्तया ॥ ९५ ॥ निशीथेऽथ प्रतीहारमेत्य स्माहेति मेऽङ्गना । आर्य ! केनापि कार्येणावश्यं गन्तव्यमस्ति मे ॥ ९६ ॥ क्षिप्रमुद्घाटय द्वारमधुना मा धुनाः शिरः । गत्वाऽऽगच्छामि यावच्च, तावत्तिष्ठाप्रमद्वरः ॥ ९७ ॥ तामुद्विग्नतया चण्डतया चैवमुवाच सः । यास्यसि क्वार्द्धरात्रे त्वं, ब्रूहि कार्यं किमस्ति ते ? ॥ ९८ ॥ अयं हि गन्तुं समयश्चौरादीनां सतां न हि । तत्प्रातरेव तत्कुर्याः, सांप्रतं यच्चिकीर्षितम् ॥ ९९ ॥ नाहं निशीथादारभ्यानिशं जागरितुं क्षमे । दौवारिकं कुरुष्वान्यं, निशि जागर्त्ति योऽन्वहम् ॥ १०० ॥ इत्युच्चैरुदिता तेन, रुदिता वेदिताऽसुखा । दिताशा सान्तरुदिताऽनलेव प्राज्वलद्रुषा ॥ १०१ ॥ ततोऽन्तर्धाम मूर्च्छायाविच्छायास्या जगाम सा । जाग्रत्तदा तदालापं, श्रुत्वेत्यहमचिन्तयम् ॥ १०२ ॥ निशीथे याऽनिशं याति, बहिः सा न हि शोभना । वीक्षिष्येऽस्याश्चरित्रं तत्, स्त्रीरागामयभेषजम् ॥ १०३ ॥ ध्यायन्नित्याद्यहं किञ्चित्, स्वस्थो निद्रामवाप्नवम् । अजागरं प्रभाते च, सह स्मेरैः पयोरुहैः ॥ १०४ ॥ द्रष्टुकामोऽहमुत्तस्थौ, भार्याकार्यं श्रिताम्बरः । जगत्कर्म जगत्कर्मसाक्षीव प्रगुणस्तदा ॥ १०५ ॥ नष्टं तमोभिस्त्वद्वैरियशोभिरिव सर्वतः । तिरोहितं तदा तारैस्त्वद्राज्ये तस्क-

१ अभवत् । २ व्याप्तम् । ३ ध्वान्तम् । ४ 'भकनीनिकयोस्तारः' इति तारशब्दस्य पुंस्त्रीलिङ्गता ॥

रैरिव ॥ १०६ ॥ तदा चक्रैः प्रमुदितं, सदा त्वत्सेवकैरिव । कौशिकैश्च भवद्वैरिवर्गैरिव पलायितम् ॥ १०७ ॥ तदाऽर्को ज्ञैः स्तुतस्त्वद्वद्धैर्यमन्दरसोदयः । कजव्रजस्त्वज्जनवज्जज्ञेऽमन्दरसोदयः ॥ १०८ ॥ दिने तत्रापि भिक्षार्थं, ततोऽहं तद्गृहे गतः । किं जातीयोऽसीति पृष्टो, मत्पत्न्या दत्तभिक्षया ॥१०९॥ अहं वणिक्सुतोऽस्मीति, मयोक्ते सा पुनर्जगौ । अस्मत्सौधप्रतोल्यां भो भद्र ! द्वाःस्थो भविष्यसि ॥ ११० ॥ दिदृक्षोस्तच्चरित्रं मे, तद्भूत्तद्वचः प्रियम् । पिपासोरिव शीताम्बु, बुभुक्षोरिव भोजनम् ॥ १११ ॥ ततो मया ओमित्युक्ते, सा कञ्चित् पूर्ववेत्रिणः । बभाषे कृत्रिमं दोषं दोषारोपात् पितुः पुरः ॥११२॥ तत्सत्यासत्यतां बुद्ध्या, विश्वासादविमृश्य सः । व्यसृजत्तं प्रतीहारं, तस्या वाचा व्यधाच्च माम् ॥ ११३ ॥ सा मामावर्जयामासाशनाद्यैः स्वार्थसिद्धये । तातेति रासभमपि, ब्रूते कार्यवशाज्जनः ॥ ११४ ॥ रात्रौ तु लोके सुप्ते सा, सारालङ्कारधारिणी । उपासरन्मां सामोदमोदकस्थालभारिणी ॥ ११५ ॥ तया प्रोक्तोऽथ मद्योऽहं, प्रतोलीमुदघाटयम् । स्थालं च मोदकापूर्णं, तद्दत्तमुदपाटयम् ॥ ११६ ॥ शनैः प्रतोलिकाद्वारं, संवृत्यान्वगमं च ताम् । सा त्वगात् कामितनरास्पदं सौवर्णिकापणम् ॥ ११७ ॥ तत्र सा मोदकस्थालमादायेति जगाद माम् । याहि सत्यापय द्वारं, क्षणादेष्याम्यहं पुनः ॥ ११८ ॥ किञ्चिद्गतस्ततस्तस्या, विश्वासाय गृहं प्रति । व्यावृत्यागां तत्स्वरूपावगमाय तदापणम् ॥ ११९ ॥ निशावशात्तदज्ञातस्तत्र स्तम्भतिरोहितः । चौरवन्निभृतः सावधानश्चर इवाभवम् ॥ १२० ॥ तदा तत्कृतसंज्ञाभिर्जारो ज्ञाततदागमः । उद्घाट्य द्वारमित्यूचे, कोपकम्पितभूघनः ॥ १२१ ॥ अरे ! कुत्राऽपि सङ्केतं, गतनिश्यागता न किम् । कामुकः सरसः कोऽपि, सङ्गतः

१ धैर्यवन्मेरुपर्वते उदयवान् अर्कः ॥

किं तत्रापरः ॥ १२२ ॥ उज्जागरं गरमिव, गिरीशो हन्त ! दुःसहम् । असासहमहं त्वं तु, सुखं शेषे परैः समम् ॥ १२३ ॥ याहि रे याहि पापिष्टे!, पृष्ठं दर्शय मे निजम् । नव स्नेहाग्निना दग्धदेहगेहेन मे कृतम् ॥ १२४ ॥ इत्युक्त्वा तच्छिरोवस्त्रमाकृष्यासौ क्रुधा ज्वलन् । प्रजहार चपेटाभिर्भूतात्तामिव मूर्ध्नि ताम् ॥ १२५ ॥ तत्प्रहारत्रुटज्जीर्णसूत्रस्तस्याः शिरोमणिः । तदोत्प्लुत्य तदज्ञातो, न्यपतन्मत्क्रमोपरि ॥ १२६ ॥ भाग्याकृष्टं सुरमणिमिव तं चाहमाददे । सा पांशुला तु तत्पादपतितेति तदाऽवदत् ॥ १२७ ॥ कोपं संवृणु मद्वाक्यं, शृणु नाथ ! यथास्थितम् । निर्मन्तुमपि मां हन्तुं, कथं कान्त ! प्रवर्त्तसे ? ॥ १२८ ॥ मां ह्यस्तमायामायान्तीमिह दौवारिकोऽरुणत् । मया स हि बहूक्तोऽपि, प्रतोलीं नोदघाटयत् ॥ १२९ ॥ स सदैवानुकूलोऽपि, दैवाद्वक्रस्तदाऽभवत् । विधाविव विरुद्धे हि, विधौ स्वोऽपि रिपूयते ॥ १३० ॥ वारीगता गजीवाहं, मृगीवावासवागुरा । दुःखं प्रापं तदाहं यत्तन्मा भून्मद्रिपोरपि ॥ १३१ ॥ प्रातस्तु तातं विज्ञप्यापरं द्वाःस्थमकारयम् । व्यसर्जयं च प्राचीनं, त्वद्वियोगोरुदुःखदम् ॥ १३२ ॥ तत्तुल्यमेव दिवसं, चातिवाह्य कथञ्चन । स्मरापस्मारविवशा, त्वां दोषज्ञमुपाश्रयम् ॥ १३३ ॥ तन्मामनुगृहाण त्वं निर्दोषां निगृहाण मा । गृहाण मोदकानेतान्, सद्गणेशोपदीकृतान् ॥ १३४ ॥ धुनीहि संशयं नास्मि, धुनी दोषाम्भसामहम् । पुनीहि मां सौम्यदृशा, दुःखदर्भांल्लुनीहि च ॥१३५॥ तयेत्युक्तः प्रसन्नात्मा, स्वीचक्रे तान् स मोदकान् । यदज्ञानान्मयोक्तं तत्, सहस्वेति च तां जगौ ॥ १३६ ॥ इयन्तमेव

---

१ विषमिव । २ कल्ये । ३ चन्द्रे इवं । ४ तत्तुल्यं त्वद्वियोगोरुदुःखदायित्वात् दौवारिककल्पं दिवसमतिवाह्य अतिक्रमय्य । ५ अन्योऽपि गणेशः प्राभृतीकृतान्मोदकान् गृह्णाति त्वमपि सद्गुणानामुत्तमवृन्दानामीशः सद्गणेशो वर्त्तसे इति ॥

वृत्तान्तं, स्वपत्न्या वीक्ष्य दुर्मनाः । अहं सञ्जातनिर्वेदातिरेकस्तद्गृहं ययौ ॥ १३७ ॥ अचिन्तयं च रे जीव !, यां ध्यायं-स्त्वमिहागतः । सा त्वां दासीयति परं, नरं च रमणीयति ॥ १३८ ॥ स्वत्रशासक्तमपरं, चेन्न हन्तुं त्वमीशिषे[1] । तत्किं न हंसि स्वं जीवं, क्लीबदुर्दैवपीडितम् ? ॥ १३९ ॥ रे दैव ! कृत्वा मां वित्तनाशाद्यसुखदर्शिनम् । न तुष्टस्त्वं महाकष्टं, यदीदृशमदीदृशः ॥ १४० ॥ किं चेयं कुलजाऽप्येवं, कुलटात्वं दधौ कथम् ? । कृष्णोद्भवाऽपि वा देववेश्या नाभूत् किमुर्वशी ? ॥ १४१ ॥ यद्वा म्वेनैव दोषेण, व्यनेशत् स्त्री रमेत्र मे । द्वादशाब्दीमुपेक्ष्यामू[2], यद्भेजे गणिकामहम् ॥ १४२ ॥ यद्वा मद्विरहेऽप्येषा, नैवेत्थं कर्तुमर्हति । न हि भानुवियोगेऽपि, विधुं भजति पद्मिनी ॥ १४३ ॥ सन्नारीभिर्विपन्नेऽपि पत्यौ नासेव्यते परः । मयि सत्यप्यसौ त्वन्यं, निर्लज्जा भजतेऽनिशम् ॥ १४४ ॥ इयं चान्यैरपि नरैर्विलसन्ती भविष्यति । यदतिक्रान्तकान्तानां, नरेयत्ता न योषिताम् ॥ १४५ ॥ अनाचाराम्बुकुल्यासौ, तत्कुल्या[3] कथ्यते कथम् ? । उच्यते हि सदाचारः, कुलीनत्वादिलक्षणम् ॥ १४६ ॥ सङ्गोऽस्यास्तदनार्याया, नार्या नार्यस्य मे श्रिये । दुष्टा हि कान्ता दुष्टाहिकान्तावन्मृत्यवे भवेत् ॥ १४७ ॥ स्वकीयं वादमीयं वा, वृत्तं न काप्यदोऽधुना । मया प्रकाश्यं कस्यापि, पुरो लाघवकारणम् ॥ १४८ ॥ नाथेह मे स्थितिर्युक्ता, दुःखस्मृतिनिबन्धनम् । न वा गन्तुर्निजपुरे, दुःखस्मृतिनिबन्धनम् ॥ १४९ ॥ तदद्यलब्धतच्चूडामणिस्वर्णोत्थशम्बलः । यास्यामि यद्भविष्येऽहं, प्रत्यूषे विषयान्तरम् ॥ १५० ॥ ध्यात्वेति सुप्तस्तत्रैव, प्रभाते त्वन्यतोऽगमम् । तं चोपालक्षयं सम्यग्, वीक्षमाणः शिरोमणिः ॥ १५१ ॥ दध्यौ चैवं जनन्या मे, मौलिं योऽभू-

१ समर्थो भवसि । २ अमू स्त्रीश्रियौ । ३ कुलीना ॥

पर्यचिरम् । सोऽयं चूडामणिर्नूनमस्मद्वंशक्रमागतः ॥ १५२ ॥ सुगाया एव देयोऽयं, नाज्ञजान्यस्तु जातुचित् । यस्येति संप्रदायो मे, पितृभ्यामुदितो मुहुः ॥ १५३ ॥ भिनद्मि दुर्दशामग्नो, भिक्षोद्विग्नस्तमप्यहम् । इत्युद्दश्रुरहं यावत्, कृतयत्नो विभेद तम् ॥ १५४ ॥ निःससार ततस्तावदेका पत्री सदक्षरा । अवाचयं च तामेवं, विस्मयस्मेरलोचनः ॥ १५५ ॥ वेश्मनीहापवरके, विद्यते वामकोणके । निधिः सौवर्णदीनारचतुष्कोटिमितो महान् ॥ १५६ ॥ तत् प्रवाच्य महासिद्धि-पाठसिद्धोरुमन्त्रवत् । प्रोच्चैरवापमानन्दमहं वाचामगोचरम् ॥ १५७ ॥ तत्रागमनमुख्यो मे, प्रयासोऽप्यखिलस्तदा । तपोवदासीदापातदुःखोऽप्यायतिसुन्दरः ॥ १५८ ॥ पुत्र्या न देयो वध्वाश्च, प्रदेयोऽयं शिरोमणिः । संप्रदायगिरोऽमुष्या, मुख्यार्थं च तदाऽविदम् ॥ १५९ ॥ ततः शिरोमणिस्वर्णविक्रयोत्पन्नशम्बलः । चम्पापुर्यामगां स्वीयं, वेश्म सोत्साहसाहसः ॥ १६० ॥ निशि देशे यथोक्ते च, खनन्ननलसो रसाम् । साक्षाद्भूतं निजं पुण्यमिव तं निधिमासदम् ॥ १६१ ॥ जीवातुमातुर इव, गताक्ष इव लोचनम् । आसाद्य शेवधिं तं चावापं निरवधिं मुदम् ॥ १६२ ॥ तदाकृष्टैः प्रकृष्टैः स्वैः[1], सौवं सौधमसज्जयम् । विशिष्टभूषा वासोभिः, कुर्वंस्त्रिदिवसज्जयम्[2] ॥ १६३ ॥ अथाऽन्यदा युतो मित्रैः, सादिभिः सुरसादिभिः । श्वेतवाजिगतः शक्रः, इवाढ्यः सुरसादिभिः ॥ १६४ ॥ सेवकव्यूढसुप्रौढमायूरातपवारणः । बन्दिभिः संस्तुतो भृङ्गैरिव सन्मत्तवारणः ॥ १६५ ॥ महार्घांशुकसौवर्णालङ्कारशतशोभितः । सारसंपत्तिभिर्जुष्टः, पत्तिभिः शतशोभितः ॥ १६६ ॥ स निःस्वानस्वनं मार्गे, चलन्नाशु रमालयम् । अगां नगर्यां कौशाम्ब्यामहं श्वाशुरमालयम् ॥ १६७ ॥ चतुर्भिः

---

१ धनैः । २ त्रिदिवसदां सुराणां जयम् ॥

कलापकम् ॥ तत्राहं कृतसत्कारः, श्यालकैः संमुखागतैः । श्वशुरेण सुरेणेव, सुरद्रुर्मानितो भृशम् ॥ १६८ ॥ विस्मारिताः किं युष्माभिर्निजा वयमियच्चिरम् ? । चिरात् किं दर्शनं दत्तमस्मद्दर्शनपावनम् ? ॥ १६९ ॥ भवन्तं मुदिरं द्रष्टुं, सोत्कण्ठाः केकिनो वयम् । अद्य मानातिगं हृद्यहृद्यानन्दं वहामहे ॥ १७० ॥ श्यालकाद्यास्तदेत्यादिमुदिता मामवादिषुः । सर्वोऽसाचादरः श्रीणां, भवतीत्यनुचिन्तितम् ॥ १७१ ॥ त्रिभिर्विशेषकम् ॥ नानापक्वान्नमरसरसवत्यादिभिस्ततः । राजेव सपरीवारो, भोजितोऽहं सगौरवम् ॥ १७२ ॥ ततोऽक्रीडमहं नानाकौतुकैः श्यालकैस्समम् । गीतशास्त्रविनोदैर्हि, यान्ति कालो मनीषिणाम् ॥१७३॥ स्वभार्या तु कृताकार्या, मनोबाह्यतया मया । नालोकिताऽपि सद्दृष्ट्या, दृष्टिः खलु मनोऽनुगा ॥१७४॥ मनोऽनुरक्तं यत्र स्यात्तत्र रुद्धाऽपि याति दृक् । मनो विरक्तं यत्र स्यात्, प्रहिताऽपि न तत्र तु ॥१७५॥ यद्रूपं सति रागे स्यान्नेत्रयोरमृताञ्जनम् । रागाभावे तदेव स्यान्नेत्रयोर्लवणाञ्जनम् ॥ १७६ ॥ याते यामेऽथ यामिन्याः, कामिन्या कल्पिते तया । तल्पे सुप्तोऽभवं यावत्, प्रमीलामीलितेक्षणः ॥१७७॥ तावत्समेत्य मे पत्नी, कृत्रिमप्रणया क्रमौ । संवाहयितुमारेभे, हर्षात्सामर्षचेतसः ॥ १७८ ॥ प्रबुद्धस्तामथोचेऽहं, काऽसि त्वं किं करोषि च ? । सा स्माह त्वद्भुजिष्याहमंह्री संवाहयामि ते ॥ १७९ ॥ भूयो मयोचे न कृतमदः सुन्दरि ! सुन्दरम् । यन्मां स्वप्नं वीक्ष्यमाणमक्षणे त्वमबूबुधः ॥१८०॥ सोचे रूपजितास्वप्न ! स्वप्नोऽसौ मे निवेद्यताम् । पुरः प्राणप्रियाया मे, नावाच्यं किञ्च नास्ति ते ॥ १८१ ॥ ततोऽहमूचे यद्येवं, शृणु तर्हि समाहिता । स्वप्ने स्वमहमद्राक्षं, धाम्नीह द्वाःस्थतां गतम् ॥ १८२ ॥ मया च मोदकस्थालधारिणाऽनुगता निशि । उपजारं गतां त्वां चापश्यं सौवर्णिकापणे ॥ १८३ ॥ सङ्केत्य मां गतनिशि, नागाः किमिति वादिना ? । तेन कोटाच्चपेटाभिर्हतां च त्वां स्वभा-

लयम् ॥ १८४ ॥ तच्चपेटाप्रहारैश्च, पतितं ते शिरोमणिम् । अग्रहीषमहं यावत्तावज्जागरितस्त्वया ॥ १८५ ॥ स्वप्नेऽस्मिन्न-र्द्दृष्टेऽपि, सुन्दरोदर्कसूचक । यदजागरयस्त्वं मां, तन्नाकार्षीः शुभं शुभे ! ॥ १८६ ॥ इति स्वप्नमिषेणापि, प्रोक्तमीर्ष्या-लुना मया । सा निशम्य निजाकार्यं, मर्मज्ञं बुध्यते स्म माम् ॥ १८७ ॥ ततो मद्वाक्यबाणेन, तेन मर्मात्त्रिधा हृदि । विद्धा भीह्रीव्यथापूरैः, सा भृशं व्याकुलाऽभवत् ॥ १८८ ॥ ततो हृदयमङ्घट्टात्, परासुः साऽजनि द्रुतम् । मर्मवाक्यं हि महतेऽ-नर्थाय खलु कल्पते ॥ १८९ ॥ ततस्तां न्यग्मुखीं नष्टचेष्टां मीलितलोचनाम् । निरुच्छ्वासां च दीपेन, वीक्ष्यावेदमहं मृताम् ॥ १९० ॥ कोपावेशोल्लसद्वीर्यधैर्यस्तामेककोऽप्यहम् । धेनुं व्याघ्र इवोत्पाट्य, द्राक् प्रतोलीमुपानयम् ॥ १९१ ॥ भूरिप्राघूर्णकत्वेनाप्रदत्तार्गलतालकाम् । द्वाःस्थाभावाच्च को यातीत्यादिप्रच्छकवर्जिताम् ॥ १९२ ॥ शनैरुद्धाट्य तां चाहं, ययौ सौवर्णिकापणम् । तद्द्वारि कुड्यावष्टम्भादूर्ध्वामस्थापयं च ताम् ॥ १९३ ॥ युग्मम् ॥ या श्रुताऽऽसीन्मया पूर्वमागतेन तया समम् । संज्ञां तां च विधायाहमन्यतोऽस्थां तिरोहितः ॥ १९४ ॥ तज्जारोऽपि तदा द्वारं, प्रकाशयेति हसन्नवक् । किमायासीर्निशीथे त्वं, निद्राविद्रावणाय मे ? ॥ १९५ ॥ अहो ! ते धृष्टता स्नेहनिष्टता च वचोऽतिगा । यत्प्रवञ्च्यागताऽ-सीह, चिरायातमपि प्रियम् ॥ १९६ ॥ व्योधाममध्ये ! द्राग् धाममध्ये नाद्य समेषि किम् ? । द्वारे ह्युद्धाटिते न त्वं, क-दाऽप्येवं विलम्बसे ॥ १९७ ॥ न भाषसे किं रुष्टाऽसि ?, हास्यवाक्यं सहस्व मे । प्रविशान्तर्विशांचेतोहरे ! किमिह रे ! स्थिता ॥ १९८ ॥ तेनेत्युक्ताऽपि सा यावन्नागतान्तर्गतासुका । एह्येहीति वदंस्तावदाचकर्ष स तत्पटम् ॥ १९९ ॥ ततः

---

१ भित्ति । २ वज्रमध्ये ! ॥

पपात सा पृथ्व्यां, निश्चेष्टा काष्ठमूर्त्तिवत् । विपन्नां सोऽथ तां वीक्ष्य, वीक्षापन्नोऽभवद्भृशम् ॥ २०० ॥ असौ ममार मारार्त्ता, वाला व्यालार्दिताऽथवा । सगद्गदं वदन्नेवं मोऽन्तर्हट्टं निनाय ताम् ॥ २०१ ॥ गर्त्तां विधाय तां तत्र, निधाय च निधानवत् । सुनिर्व्यूढचिरारूढप्रेमा गूढं रुरोद सः ॥ २०२ ॥ तत्सर्वं प्रेक्ष्य तद्वृत्तं, निवृत्तोऽहं गतो गृहम् । मित्रायावेदयं सोऽपि, तत्पित्रे तन्यवेदयत् ॥ २०३ ॥ तद्वृत्तान्तेन तेनान्तस्तत्तातस्तान्तमानसः । अप्रकाश्यमधादुग्रं, दुःखमौर्वमिवार्णवः ॥ २०४ ॥ वार्त्ताऽसावार्त्ततातहेतुस्तद्गेहे प्रासरत्तदा । तिष्ठेच्छन्ना न वै दुष्टा, वार्त्ता लशुनगन्धवत् ॥ २०५ ॥ चिन्तार्त्तानामवस्थातुं, ममैषां धाम्नि नोचितम् । इत्यहं यावदचलं, निर्विण्णः स्वपुरीं प्रति ॥ २०६ ॥ तावच्चम्पकमालाह्वाऽपरा मत्प्रेयसीस्वसा । मां वरीतुं करोपात्तचम्पकस्रगुपागमत् ॥ २०७ ॥ कटाक्षमालां न्यस्यन्ती, मदास्ये प्राज्यसंमदात् । तां मालिकां सा सोत्कण्ठा, मत्कण्ठे क्षिप्रमक्षिपत् ॥ २०८ ॥ स्माह च त्वां पतीयन्तीं, मा मायातां महामते! । निराकृथा मा सन्तो हि, प्रार्थनाभङ्गभीरवः ॥ २०९ ॥ ततोऽहमूचे त्वज्जामिस्वभावज्ञः कथं शुभे ! । त्वां स्वीकुर्वे तत्समैवायतौ त्वमपि भाविनी ॥ २१० ॥ साऽवादीन्नायमेकान्तो, यद्भगिन्योऽखिला अपि । समस्वभावाः स्युः सर्वे सोदरा वा धियांनिधे ! ॥ २११ ॥ यदुक्तम्—

एकोदरसमुत्पन्ना, एकनक्षत्रसंभवाः । न भवन्ति समाचारा, यथा बदरिकण्टकाः ॥ १ ॥

किञ्च—फलप्रसूनपत्राणां, नरवारणवाजिनाम् । उपलोत्पलमुख्यानामप्येकस्थानजन्मनाम् ॥ २१२ ॥ यद्यर्थानां मिथोऽ-

१ विस्मितः । २ पीडितमानसः । ३ समुद्रो वाडवानलमिव । ४ तद्भगिनी— । ५ उत्तरकाले ॥

न्येषामप्यन्यान्यस्वरूपता । दृश्यते तर्हि सा न स्यात् , कथं स्त्रीणामपि प्रभो ! ॥ २१३ ॥ युग्मम् ॥ गुणप्रवासात् संवासात् , तस्या वा दुष्टचेष्टिता । भवता नो शुभवता, शङ्कनीया कनीयसी ॥ २१४ ॥ यद्दुष्टसंस्तवेनापि, सन्तो नो यान्ति दुष्टताम् । आजनेर्भोगियोगेऽपि, तत्स्वभावो मणिर्नहि ॥ २१५ ॥ करिष्येऽहं तत्स्वभावं, तत्स्वसाऽपि स्वसान्न तत् । को नाम कूपपतितं, निजं धीमाननुव्रजेत् ? ॥ २१६ ॥ दृष्ट्वा दोषं तदेकस्या, नान्या हातुं तत्रोचिता । विदग्ध ! दुग्धदग्धो हि, मुग्ध एव दधि त्यजेत् ॥ २१७॥ यद्वा किं भृशमुक्तेन, व्रीडामुक्तेन मेऽमुना ? । त्वत्कण्ठन्यस्तमालैव, मच्छीलं ज्ञापयत्वसौ ॥२१८॥ यावत् कुर्यामहं सम्यक्, शीलस्य परिशीलनम् । तावत्सद्यस्कपुष्पेव, मा म्लासीन् मालिकाऽप्यसौ ॥२१९॥ यदा तु शीलमालिन्यं, कुर्वीय मनसाऽप्यहम् । तदा म्लायत्वसौ सद्योऽसद्योगादिव साधुता ॥ २२० ॥ तन्निशम्य समुद्भूताश्चर्यः स्वीकृत्य तद्गिरम् । हस्तेकृत्य प्रशस्तेऽह्नि, तामहं समहामहम्॥ २२१ ॥ तत्तातदत्तं चादाय, यौतकं कृतकौतुकम् । जगामाहं निजं धाम, सोल्लासः सपरिच्छदः ॥ २२२ ॥ युग्मम् ॥ सा स्वामिन् ! दयितादत्ता, मालेयं मौलिगा मम । अस्या मदन्तिकस्थाया, जज्ञे द्वादशवत्सरी ॥ २२३ ॥ तच्छीलस्य प्रभावाच्च, देवस्येवानुभावतः । न शुष्यति म्लायति वा, मालिकेयमिलापते ! ॥ २२४ ॥ किञ्च—शीलानुभावात् सीताया, यथाग्निर्जलतां ययौ । छिन्नौ करौ कलावत्या, यथा जातौ पुनर्नवौ ॥ २२५ ॥ यथा सुदर्शनस्यासीत् , शूलिका सिंहविष्टरः । दवदन्त्याविरकरोत् , शुष्कनद्यां यथोदकम् ॥ २२६ ॥ पत्ये दत्तं शीलवत्या, स्मेरमब्जं यथाऽभवत् । सुभद्रा चालनिकया, पयः कूपाद्यथाऽकृषत् ॥ २२७ ॥ तथा तदर्पिता तस्याः,

---

१ विवाहकाले लब्धधनम् ॥

शीललीलायितादियम् । त्वत्कीर्त्तिरिव सुस्फूर्त्तिर्माला म्लायति न क्वचित् ॥ २२८ ॥ शीलस्याहो ! प्रभावोऽयं, प्रभो ! वाचामगोचरः । यद्वचो नातिवर्त्तन्ते, तद्वतोऽचेतना अपि ॥ २२९ ॥ अम्लानिहेतुर्मालाया, मयोक्तोऽयं यथातथः । अनुकूलं च सत्यं च, वाच्यं हि स्वामिनां पुरः ॥ २३० ॥ ततः स्माह नृपः स्मित्वा, शीलमाहात्म्यमीदृशम् । यदि वेत्सि तदा कार्षीः, किमेतदसमञ्जसम् ॥ २३१ ॥ एवं विज्ञानयुक्तोऽपि, सेवते दुर्नयं कथम् ? । करोपात्तप्रदीपोऽपि, कूपे पतति किं सुदृक् ? ॥ २३२ ॥ विज्ञानां खलु विज्ञानं, तदेव हि फलेग्रहि । येन द्विपोऽङ्कुशेनेवोन्मत्तः स्वात्माऽनुशिष्यते ॥२३३॥ अथ रागवशाच्चेत्त्वं, जानन्नप्यकरोरिदम् । रागाविष्टो हि शिष्टोऽपि, कार्याकार्यं न वीक्षते ॥ २३४ ॥ तदेमां स्वीकुरु मया, प्रदत्तां स्वानुरागिणीम् । रक्तीकृतजनत्यागस्त्वादृशां न हि युज्यते ॥ २३५ ॥ किञ्च—यथाऽदायि तदिष्टाय, त्वया स्वदयिता मृता । तथैवैतदभीष्टाय, तुभ्यमेतां ददाम्यहम् ॥ २३६ ॥ ददे विरहदुःखं हि, युवयोर्नवयोः कथम् । सर्वस्यापीष्टविरहो, यद्वह्निरिव दुःसहः ॥ २३७ ॥ अन्यच्च—प्राज्ञैः स्त्रीचरितं ज्ञानामपि दुर्बोधमीरितम् । इमामहं पर्यणयं, तत्परीक्षाकृते कृतिन् ! ॥ २३८ ॥ दास्याम्युपपतेरेव, यद्यमो भात्रिनीत्वरी[2] । इत्यन्तर्निश्चिकायाऽहं, स्वीकुर्वन्नप्यमूं तदा॥२३९॥ अत्रैकस्तम्भसौधे चापरेभ्यो रक्षितुं न्यधाम् । एतदिच्छापूरणेनान्वहं च सुखिनीं व्यधाम् ॥ २४० ॥ तथाऽपि तद्विज्ञवचः सत्यीकर्त्तुमिवासकौ । स्वैरं प्रावर्त्तत न्यस्ता, रमेव हरिणाम्बुजे ॥ २४१ ॥ उक्तं च—

कल्लोलैः सह पांसुखेलनतया लोलेयमित्याशयादेकस्तम्भसरोजसौधकुहरे सिन्धोः सुता शौरिणा ।

---

१ शीलवतः । २ इत्वरी व्यभिचारिणी ॥

यन्मुक्तापि पितामहप्रहरके छेकेयमिन्दोः करैर्निर्यात्यंशुकरैरुपैति च नमो नारीचरित्राय तत् ॥ १ ॥

इत्थं च चेष्टमानेयमानेयं मनसि व्यधात् । अश्रद्धेयमपि प्राज्ञवाक्यं तद्वाक्यमयानुगम् ॥ २४२ ॥ तद् यदर्थं स्वीकृतेयं, सोऽर्थः सिद्धिं बभाज मे । कृतकृत्योऽपि नीरागां, भजाम्येनामथो कथम् ? ॥ २४३ ॥ स्यादस्यामनुरागोऽपि, नीरागायां कथं मम ? । नारी विरक्ता नाऽरीणां, सादृश्यं ह्यतिवर्त्तते ? ॥ २४४ ॥ न वां नवाङ्गभाजौ निर्विशयौ विषयौ रुषाम् । कुर्वे व्यङ्गौ निर्धनौ वा, सत्यसन्धतया ध्रुवम् ॥ २४५ ॥ तन्मा भैषीरिमामङ्गीकृत्य याहि स्वमन्दिरम् । युवां युवाना माकार्ष्ट, भूयो विप्लवमीदृशम् ॥ २४६ ॥ इहायासि पथा येन, रहस्तेन नयेरिमाम् । यथा जनो न जानाति, तवान्यायं क्षमां च मे ॥ २४७ ॥ तद्दिष्टवैद्यादिष्टाभं, मन्यमानो विभोर्वचः । स्वीचक्रे तां धनी वामदेवो देवोपगामिव ॥ २४८ ॥ क्षमयित्वा ततः स्वागो, नत्वा भूमीशमीश्वरः । ययौ सुरङ्गामार्गेण, स्वं वेश्म स्वैरिणीयुतः ॥ २४९ ॥

सर्वंसहागुणधरः क्षमया सुपर्वसर्वंसहाधरदृढस्थितिरस्तगर्वः ।
सर्वंसहाभृदपि वेश्म निजं जुजोष, सर्वं सहायमिव विश्वजनं तुतोष ॥ २५० ॥

॥ इति श्रीतपागच्छाधिराजश्रीविजयदानसूरीश्वरशिष्यमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्याय श्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिविरचितायां चम्पकमालाकथायां तृतीयः प्रस्तावः ॥

---

१ प्राणव्यपरोपणेन युवाम् । २ महादेव ॥

अथ राजसभावस्थो, राजा विधिरिवान्यदा । पुरो हास्यगृहास्यानां, चतुर्णां नर्ममन्त्रिणाम् ॥ १ ॥ सत्याश्चम्पकमालायाः, शीलमाहात्म्यमद्भुतम् । अवर्णयलब्धवर्णविश्रुतश्रीर्यथाश्रुतम् ॥ २ ॥ युग्मम् ॥ तन्निशम्य समुद्भूताश्चर्यास्तेऽप्यवदन् विभो ! । इदं हि भाव्यसंभाव्यमाभाव्यं तन्न सूनृतम् ॥ ३ ॥ प्रोक्तो यद्यपि शास्त्रेषु, सर्वसिद्धिविधायिनः । ब्रह्मणो ब्रह्मण इव, प्रभावो भुवनाद्भुतः ॥ ४ ॥ तथाऽप्यैदंयुगीनानां, मीनानां विषयाम्भसः । नृणां स्त्रीणां च तच्छुद्धं, क भवेचलचेतसाम् ? ॥ ५ ॥ नरः स्यात् त्वादृशः कश्चिच्छुद्धशीलोऽपि शुद्धधीः । स्त्रियस्तु प्रियकौटिल्याः, शुद्धशीलधराः कथम् ? ॥ ६ ॥ वाक्कायाभ्यां काऽपि शीलं, लज्जाद्यैः शीलयेदपि । चेतःशुद्ध्या तु तत्स्त्रीणां, दुष्पालं तच्चलत्वतः ॥ ७ ॥ मनो विना च यन्नाथ !, शीलस्य परिशीलनम् । मन्दुरावद्धाश्वशीलतुलामेव प्रयाति तत् ॥ ८ ॥ तादृशस्य च शीलस्य, स्यान्माहात्म्यमिदं कथम् ! । न शुद्धवस्तुकार्यं हि, तदाभासेन जायते ॥ ९ ॥ या च तत्कान्तमौलिस्थमाल्यस्याऽम्लानिरीक्षिता । सा न शीलोद्भवा किं तु, देवताद्यनुभावजा ॥ १० ॥ तन्मायिन्या तया नूनं, वञ्चितोऽस्ति धवो निजः । मायां कृत्वा दृढामिन्द्रजालिक्येत्राखिलो जनः ॥ ११ ॥ तन्निशम्य जगौ राजा, मा वादिष्टेति यूयकम् । बहुरत्ना हि भूस्तेन, शुद्धशीलाऽपि सा भवेत् ॥ १२ ॥ कालेऽत्रापि सुशीलः स्याद्यथा कश्चिन्नरेष्वपि । तथाऽजिह्मब्रह्मचर्या, न स्यात् स्त्रीष्वपि काऽपि किम् ? ॥ १३ ॥ सत्यप्येवं यदि स्याद्वस्तस्याः साधुत्वसंशयः । तत्किं यूयं तत्परीक्षां, कुरुध्वं न विचक्षणाः ! ॥ १४ ॥ परीक्षामन्तरेण स्यान्न हि सत्तत्त्वनिर्णयः । विना परीक्षां निष्कोऽपि नाश्नुते निष्कलङ्कताम् ? ॥ १५ ॥ इत्युक्ता भूभुजा

१ चिन्तनीयम् । २ दीनारोऽपि ॥

दुष्टधीसखास्तेऽपि धीसखाः। प्रमाणमादेश इति, प्रोच्य स्वस्वगृहानगुः ॥ १६ ॥ त्यक्तक्रमाः कृतान्यायप्रक्रमा वक्रमानसाः। ते क्रमाद्विक्रमादित्यपुर्या निर्याय मन्त्रिणः ॥ १७॥ चम्पायामस्तकम्पायां, जग्मुरेकैकशः पृथक्। स्वैरं स्वल्पपरीवारास्तत्रा-स्थुश्च पृथक् पृथक्॥१८॥युग्मम्॥तेष्वाद्यो मूलदेवाख्यस्तस्थौ दम्भाम्बुनीरधिः। वृद्धाया धाम्नि कस्याश्चित्, सार्थेशगृहपार्श्वगे ॥१९॥दूतीमावर्जयच्चैकां, कुलटाकुलदेवताम्। पार्श्वे चम्पकमालायास्तां प्रैषीच्चानुशिष्य सः॥२०॥ सा गत्वा तां रहोऽवादीदहो! रूपमहो! रमे! । त्वत्प्रियाङ्गद्रव्यशालास्वस्ति स्वस्ति मनोरमे!॥२१॥ कियान् कालोऽभवद्बाले!, कान्तस्य प्रोषितस्य ते। कथं च सहसे हन्त!, विरहं तस्य दुस्सहम्?॥ २२॥ विना रमणमन्याऽपि, रमणी स्यात् सुदुःखिता। किं पुनस्त्वादृशी दक्षग्रामणी-र्नवयौवना?॥ २३ ॥ भर्त्ताऽपि तव लुब्धानां, धुरीणः खलु दृश्यते। त्वां हित्वाऽन्यत्र वित्तार्थं, यः श्रीमानप्यटाट्यते ॥ २४ ॥ हरेः प्रियायामासक्तः, संभ्रमी बंभ्रमीति यः। अन्यासक्ते शठे तत्र, प्रतिबन्धस्तवास्तु कः?॥ २५॥ यौवनो-रुवने कामकण्ठीरवसुभैरवे। योऽगाद्विहाय त्वां बालां, ततोऽन्यः कोऽस्तु निर्दयः॥ २६ ॥तत्तदेकाग्रतां हित्वा, हितां शृणु गिरं मम। स्वैरं रमस्व सत्पुंसा, मनोऽभीष्टेन केनचित्॥ २७॥ भोगान् विना हि विफलं, तारुण्यं कासपुष्पवत्। भो-गाङ्गं चादिमं स्त्रीणां, पुमान् पुंसामिवाङ्गना॥ २८॥ न च वाच्यं पुमान् श्रेष्ठगुणवान् क भवेत्? इति। यद्भावी सद्गुणः कोऽपि, पुंस्वपि त्वं वशास्विव॥२९॥गुणी च गुणसङ्गाय, स्वत एव प्रवर्त्तते। प्रवर्त्तयति हंसं हि, कोऽब्जिनीसङ्गहेतवे॥३०॥दूर-तोऽपि समभ्येति, गुणिसङ्गकृते गुणी। त्वत्सङ्गाय यथाऽवन्त्या, इहायातोऽस्ति धीसखः॥ ३१ ॥ स हि सर्वकलाशाली,

---

१ 'अहो' इति संबोधने। २ सिंह—॥

शालीनो रूपमन्मथः । दक्षः प्रियंवदः स्थूललक्षः सलक्षशेखरः ॥ ३२ ॥ मूलदेवाभिधः पूर्वदेवाचार्य इवोग्रधीः । क्रमायातो विक्रमार्कभूभर्त्तुः सचिवाग्रणीः ॥ ३३ ॥ मर्त्यात् कुतश्चिदाकर्ण्य, त्वदीयान् प्रगुणान् गुणान् । त्वत्सङ्गिसंगस्यैवात्रागतोऽस्ति भृशमुत्सुकः ॥ ३४ ॥ त्रिभिर्विशेषकम् ॥ प्राहिणोच्च स एवात्र, स्वाशयावेदनाय माम् । न ह्याशयं गोपयितुमुग्ररागः प्रभूयते ॥ ३५ ॥ तत्स्वानुरूपं रूपाद्यैरभिरूपे ! भजस्व तम् । प्राज्यपुण्योदयप्राप्यं, भाग्यसौभाग्यशेवधिम् ॥३६॥ तेनाखिलवशाचित्तहारिणा सौख्यकारिणा । न याऽक्रीडन्मुधा तस्या, यौवनं वनपुष्पवत् ॥ ३७ ॥ तत्तमाकारय क्षिप्रमवधारय मन्दिरम् । मावधीरय तं चिन्तामणिवच्चिन्तितप्रदम् ॥ ३८ ॥ व्यक्ते ! वक्तव्यमुक्तं ते, वद सद्यस्तदुत्तरम् । स्वहृद्गेहस्थसद्भावप्रादुर्भावनदीपकम् ॥ ३९ ॥ इत्युदित्वा क्षणं मौनमुद्रां सा दूतिका दधौ । तदीयमुत्तरं श्रोतुं, सावधाना समुत्सुका ॥ ४० ॥ सती मतिमती साऽथ, तन्निशम्येत्यचिन्तयत् । व्यसनासक्तमुन्मत्तं, धिग् धिक् तं धीसखाधमम् ॥४१॥ न्यायिना विक्रमार्केण, किमसौ धीसखः कृतः ? । धिक्कारयोग्यो व्यसनी, नाधिकारित्वमर्हति ॥ ४२ ॥ न्यस्तो भाति सदाचारेऽधिकारो नापरे नरे । निहितो राजति स्वर्णे, मणिस्त्रपुणि नो पुनः ॥ ४३ ॥ नरं ज्ञात्वाऽप्यनाचारं, यः करोत्यधिकारिणम् । स नाथोऽपि सदाचारः, कथं श्रद्धीयते बुधैः ? ॥ ४४ ॥ क्रमायातत्वमोहाद्वा, दुष्टत्वाज्ञानतोऽथवा । राज्ञा बुद्ध्यादिमत्त्वाद्वा, कृतो भाव्येष धीसखः ॥ ४५ ॥ सोऽयं मन्त्री कथमभूद्दूरतोऽपि रतो मयि ? । मामश्रौषीत् कुतो वाऽयं, स्थितां देशे दवीयसि ॥ ४६ ॥ रूपवत्यो युवत्यः स्युः, सर्वत्राप्युन्मदाः सदा । ता विहाय स्वदेशस्थाः, कथं



१ पूर्वदेवा दैत्यास्तेषामाचार्यः शुक्राचार्य इत्यर्थः । २ मावगणय ॥

वाऽत्रायमागमत् ? ॥ ४७ ॥ यदि वा व्यवसायार्थं, भर्त्ताऽवन्त्यां गतोऽस्ति मे । स च स्वच्छमतिर्गच्छन्, भावी नित्यं नृपान्तिके ॥ ४८ ॥ तदा चम्पकमालां तां, प्रेक्ष्य मत्प्रियपार्श्वगाम् । तस्याश्चाम्लानतां नित्यं, ज्ञात्वा मच्छीलहेतुकाम् ॥ ४९ ॥ तद्विध्वंसचिकीर्नूनमायातोऽसौ भविष्यति । गुणिनां हि गुणान् हन्तुं, खलः स्यात् खलु सादरः ॥ ५० ॥ युग्मम् ॥ विधुन्तुदो विधुज्योत्स्नां, दुर्वायुर्वा घनोन्नतिम् । यथा न सहते तद्वत्, साधुकीर्त्तिमसज्जनः ॥ ५१ ॥ तदेष द्वेषवानार्येऽनार्यबुद्धिः स्वभावतः । प्रजिघांसतु मच्छीलं, न तु तद्धन्तुमीश्वरः ॥ ५२ ॥ जिघृक्षुस्तक्षकशिरोमणिं न स्यात् सुखी यथा । तथा मच्छीलविध्वंसं, चिकीर्षुरयमप्यहो ! ॥ ५३ ॥ सम्यक् प्रतिवचस्तस्य, ततो दूतिकयाऽनया । ज्ञापयामि तदाकूतामयप्रशमनौषधम् ॥ ५४ ॥ यद्वाऽसौ यौवनधनाधिकाराख्यत्रिदोषवान् । तदुत्थदर्पकोन्मादात्, प्रलपन्नसमञ्जसम् ॥५५॥ विवेकपाटवं गन्ता, न हि मद्वाक्यभेषजैः । सन्निपातो हि नापैति, चिकित्सां परुषां विना ॥ ५६ ॥ युग्मम् ॥ यतः—

संपनीपद्यते यावन्नानुरूपा प्रतिक्रिया । तावन्नैवामयो याति, प्रतिपक्ष इव क्षयम् ॥ १ ॥

यथास्थिते च स्वाकूते, ज्ञापिते न प्रतिक्रिया । तद्योग्या जायत इति, मायामायामयेऽधुना ॥ ५७ ॥ महात्मानोऽपि कुर्वन्ति, मायां कार्यविशेषतः । निग्रहीतुं बलिं विष्णुर्नाभूत् किं नाम वामनः ? ॥ ५८ ॥ ध्यात्वेति दूतिकामेवं, सा जगाद मनस्विनी । साधु साधु समायासीर्दूतिके ! त्वं मदन्तिके ॥ ५९ ॥ स्यान्मन्मथव्यथाक्रान्तं, प्रायो हि तरुणीमनः । तां व्यथां हन्तुमगदंकारस्तु प्रिय एव हि ॥ ६० ॥ तद्वियोगे च सा पीडा, पीडयन्ती मनो भृशम् । सन्तापव्यापमतनोत्तना-

---

१ विस्तारयामि । २ वैद्यः । ३ सती ॥

वपि ममातनुम् ॥ ६१ ॥ कुलाचारं च लज्जां च, प्रोलङ्घयितुमक्षमा । ग्रीष्मार्कतापं वल्लीव, चिरं सेहे तमप्यहम् ॥ ६२ ॥ मृगीव दावतापार्त्ता, शफरीवोष्णरेणुगा । अन्यदा च स्मरार्त्ताऽहमतीवव्याकुलाऽभवम् ॥ ६३ ॥ अचिन्तयं च कान्तो मे, लोभावेशवशंवदः । देशान्तरेषु भ्रमति, न त्वायाति निजं गृहम् ॥ ६४ ॥ मदनार्त्तिर्मया चेयं, वडवानलदुस्सहा । कियच्चिरं विसोढव्या, जीवितव्ययकारिणी ॥ ६५ ॥ तत्कञ्चित् कामुकघनं, नानागुणसुधाञ्चितम् । गवेषयामि विषयानलशान्तिविधायिनम् ॥ ६६ ॥ एवमुत्कण्ठिता यावदहं चेतस्यचिन्तयम् । तावत् पुण्यैरिवाकृष्टा, त्वमागा मम सन्निधौ ॥६७॥ शुभवत्या भवत्या चागामिनं कामिनं नरम् । उदीर्यानुगृहीताऽहं, सञ्जीवातुमिवातुरा ॥ ६८ ॥ को युवा सद्गुणो भावी, सङ्गन्ता स च मे कथम् ? । इति चिन्तामहार्षीस्त्वं, मम वात्येव रेणुकाम् ॥ ६९ ॥ कुल्ययेव त्वयानीतं, तत्सन्देशामृतं मम । चित्तालवालगं चक्रे, कामितद्रुं सपल्लवम् ॥ ७० ॥ किं बहूक्तेन हे दूति !, समयप्राप्तया त्वया । निर्वापिताऽहमत्यर्थं, कादम्बिन्येव मेदिनी ॥ ७१ ॥ तत्सङ्गायाथ सोत्साहं, मनो मे जायते भृशम् । कुतश्चित् कारणात् किञ्चित्, विलम्बिष्ये तथाऽप्यहम् ॥ ७२ ॥ तत्तुर्येऽह्नि दिनादस्माद्वपुर्मात्रपरिच्छदम् । यामिन्याः प्रथमे यामे, प्रेषयेस्तं मनोरमम् ॥७३॥ किं च वित्तं विना भोगसामग्री नैव जायते । तद्दानं च विनौदार्यपरीक्षाऽप्यस्य नो भवेत् ॥ ७४ ॥ दानं च प्रोच्यते प्राज्ञैः, प्रीतेर्लक्षणमादिमम् । तदग्रतः स्वर्णलक्षं, प्रेषयत्वेष धीसखः ॥ ७५ ॥ याहि भद्रे ! समाख्याहि, तस्मै मदुक्तमुत्तरम् । आश्वासय भृशोत्कण्ठं, तं च मत्सङ्गमाशया ॥ ७६ ॥ इत्थं निगम्य सा सम्यक्, तस्मै स्माह तदुत्तरम् । कृतार्थमानी तच्छ्रुत्वा, सचिवः सोऽप्यमोदत ॥ ७७ ॥ धान्यन्यासमिषेणाथ, सा सती वसतिर्धियाम् । उण्डामकारयद्गर्त्तां, गृहा-

पवरके क्वचित् ॥ ७८ ॥ गर्त्ताधस्तनभूमिं च, सा कृपालुरकारयत् । सत्करेणुगतिः सिन्धुसत्करेणूत्करैर्मृदुम् ॥ ७९ ॥ गर्त्तास्योपरि तल्पं च, कल्पयामास सा सुधीः । विरलैस्तन्तुभिर्व्यूतं, स्वच्छांशुकसमावृतम् ॥ ८० ॥ अथो यथोक्तसमये, प्रेषितस्वर्णलक्षकः । कुपथ्यकल्पं नेपथ्यं, बिभ्रन्मारामदीपकम् ॥ ८१ ॥ एलादिमिश्रताम्बूलसौरभभ्राजिताननः । कर्पूर-मिश्रघुसृणपङ्कपङ्किलभूघनः ॥ ८२ ॥ माल्यगर्भितधम्मिलजितोपात्तेन्दुराहुकः । पुष्पधन्वधनुष्कल्पपुष्पमालाढ्यकन्धरः ॥ ८३ ॥ कस्तूरीपङ्किलश्मश्रुर्धूपधूपितचीवरः । रात्रौ तस्यामगात्तस्याः, सन्निधौ धीसखोऽपि सः ॥ ८४ ॥ चतुर्भिः कलापकम् ॥ महत्या प्रतिपत्त्या तं, सा सती समुपाचरत् । अन्तर्गुञ्जेव नीरागा, श्रयन्ती रक्ततां बहिः ॥ ८५ ॥ प्रोन्मादसं-चिवः सोऽथ, सचिवः करसंज्ञया । प्रदर्शिते तया सद्यस्तत्रापवरकेऽविशत् ॥ ८६ ॥ उपाविशच्च पर्यङ्के, यावत्तत्रासमीक्ष्य सः । तावत्तदाशया साकं, तुत्रुटुस्तल्पतन्तवः ॥ ८७ ॥ अन्तर्गर्ते निराधारः, पापात्मा सोऽपतत्ततः । प्रस्तावयन्निव श्वभ्र-पातमायतिभाविनम् ॥ ८८ ॥ इतश्च—परेऽपि विक्रमादित्यामात्यास्तत्रागताः पुरा । सहस्रदेवश्रीसारबुद्धिसाराह्वयास्त्रयः ॥ ८९ ॥ तस्यै पृथग् दूतिकास्यैरावेदितनिजाशयाः । तस्या एव निशोऽन्यान्ययामेष्वाकारितास्तया ॥९०॥ तथैवोपागता-स्तत्र, तल्पे तत्रोपवेशनात् । तस्मिन्नेवापतन् गर्त्ते, मिथः सङ्गोत्सुका इव ॥ ९१ ॥ त्रिभिर्विशेषकम् ॥ गर्त्तातलं सिकतिलं, वीक्ष्य तेऽथ जगुर्मिथः । अहो! दयालुरेषा यन्नाङ्गभङ्गं चकार नः ॥ ९२ ॥ गर्त्ताप्रपातनं त्वेतत्तया शिक्षाकृते कृतम् । सन्तो ऽप्यापातकटुकं, कुर्वन्त्यायतिसुन्दरम् ॥ ९३ ॥ किं चास्याः सत्प्रशस्याहो!, धिषणा धिषणाधिका । यया दम्भाञ्चिता

१ कन्दर्परोगदीपकत्वान्नेपथ्यस्य कुपथ्यस्य पथ्यकल्पता । २ संयुक्तः ॥

बुद्धिनिचिता वञ्चिता वयम् ॥ ९४ ॥ विषयार्त्ता वयं यद्वा, स्वदोषेणैव वञ्चिताः । लभन्ते शलभा यद्वदिन्धनत्वं धनञ्जये ॥ ९५ ॥ विषयाशामयध्वस्तविवेकवरलोचनान् । धिगस्मान् गर्तपतितान्, द्विरदानिव दुर्मदान् ॥ ९६ ॥ विषयामिषलीनानां, मीनानामिव दुर्द्धियाम् । दुर्दशागलिसंबन्धः, स्यादेवात्र किमद्भुतम् ? ॥ ९७ ॥ तद्विषाद्विषया नूनं, गुणैर्वर्णेन चाधिकाः । विषं हि बाधते भुक्तं, विषयास्त्वीहिता अपि ॥ ९८ ॥ अस्याः शीलक्षयं कर्त्तुकामाः कामाकुला वयम् । अप्राप्तकामाः प्राप्ताः स्मो, ही दशां कामतर्किताम् ? ॥ ९९ ॥ गर्त्ते कूपानुरूपेऽस्मिन्, पातिताः पातकैः स्वकैः । स्थास्यामः कथमाकालं, नरके नारका इव ! ॥ १०० ॥ अनुक्त्वोपागतान् गर्त्तागतान् दुष्कर्मसङ्गतान् । मार्गयन् भृत्यवर्गोऽपि, लप्स्यतेऽस्मान् कथं हहा ? ॥ १०१ ॥ गर्त्तादस्मान्महावर्तादिव पोताः कथं वयम् । निर्यास्यामः स्वसौधे च, यास्यामः श्यामबुद्धयः ? ॥ १०२ ॥ इत्यादि प्रलपन्तस्ते, चिन्ताचान्ततया भृशम् । गर्त्तासूकरवत्तत्र, गर्त्ते तस्थुः सुदुःखिताः ॥१०३॥ अथोदवरिकाबद्धशिक्कस्थैः शरावकैः । आदाय कोद्रवाद्यन्नं, करकैः सलिलं पुनः ॥ १०४ ॥ भोः सावधानाः ! गृह्णीत, भोजनादीति वादिनी । दयां कृत्वा दयांचक्रे, सा तेषां प्रत्यहं मती ॥ १०५ ॥ युग्मम् ॥ लघु स्याल्लङ्घनगुणं भोजनं खल्वितीव सा । तेषां स्मरज्वरार्त्तानां, तादृग्भोजनमार्पयत् ॥ १०६ ॥ तदपि प्राप्यते जातजीविताशा मुदं दधुः । अभ्यधुश्चाऽहो ! दयाऽस्या, यद्दस्यूनपि पाति नः ॥ १०७ ॥ अस्याः शीलधनं कीर्त्तिदेहं चापजिहीर्षवः । द्वेधाऽपि दस्यवो जाता, दोषजातान्विता वयम् ॥ १०८ ॥ तेषामपीयमस्माकं, जीवनोपायकारिणी । सतीमतल्लिका प्रष्ठा, दयालुष्वपि

१ वह्नौ । २ शीलधनापजिहीर्षातो दस्यवश्चौराः कीर्त्तिशरीरापजिहीर्षातो दस्यवो रिपवः इति द्विधा दस्यवः ॥

दृश्यते ॥ १०९ ॥ इत्यादिवाचिनस्तेऽहर्निशं चिन्ताविधायिनः । स्वस्थान एव विण्मूत्रत्यागिनः पशुजातिवत् ॥ ११० ॥ कायक्लेशावमोदर्यरसत्यागादिकं तपः । तप्यमाना विना भावं, द्वेधा निर्बलविग्रहाः ॥ १११ ॥ दीनश्वान इवान्याशा-विवशा विरसाशिनः । षट्पल्यतुल्यान् षण्मासांस्ते कष्टादत्यवाहयन् ॥ ११२ ॥ त्रिभिर्विशेषकम् ॥

इतश्च कञ्चनारातिं, जित्वा विक्रमपार्थिवः । चम्पामुपागाद्गगनधूलिसार्थेशसंयुतः ॥ ११३ ॥ ततो राजाज्ञया सार्थनाथः स्वगृहमागमत् । तस्मै सा सत्यवक्त्र सत्यां, वार्त्तां तां मन्त्रिगोचराम् ॥११४॥ तदा तच्छीलवीक्षार्थं, प्रेषितांस्तत्र मन्त्रिणः । स्मृत्वा नृपोऽपि तच्छुद्ध्यै, यावदासीत् समुत्सुकः ॥ ११५ ॥ तावत्सार्थपतिर्नुन्नः, सुधिया स्वीयकान्तया । ससैन्यं विक्रमनृपं, भोजनाय न्यमन्त्रयत् ॥ ११६ ॥ नृपोऽप्यत्याग्रहात्तस्य, तद्वचः प्रत्यपद्यत । सार्थेशोऽगात्ततो धाम, तत्सामग्रीसमुद्यतः ॥ ११७ ॥ स पक्वान्नादिसामग्रीं, सर्वां छन्नामकारयत् । धामस्वन्येषु धनिनां, सर्वमीषत्करं खलु ॥ ११८ ॥ दध्यौ भूपस्तु तुष्टो नः, सिद्धं खलु समीहितम् । मयाऽऽगतेन गेहेऽस्य, मन्त्रिवार्त्ताऽपि लभ्यते ॥ ११९ ॥ किं त्वेतत् कृतसामग्रीयोग्यं लात्वा परिच्छदम् । अदनायास्य सदने, गमनं मम युज्यते ॥ १२० ॥ हर्षाद्यद्यप्यसौ भोक्तुं, ससैन्यं मां न्यमन्त्रयत् । सद्यस्तथाऽपि सामग्री, क्व स्यान्मत्सैन्यभोजिका ? ॥ १२१ ॥ प्रायो मितंपचा एव, वाणिजाः स्युः स्वभावतः । तेषां चाल्पाऽपि सामग्री, बह्वीति प्रतिभासते ॥ १२२ ॥ तत्सामग्रीं समीक्ष्यैव, भोक्तुं नेष्ये परिच्छदम् । मा मां श्रितस्य तस्याभूज्जनेऽपभ्राजनान्यथा ॥ १२३ ॥ विमृश्येति विशामीशस्तत्सौधेऽसौ धियांनिधिः । प्रातः प्रैषीच्चरं सोऽपि,

गत्वाऽऽयातोऽब्रवीदिति ॥ १२४ ॥ दिवीव देव! तद्गेहे, नैव धूमोऽपि दृश्यते । पाकार्हापि प्रभो! पाकसामग्री तत्र नास्ति तत् ॥ १२५ ॥ तन्निशम्य क्षमानाथः, क्षमावानप्यभूत्तदा । स्वं विप्रतारितं मन्यमानो मन्युभराकुलः ॥ १२६ ॥ दध्यौ च मां निमन्त्र्यापि, यो निश्चिन्तोऽवतिष्ठते । पातकी वातकी सोऽस्ति, मन्दो वा ग्रहिलोऽथवा ॥ १२७ ॥ अथ सौधेऽस्य यास्यामि, भोक्तुं भूरिपरिच्छदः । प्रेक्षे विनाऽपि सामग्रीं, कर्त्तातिथ्यं कथं मम? ॥ १२८ ॥ इति तत्रापदोषेऽपि, दोषं भूपो व्यभावयत् । तत्त्वाज्ञाने हि विज्ञानामप्यहो! धीविपर्ययः ॥ १२९ ॥ इतश्च—

अस्थिचर्मावशेषाङ्गांस्तान् गर्त्तागतमन्त्रिणः । उपागत्याब्रवीदेवं, सार्थनाथः प्रियाधिया ॥ १३० ॥ भो धीसखा! मदादेशं, कुरुध्वं यद्यसंशयम् । तदोद्धरामि वो गर्त्तात्, सद्धर्मो नरकादिव ॥ १३१ ॥ यदीषदपि मद्वाक्यवैपरीत्यं करिष्यथ । तदा भूयोऽपि गर्त्तेऽस्मिन्नेव क्षेप्स्यामि निश्चितम् ॥ १३२ ॥ ते प्रोचिरे करिष्यामो, न त्वदाज्ञाविपर्ययम् । गर्त्ताद्दुद्धरदुःखार्त्तानस्मानस्मात्तदुद्धर ॥ १३३ ॥ दयानदीन! दीनेषु, दयामस्मासु धारय । तक्षेव दारु नो दुःखं, दारुणं द्राग् विदारय ॥ १३४ ॥ सार्थपस्तांस्ततो गर्त्तादाकृष्य द्रागमिस्नपत् । रक्तचन्दनपङ्कौघैः सर्वाङ्गं विलिलेप च ॥ १३५ ॥ तान् यक्षानिव सद्यक्षकर्दमेन प्रपूज्य सः । पुष्पैर्माल्यैश्च विस्मेरैः प्राज्यैरानर्च बन्धुरैः ॥ १३६ ॥ ईषत्प्रकाशे देशेऽन्तर्गर्भगेहं निवेश्य तान् । रहो भोज्यादिसामग्रीं, सर्वां न्यास्थत्तदन्तिके ॥ १३७ ॥ अशिक्षयच्च तानेवं, पश्यत्स्वन्यजनेषु भोः! । युष्माभिर्निर्निमेषाक्षैः, स्थातव्यं त्रिदशैरिव ॥ १३८ ॥ भूमीजानौ च भुञ्जाने, दातव्यं द्राग् यथोदितम् । सर्वं भोज्यादिवस्त्रादि,

१ बालकयोरप्यपि । २ 'स मे' इत्यपि । ३ 'यथोचितम्' इत्यपि ॥

पश्चान्मोक्ष्यामि वः स्वयम् ॥ १३९ ॥ तत्सर्वे प्रतिपन्नेषु, तेषु सार्थपतिः स्वयम् । उपागाद्भूपतिं तं च, प्रणम्येति व्यजिज्ञपत् ॥ १४० ॥ संपन्नयाढ्यसंपन्नः, सांप्रतं जक्षणक्षणः । तत्पुण्यीक्रियतां पादावत्रधार्य गृहं मम ॥ १४१ ॥ भूसुत्रामाऽपि सद्धामा तद्धामाऽगात् स्वसैन्ययुक् । सन्दिग्धमानसोऽप्युच्चैर्दाक्षिण्यादिग्धमानसः ॥ १४२ ॥ गेहद्वारे च संप्राप्तमवनीशमवाकिरत् । लाजैः स्वर्णादिपुष्पैश्च, मौक्तिकैश्च तदङ्गना ॥ १४३ ॥ ततस्तं श्रितकौपीनं, कौ पीनयशसं नृपम् । शतपाकादिभिस्तैलैः, सोऽभ्यानञ्ज सुगन्धिभिः ॥ १४४ ॥ लघुमध्यदृढैः पाणिव्यापारैः स यथास्पदम् । मर्दयन् भूभुजः कायं, सानन्दं तन्मनोऽतनोत् ॥ १४५ ॥ सदुद्वर्त्तनचूर्णैश्च, समुद्वर्त्य सुगन्धिभिः । जलैः कवोष्णैः कुसुमवासितैस्तमसिस्नपत् ॥ १४६ ॥ उन्मृज्याङ्गं ततः शुद्धवाससा स व्यलेपयत् । सुसारघनसाराढ्यश्रीचन्दनरसैर्घनैः ॥ १४७ ॥ मृगमीनमदोदारकर्पूरागुरुसंभवैः । धूपैरधूपयत्तस्य, वेणीं च व्याचितोदकाम् ॥ १४८ ॥ मूर्ध्नि मूर्द्धाभिषिक्तस्य, धम्मिल्लं माल्यगर्भितम् । गाङ्गाम्बुमिश्रयमुनावीचिजैत्रं बवन्ध सः ॥ १४९ ॥ विष्वग् माल्यावृतः किञ्चित्, प्रकाशस्तत्कचोच्चयः । अन्तर्लीनकुरङ्गस्य, पूर्णेन्दोः कमलां दधौ ॥ १५० ॥ कश्मीरजन्मपङ्केन, जात्यस्वर्णानुकारिणा । भाग्यश्रीवर्यपट्टाभं, तद्भाले तिलकं न्यधात् ॥ १५१ ॥ सवर्णे हि सवर्णेन, योगे स्यात् साध्वितीव सः । श्मश्रुमिश्रं व्यधाद्राज्ञो, मृगमीनमदद्रवैः ॥ १५२ ॥ धीह्रीविवेकलक्ष्मीनां वसन्तीनां मनोगृहे । दोला इव तदा राज्ञः, कण्ठे न्यस्ताः स्रजो बभुः ॥ १५३ ॥ इत्थं स्नानाधिवासादि, द्राक् परेऽपि परश्शताः । सामन्तादीनां यथाऽर्हं, सार्थेशादेशतो व्यधुः ॥ १५४ ॥ नृपोऽथ भोजनस्थानमागात् सार्थेशदेशितम् । यक्षीकृतामात्ययुक्तगर्भगेहस्य संमुखम् ॥ १५५ ॥ तान् गुह्यकीकृतामात्यान्नत्वा स्माहाथ

सार्थपः । यक्षा जक्षणसामग्रीमग्रिमां मे प्रदत्त भोः ! ॥ १५६ ॥ आसनानि ततस्तेऽदुस्तरवो नियता इव । स्थालादीनि च पात्राणि, भृङ्गाराख्यद्रुमा इव ॥ १५७ ॥ ततो द्राक्षाक्षोटचारुकुलीमुख्यां फलावलीम् । माधुर्यधुर्यस्वरसाधरीकृतसुधारसाम् ॥ १५८ ॥ खण्डोपलिप्तखाद्यानि, सुखाद्यान्यतिमार्दवात् । मानसामोदकान् सिंहकेसरादींश्च मोदकान् ॥१५९॥ घृतपूरांश्च संपूर्णचन्द्रमण्डलसोदरान् । पीयूषपूरसरसशर्कराक्षोदसुन्दरान् ॥ १६० ॥ अशोकवर्त्तीर्भोत्कारं, कुर्वतीः शोकवर्जितम् । विसर्पिसर्पिर्द्धारां च, सुपक्वां लपनश्रियम् ॥ १६१ ॥ प्राज्याज्यपक्वान् पक्वान्नप्रकारानपरानपि । स्वादिष्ठान् सार्थपादिष्टांस्ते सर्वे सत्वरं ददुः ॥ १६२ ॥ पञ्चभिः कुलकम् ॥ ततश्च शालिकूरं सन्, मुदङ्कुराभिवर्द्धकम् । निस्तुषां मुद्गदालीं च, सर्पीरसमरुस्थलीम् ॥ १६३ ॥ हैयंगवीनं सौगन्ध्या पीनं दीनत्वहृत्तनोः । धान्यपत्रफलोत्थानि, शाकानि विविधानि च ॥ १६४ ॥ मसृणं घुसृणोन्मिश्रमेलामेलनमञ्जुलम् । दधिकूरकरम्बं च, स्निग्धं कर्पूरवासितम् ॥ १६५ ॥ एलालवङ्गककोलपूगकर्पूरचूर्णकैः । श्रेष्ठान्यहिलतापत्रवीटकानि महान्ति च ॥ १६६ ॥ इत्यादि सार्थनाथोक्तं, सद्वस्त्राभरणादि च । सर्वेऽहंपूर्विकापूर्वं, ददुस्ते वटवासिनः ॥ १६७ ॥ पञ्चभिः कुलकम् ॥ तैरेवं दीयमानं च, यद्यदल्पमभूत्तदा । तत्तदन्यगृहाच्छन्नद्वारान्ये छन्नमार्पयन् ॥ १६८ ॥ कल्पवृक्षानिवाध्यक्षांस्तांश्च पूरितकामितान् । यक्षान् वीक्ष्य क्षमानाथो, विस्मितो ध्यातवानिति ॥ १६९ ॥ अहो ! धनी सभाग्योऽसौ, यस्यामी कामितप्रदाः । कुर्वन्ति शश्वदादेशं, गुह्यकाः किङ्करा इव ॥ १७० ॥ भवेयुरीदृशा यस्य, त्रिदशा वशवर्त्तिनः । व्यर्थं किमर्थमायासं, स कुर्यात्पाचनादिना ॥ १७१ ॥ यक्षा दौःस्थ्येभहर्यक्षा, दक्षाः कामितपूरणे । एते स्युर्यदि मद्गेहे, तत्कृतार्थो भवाम्यहम् ॥ १७२ ॥ भोजनानन्तरं तस्मात्

सार्थेशं नन्क्ममूनहम् । याचिष्ये स ह्युदारोऽमून्, दुर्देयानपि दास्यति ॥ १७३ ॥ एतेषां च प्रभावेण, यथेच्छं भोजयन् जनम् । संवर्द्धयिष्यामि यशः, पुण्यं चान्योपकारजम् ॥ १७४ ॥ यद्वा राज्ञा मया याञ्चा, कथमस्य करिष्यते । महतामपि याञ्चा हि, लाघवाय हरेरिव ॥ १७५ ॥ यदुक्तम्—

बलिअब्भत्थणि महु महणु लहुई हूआ सोइ । जइ इच्छह वडप्पणउं, देहु म मग्गउ कोइ ॥ १ ॥

लोकोपकारिणी याञ्चा, यद्वा सद्भिरपीष्यते । मेघा लोकोपकाराय, याचन्ते किं न वारिधिम् ? ॥ १७६ ॥ ध्यायन्निति तदेकान्तस्वान्तः कान्तः क्षितेस्ततः । न सम्यग् भोजनास्वादमपि वेदयते स्म सः ॥ १७७ ॥ तद्ध्यानतत्परत्वाच्च, मन्त्रिशुद्धिं चिकीर्षिताम् । स नास्मार्षीत्परासक्ततायाः स्वीयाङ्गनामिव ॥ १७८ ॥ अथ भुक्त्वा यथाकामं, विहिताचमनादरः । सार्थेशदत्तताम्बूलबीटकास्वादसुन्दरः ॥ १७९ ॥ अमात्ययक्षदत्तैः सन्माल्यभूषणचीवरैः । आतन्नुजिष्यं धनिना, कृतिना कृतसत्कृतिः ॥ १८० ॥ सार्थनाथं धरानाथः, सोपरोधमदोऽवदत् । देहि यक्षानमून्मह्यं, मित्र! चित्रविधायिनः ॥ १८१ ॥ त्रिभिर्विशेषकम् ॥ एते यद्यपि दुर्देयाश्चिन्तामणिवदिष्टदाः । तथाऽपि प्रार्थनामेनां, सखे! मा मे कृथा वृथा ॥ १८२ ॥ सार्थवाहस्ततः स्माह, स्वामिन्! किमिदमुच्यते ? । नान्यस्यापि वृथा कुर्वे, प्रार्थनां किं पुनः प्रभोः ? ॥ १८३ ॥ शक्तिमानपि यो वाञ्छां, पूरयेन्नार्थिनः पुमान् । तरवोऽपि ततः श्रेष्ठा, यथाशक्त्युपकारिणः ॥ १८४ ॥ यद्वा सेवकसत्कं यत्, सर्वं स्वामिन एव तत् । तत्स्वामिसत्का एवामी, तेनात्र प्रार्थनाऽपि का ॥१८५॥ सेवकेन च सद्वस्तु, दातव्यं स्वामिनां स्वयम् । इत्यमून् दातुमेवाहं, भोक्तुमामन्त्रयं प्रभून् ॥१८६॥ स्वामिना च स्वयममी, प्रार्थिताः प्रार्थितावहाः । एतद्वितरणोत्साहस्ततो

मेवर्द्धताधिकम् ॥ १८७ ॥ उपयोगोऽप्यमीषां स्याद्भूयान् स्वामिनिकेतने । तत्कृतार्था भवन्त्वेते, त्वदिष्टादिष्टसाधनात् ॥ १८८ ॥ स्कन्धावारे वृषस्कन्धाऽधुना पादोऽवधार्यताम् । तत्रानेष्ये द्रुतं पश्चान्मञ्जूषानिहितानमून् ॥ १८९ ॥ तेनैव मुदितोऽत्यर्थं, मुदितो भूधवस्ततः । अगच्छत् स्वच्छधीः सेनानिवेशं सपरिच्छदः ॥ १९० ॥ अथापवरकाकाराश्चन्दनस्थासकाङ्किताः । मञ्जूषामाल्यसजुषः, सज्जयामास सार्थपः ॥ १९१ ॥ तासु प्रत्येकमेकैकं, न्यस्य कृत्रिमगुह्यकम् । तास्ततः स्थगितद्वारा, भुजिष्यैरुदपाटयत् ॥ १९२ ॥ सोऽथ ताः प्राभृतीचक्रेऽनीकं नीत्वाऽवनीशितुः । कृतावहित्थो बोहित्थो, धियामित्थं जगौ च तम् ॥ १९३ ॥ स्वामिन् ! ये स्वामिनः प्रेष्ठाः, श्रेष्ठास्ते वटवासिनः । सन्मञ्जूषाजुषस्तोषजुषाऽऽनीता इमे मया ॥ १९४ ॥ एते ते देव ! सेवन्तां, सन्निधिं सन्निधेरिव । अभीष्टसृष्टिं कुर्वन्तु, बाहुदण्डा विधेरिव ॥ १९५ ॥ कार्यावसर एवैषां, दर्शनं पूजनं तथा । कार्यं कार्यविदार्येणान्यथा कुप्येयुरप्यमी ॥ १९६ ॥ श्रुत्वेति पार्थिवस्तुष्टः, स्माह सार्थेश ! सार्थकम् । मयि स्नेहमकार्षीस्त्वं, ददानोऽमून् सुदुर्लभान् ॥ १९७ ॥ वाक्कायाभ्यां बहिर्वृत्त्या, स्नेहं सन्दर्शयन्ति ये । तेषां न संस्यन्तर्वृत्त्या, स्निग्धस्तु त्वादृशोऽल्पकः ॥ १९८ ॥ तव प्रेमान्तरङ्गं च, निरणैषमहं सखे ! । उदारैरप्यदेयानामेषां वितरणाध्रुवम् ॥ १९९ ॥ ततश्च—तिष्ठासुर्यद्यपीह त्वं, भावी स्वस्थानमोहतः । तथाऽप्येहि मया साकं, वत्स ! वत्सलचेतसा ॥ २०० ॥ गुणानुरक्ते सुव्यक्ते, स्नेहाभ्यक्ते च मे दृशौ । त्वद्दर्शनस्य कान्तस्य, विश्लेषं न सहिष्यतः ॥ २०१ ॥ को वेद स्यान्न वा जातु, भूयः सङ्गो वियोगिनाम् । दुरापोऽभीष्टसङ्गश्च, तद्वियुज्येत न प्रियैः ॥ २०२ ॥ सार्थेश ! तन्न सार्थो मे, मोचनीयस्त्वयाऽधुना । धुनाति स्वास्थ्यवृक्षं हि, प्रियविश्लेषकुञ्जरः ॥ २०३ ॥ किं चौत्सुक्यं तव

भवेद्विना येनाङ्गनादिना ? । तं चानयेः सहाभीष्टवियोगः खलु दुःसहः ॥ २०४ ॥ सार्थेशः स्माह दुर्मोचा, जन्मभूर्यद्यपि प्रभो ! । त्वां तथाऽप्यनुयास्यामि, स्वामिंस्त्वत्प्रेममोहितः ॥ २०५ ॥ पत्नी पतिव्रता मित्रं, सौस्थ्यदौःस्थ्यसमक्रियम् । स्वामी चाकृत्रिमप्रेमा, विना पुण्यैर्न लभ्यते ॥ २०६ ॥ इत्युदित्वा गृहं गत्वा, सख्यौ सख्यौकसि स्वके । गृहव्यापारमारोप्य, सर्वं सर्वगुणान्विते ॥ २०७ ॥ आत्तसारपरीवारः, समं चम्पकमालया । सार्थनाथः क्षमानाथस्कन्धावारमुपासरत् ॥ २०८ ॥ ततोऽथ प्रस्थितः प्रातर्जाते मध्यंदिनक्षणे । सैन्यं न्यस्य क्वाऽपि तस्थौ, भूकान्तः श्रान्तसैनिकः ॥ २०९ ॥ सूपकारांस्तदा पाकसामग्रीकरणोद्यतान् । न्यवारयन्नृपः सर्वं, यक्षा दास्यन्त इत्ययम् ॥ २१० ॥ स्वयं तु विधिनिष्णातः, स्नातः पेटाः प्रकाश्य ताः । औत्सुक्यात् पुष्पधूपाद्यैर्यक्षानानर्च तान् नृपः ॥ २११ ॥ भक्तिप्रह्वोऽब्रवीच्चैवं भोः ! प्रसीदन्तु गुह्यकाः । सैन्ययोग्यां रसवतीं, सार्थेशस्येव दत्त मे ॥२१२॥ यथा बुभुक्षितान् श्रान्तान्, भोजयित्वा जनानमून् । युष्मच्छक्तिं विवेकं च, स्वकं सफलयाम्यहम् ॥ २१३ ॥ तेऽथ स्माहुर्नृपापीडं, व्रीडापीडाकुला अपि । नोपलक्षयसि स्वामिन् !, स्वभृत्यान् किं वदस्यदः ? ॥ २१४ ॥ ये सार्थेशवशाशीलपरीक्षार्थं गतास्तदा । निजान् जानीहि भूजाने !, तानस्मान्नर्मधीसखान् ॥२१५॥ धनिना तेन चास्मासु, यक्षत्वारोपणं कृतम् । नरत्वारोपणं चक्र्यास्विव कार्यविशेषतः ॥ २१६ ॥ आरोपेण च सद्भावकार्यं नाथ ! न जायते । रजःपर्वमहीशेन, तात्त्विकोर्वीशकार्यवत् ॥ २१७ ॥ सार्थेशधाम्नि चास्माभिर्यद्दत्तं सत्रमीहितम् । अदीयत तदीयं तत्, तन्नुन्नैर्भृतकैरिव ॥ २१८ ॥ तद्देव ! न वयं देवाः, किं तु त्वत्सेवका ध्रुवम् । देवात् प्राच्यामपि स्वीय-

१ तत्प्रेरितैः । २ कर्मकरैः ॥

शक्तिं गमितपूर्विणः ॥ २१९ ॥ स्वामिन्ननुगृहाण त्वं, ननु स्वाननुजीविनः । प्रणामकारणाद्यं च, मन्तुमेनं सहस्व नः ॥ २२० ॥ तच्छ्रुत्वा विस्मयप्रेमकारुण्यैर्भावसङ्करम् । दधानो भूधवः सर्वान्, मञ्जूषाभ्यश्चकर्ष तान् ॥ २२१ ॥ सूदान् पाकार्थमादिश्य, ततस्तान् धीसखान्नृपः । दृशा प्रेमस्पृशा पश्यन्नित्यूचे स्निग्धया गिरा ॥ २२२ ॥ हे सखायः ! कथं यूयमत्यर्थं क्षामकुक्षयः ? । व्यक्तकङ्कालदुष्कालरङ्कौपम्यं गताः समे ॥ २२३ ॥ कच्चित् सच्चित्तमुत्कारिरूपा अपि विरूपताम् । प्राप्ता यूयं कुतोऽसाध्यव्याधिव्याबाधिता इव ॥ २२४ ॥ हे वयस्याः ! वयस्याद्योत्तरे सत्यपि जज्ञिरे । भवन्तो निर्बलाः कस्माज्जराजर्जरिता इव ॥ २२५ ॥ वहन्तो हन्त ! शर्मोच्चैर्देवा दोगुन्दका इव । केनैवं प्रापिता यूयं, दुर्दशां दुर्दशां हहा ! ॥ २२६ ॥ किं बहूक्तेन युष्मासु, पूर्वावस्थासलक्षणम् । कुबेरौपम्यमेवैकं, कुतः संप्रति दृश्यते ? ॥ २२७ ॥ इति राज्ञोदिताः पूर्वानुभूता सातसंस्मृतेः । उदश्रवस्तेऽजायन्त, सायङ्काले रथाङ्गवत् ॥ २२८ ॥ ऊचिरे च यथावृत्तं, स्ववृत्तान्तं सगद्गदम् । प्रेर्यमाणा नृपतिना, वार्यमाणा अपि ह्रिया ॥ २२९ ॥ भूयोऽभ्यधुश्च ते स्वामिन् !, दुःशीलां तां महासतीम् । चिकीर्षवः पूतिजलां, मन्दा मन्दाकिनीमिव ॥ २३० ॥ सत्याः सत्यामपि ख्यातिं, मत्सरेणासहिष्णवः । पातकैः पातिताः स्वीयैर्गर्त्ते पातकिनो वयम् ॥ २३१ ॥ युग्मम् ॥ नात्र दोषो महासत्यास्तस्याः कोऽपि प्रभो ! ततः । स्वयं भ्रियन्त एवार्कं प्रति धूलिक्षिपो जडाः ॥ २३२ ॥ यच्चान्नादिप्रदानेनास्माकं पापात्मनामपि । चक्रे सा जीवनोपायं, तत्तु चित्राय जायते

१ अस्थिपञ्जरम् । २ द्वितीये । ३ पूर्वं हि कुबेरौपम्यं विभवादिभिः धनदसादृश्यं बभूव अधुनाऽपि कुबेरः कुत्सितशरीरस्तदौपम्यं कुबेरौपम्यं कुशरीरसाम्यम् ॥

॥ २३३ ॥ कदर्थं यद्ददौ गर्त्तांस्थानान्तः सा महासती । विज्ञेयं तत्तु विस्मेरस्मरापस्मारशान्तये ॥ २३४ ॥ तत्कृतैरुपचारैस्तैर्मदनोन्मादहारिभिः । क्षामत्वादिक्रमेतन्नो, जातमापातमङ्कुलम् ॥ २३५ ॥ निशम्येति गुणांस्तस्या, भूपतिर्विस्मितो भृशम् । प्रशशंस सदाशंसो, गुणज्ञ इति तां मुदा ॥ २३६ ॥ स्त्रीजातेरप्यहो ! तस्याः, पेशलं बुद्धिकौशलम् । शीलस्य च त्रिधा शुद्ध्या, परिशीलनमुत्तमम् ॥ २३७ ॥ वपुषाऽपि सुदुष्पालं, शीलं वाचा ततोऽपि च । मनसा तु सुशीलत्वं, यत्तल्लोकोत्तरं खलु ॥ २३८ ॥ यतः—नव्ये स्फूर्जति तारुण्ये, त्रिकाराङ्कुरनीरदे । स्वकान्तविरहे चान्तराचान्तस्वास्थ्यशर्मणि ॥ २३९ ॥ वित्तादिमत्तामत्तेषु, वित्तेषु प्रगुणैर्गुणैः । कामं कामयमानेषु, कामिषूपान्तगामिषु ॥ २४० ॥ अविद्यमानश्वशुराद्यङ्कुशाऽपि कुशाग्रधीः । शुद्धं शीलं यथा साधाद्विश्वेऽप्येवं दधातु का ? ॥ २४१ ॥ त्रिभिर्विशेषकम् ॥ धन्यो धन्येष सा यस्य, वल्लभा विश्वदुर्लभा । सीता शीलेन रूपेण, रतिर्बुद्ध्या च भारती ॥ २४२ ॥ इत्याद्युक्त्वा नृपः सार्थवाहमाहूय सत्वरम् । स्मित्वा स्माह सखे ! साधु, दत्ता मे वटवासिनः ॥ २४३ ॥ अमी शठधियोऽप्युच्चैर्नीताः शालीनतां यया । अस्तु स्वस्ति भवत्पत्न्यै, तस्यै प्रबलशक्तये ॥ २४४ ॥ यद्वा नोल्लङ्घयते यद्वाक्, पुष्पाद्यैरप्यचेतनैः । तत्प्रभावादमी शाठ्यं जहुस्तत्र किमद्भुतम् ॥ २४५ ॥ स्तुवीत गुणिनं वीतमत्सरो नापरस्तु ना[२] । स्तुवन्त्येनां पुनरमी, पूर्वमत्सरिणोऽप्यहो ! ॥ २४६ ॥ यद्वा शीलमहिम्नायां, स्तुवीरंस्त्रिदशा अपि । उर्वीस्पृशो न कुर्वीरन्, शस्तास्तत्संस्तवं कथम् ? ॥२४७॥ यः शीलमहिमा लब्धवर्णैः शास्त्रेषु वर्ण्यते । सोऽनया सत्यतां निन्ये, सत्या संशुद्धशीलया ॥ २४८ ॥ तदियं दयिता

---

१ अन्तर्हृदये आचान्तं भक्षितं विनाशितमिति यावत् स्वास्थ्यशर्म येन स तथा तस्मिन् । २ नरः ॥

यन्ताद्रिमुख्यतीर्थानि सोऽनमत् ॥ २८१ ॥ इत्थं तौ दम्पती शुद्धं, श्राद्धधर्मं समाश्रितौ । यथाशक्ति जिनाधीशशासनो-द्द्योतनोद्यतौ ॥ २८२ ॥ यथावत् पालयन्तौ चाभिग्रहीतानभिग्रहान् । आनन्दशिवनन्दादिदम्पत्यौपम्यमापतुः ॥२८३॥ युग्मम् ॥ समाधिमृत्युमासाद्य, प्रान्तेऽप्यनशनादिना । सुगतिं तौ गतौ सा हि, सुप्रापा जिनसेविनाम् ॥ २८४ ॥

इत्थं चम्पकमालया सुविमलं शीलं दधत्या दृढं, लेभेऽत्रापि महान् प्रभावविभवः प्रेत्यापि शर्मोत्तमम् ।
तद्धेतौ दुरितक्षयाय परमे हेतौ परब्रह्मणः, सम्यग् ब्रह्मणि भावसाधुमहिते यत्नः समाधीयताम् ॥ २८५ ॥

॥ इति श्रीतपागच्छाधिराजश्रीविजयदानसूरीश्वरशिष्यमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्याय-
श्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिविरचितायां
चम्पकमालाकथायां चतुर्थः प्रस्तावः ॥ तत्संपूर्त्तौ च संपूर्णेयं चम्पकमालाकथा ॥

## ॥ अथ प्रशस्तिः ॥

तपगणगगनरवीणां, श्रीविजयानन्दसूरिशक्राणाम् । राज्ये कथानकमिदं, भावविजयवाचकस्तेने ॥ १ ॥ सिद्धिगगनमुनिचन्द्रप्रमितेऽब्दे १७०८ विजयदशमिकासु तिथौ । विद्यापुरे वितेने, कथाममूं सोऽर्थितः प्राज्ञैः ॥ २ ॥ महासतीवृत्तमिदं वितन्वताऽयुक्तं यदुक्तं मयकाल्पबुद्धिना । मिथ्याऽस्तु तत्पापमपाग्रहस्य मे, सद्भिश्च तच्छोध्यमुदारबुद्धिभिः ॥ ३ ॥

श्रीआत्मानन्द-ग्रन्थरत्नमाला-षोडशं रत्नम् ( १६ )

# तपागच्छाधिपश्रीमद्देवेन्द्रसूरिसंदृब्धा सिद्धपञ्चाशिका

( अवचूर्याः समलङ्कृता )

पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयविनेयाणुचतुरविजयोपदिष्टसुरतनगरवास्तव्य-
श्रीमालिज्ञातीयश्रेष्ठि-सीरचन्द्रात्मज-रत्नचन्द्र-द्रव्यसाहाय्येन
प्रकाशयित्री-श्रीआत्मानन्दसभा-भावनगर ।

इदं पुस्तकं मुम्बय्यां वल्लभदास-त्रिभुवनदास गांधी सेक्रेटरी जैन आत्मानन्दसभा भावनगर इत्यनेन
निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३, तमे गृहे रामचन्द्र यशवन्त शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४३९. आत्मसंवत् १९. विक्रमसंवत् १९६९.

Printed by R. Y Shedge at the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay, and Published by
Vallabhadas Tribhuvandas Gandhi, Secretary, Jaina Atmananda Sabha, Bhavanagar.

## ॥ प्रस्तावना ॥

इदं सिद्धपञ्चाशिकाभिधानं प्रकरणरत्नं प्रकरणकारैः ऐदंयुगीनमन्दमतीनां हितहेतवे सिद्धप्राभृतात्समुद्धृत्य गाथानुबन्धेन निबद्धम्, तच्चाद्यगाथागतस्य—" सिरिसिद्धपाहुडाओ " इति पदस्यावलोकनेन, असावसानगाथागतस्य—"लिहिअं" इति पदस्य—"लिखितमक्षरविन्यासीकृतं सिद्धप्राभृतादिति शेषः" इति व्याख्यालवावलोकनेन च प्रकटमेव। "देविंदसूरीहिं" इत्यनेन मूलपाठेन, संशोधनकाले एकीकृतानां पुस्तकादर्शानां मध्यादेकस्यैव पुस्तकस्य—"करालकलिकालपातालतलावमज्जद्विशुद्धधर्मधुरोद्धरणधुरीणश्रीमज्जगचन्द्रसूरिचरणसरसीरूहचञ्चरीकैरिति" इत्यवचूरिगतपाठेन चास्य प्रणेतारः तपागच्छभट्टारकपुरन्दरश्रीमद्देवेन्द्रसूरय एवेति सुप्रतितम्। एतेषां सत्तासमयोऽपीह निर्विरोधं विक्रमार्कीयत्रयोदशशताब्द्या सुप्रसिद्ध एव। अस्यावचूरिकारकालमानं तु निर्णेतुं न शक्यते, क्वाप्येतस्य नामाद्यनुपलम्भात्।

अस्यां सिद्धपञ्चाशिकायां सत्पदप्ररूपणादिभिर्नवभिर्द्वारैः पञ्चदशसु क्षेत्रादिद्वारेषु अनन्तरसिद्धानां परम्परसिद्धानां च स्वरूपं विगतविकारैः प्रकरणकारैः संक्षेपेण प्रतिपादितमस्ति। तत्तु स्वयमेवावभोत्स्यते पण्डितप्रकाण्डैरिति नात्रास्माकं कथनावश्यकतेति।

सवृत्तिकस्यास्य प्रकरणस्य संशोधनसमये पुस्तकमेकं पूज्यपादप्रवर्तकश्रीमत्कान्तिविजयसत्कम्, द्वे च प्रवर्तकशिष्यमुनिश्रीभक्तिविजयसत्के, द्वे तु पत्तनसङ्घसत्कचित्कोशीये, एकं पुनः पत्तनस्थसागरगच्छोपाश्रयसत्कचित्कोशीयम्, एतानि षट् पुस्तकानि संप्राप्तानि। ततः शोधनकर्मणि साहाय्यमुपलम्भमानः पुस्तकप्रेषणेनानुग्रहं वितन्वताममीषां मन्येऽहं महतीमुपकृतिम्।

एतत्पुस्तकषट्काधारेण संशोधितेऽप्यत्र निबन्धे यत्र क्वचनाशुद्धिः कृता जाता वा भवेत्तत्र संशोधनीयं प्रवचनविचारज्ञैरिति प्रार्थयते—

प्रकल्पिताञ्जलिः प्रवर्तकपादपाथोजपरागः **चतुरविजयो मुनिः** ॥

॥ अर्हम् ॥

# श्रीमद्देवेन्द्रसूरिकृता सिद्धपञ्चाशिका ।

( अवचूरिसमलंकृता )

**सिद्धं सिद्धत्थसुअं, नमिउं तिहुअणपयासयं वीरं । सिरिसिद्धपाहुडाओ, सिद्धसरूवं किमवि वुच्छं ॥१॥**

**संतपयपरूवणया, दव्वपमाणं च खित्त फुसणा य । कालो अ अंतरं तह, भावो अप्पाबहू दारा ॥ २ ॥**

गाथे स्पष्टे[1] । नवरं सिद्धं निष्ठितार्थं प्रसिद्धं शाश्वतं बद्धध्मातकर्माणं वा[2] । सिद्धाः प्रतिष्ठिताः सत्यत्वेन केनाप्यचाल्याः । अर्था जीवाजीवादिपदार्थाः[3] । श्रुते द्वादशाङ्गरूपे यस्य । अथवा सिद्धार्थाः सिद्धप्रयोजना मोक्षावाप्तेः । सुता इव सुताः शिष्या गणधरादयो यस्य[4] ॥ १ ॥ २ ॥

**एहिं अणंतरसिद्धा, परंपरा सन्निकरिसजुत्तेहिं । तेहिं विआरणिज्जा, इमेसु पनरससु दारेसु ॥ ३ ॥**

एभिः पूर्वोक्तैरष्टभिः सत्पदप्ररूपणादिभिर्द्वारैरनन्तराः सिद्धा विचारणीयाः । परम्पराः सिद्धास्तु 'तेहिं' तैः सत्पदप्ररूपणादिभिर्द्वारैः संनिकर्षयुक्तैर्नवभिर्द्वारैरित्यर्थः । न विद्यते समयेनाप्यन्तरं व्यवधानं येषां तेऽनन्तराः, सिद्धत्वप्रथमस-

---

1 'गाथाद्वयं स्पष्टम्' इति । क्वचित्सर्वथापि नास्ति । 2 'सितं बद्धं ध्मातं कर्म येन स तथा तं इति वा' इति क्वचित् । 3 'जीवादयः' इत्यपि ।4 'सिद्धान्ते' इत्यपि । 5 'गणधरादयः' इति क्वचित् नास्ति । 6 'सिद्धार्थनरेन्द्रसुत इति वा' क्वचिदित्यधिकम् ॥

मयवर्त्तिन इत्यर्थः । प्राकृतत्वाज्जमो लोपः । विवक्षिते प्रथमे समये यः सिद्धस्तस्य यो द्वितीयसमये सिद्धः स परः, तस्यापि यस्तृतीयसमये सिद्धः स परम्परः । एवमन्येऽपि वाच्याः । परम्परे च ते सिद्धाश्च परम्परसिद्धाः । विवक्षितसिद्धत्वप्रथमसमयात्प्राग् द्वितीयादिषु समयेष्वनन्तामतीताद्धां यावद्वर्त्तमाना इत्यर्थः । संनिकर्षो नाम संयोगः। ह्रस्वदीर्घयोरिव विवक्षितं किञ्चित्प्रतीत्य विवक्षितस्याल्पतया बहुत्वेन वा अवस्थानरूपः संबन्धः । उभयेऽपि सिद्धाः । केषु विषयेषु विचारणीयाः ? इत्याह—'इमेसु' इति एषु पञ्चदशसु द्वारेषु ॥ ३ ॥ तान्येवाह—

खित्ते[1] काले[2] गइ[3] वेअ[4] तित्थ[5] लिंगे[6] चरित्त[7] बुद्धे[8] य । नाणो[9]गा[10]हु[11]क्कस्से[12], अंतरमणु[13]समय[14]गणण[15]अप्पबहू ॥[2] ४॥

'उक्कसे' इति उत्कर्षद्वारम् ॥ ४ ॥ प्रथमत एषु पञ्चदशसु द्वारेषु सत्पदप्ररूपणयाऽनन्तरसिद्धाश्चिन्त्यन्ते—

खित्ति तिलोगे १ काले, सिज्झंति अरेषु छसुवि संहरणा ।

अवसप्पिणि ओसप्पिणि, दुतिअरगे जम्मु तिदुसु सिवं २ ॥ ५ ॥

क्षेत्रद्वारे त्रिलोके । तत्रोर्ध्वलोके पण्डकवनादौ, अधोलोकेऽधोलौकिकग्रामेषु, तिर्यग्लोके मनुष्यक्षेत्रे सिध्यन्तीति क्रिया सर्वत्र योज्या । संहरणात् समुद्रनदीवर्षधरादिष्वपि । तीर्थकृतः पुनः संहरणाभावात् अधोलौकिकग्रामेषु तिर्यग्लोके वा पञ्चदशसु कर्मभूमिषु १ । कालद्वारेऽवसर्पिण्यामुत्सर्पिण्यां च षट्स्वप्यरकेषु सिद्ध्यन्ति । देवादिकृतसंहरणादप्येवमेव । जन्माश्रित्य पुनरवसर्पिण्युत्सर्पिण्योर्यथासंख्यं द्वयोस्त्रिषु चारकेषु जन्म । त्रिषु द्वयोश्च शिवं मोक्षः । अयमर्थः—अवस-

---

1 'स परः' इत्यपि । 2 'गीतिच्छन्दः' । 3 इतोऽग्रे 'न शेषस्थानेषु' इत्यधिकं कचित् ॥

र्पिण्यां जन्म चरमशरीरिणां नियमतस्तृतीयचतुर्थारकयोः। सिद्धिगमनं तु एवमेव। परं केषांचित्पञ्चमारकेऽपि यथा जम्बूस्वामिनः। उत्सर्पिण्यां तु द्वितीयतृतीयचतुर्थारकेषु जन्म। सिद्धिगमनं तु तृतीयचतुर्थयोरेव। महाविदेहेषु पुनः कालः सदैव सुषमदुःषमारूपः तद्वक्तव्यताभणनेनैव भणितो द्रष्टव्यः। तीर्थकृतां पुनरवसर्पिण्यामुत्सर्पिण्यां च जन्म। सिद्धिगमनं च सुषमदुःषमादुःषमसुषमारूपयोरेवारकयोर्ज्ञेयम् २॥ ५॥

चउगइआगय नरगइठिय सिव ३ वेयतिग ४ दुविहतित्थेऽवि ५।
गिंहि–अन्न–संलिंगेसु अ ६, चरणे अहखाइ वट्टंता॥ ६॥
ति चउ पण पुव्वि तिचरण, जिणा ७ सयं–बुद्धि–बुद्ध–पत्तेया।
दु–ति–चउनाणा ९ लहुतणु, दुहत्थ गुरु पणधणुसयाओ १०॥ ७॥

गतिद्वारे चतुर्गत्यागताः सामान्यतः सिध्यन्तीति शेषः। विशेषचिन्तायां पुनश्चतसृभ्यो नरकपृथिवीभ्यो न शेषाभ्यः। तिर्यग्गतेः पृथिव्यम्बुवनस्पतिपञ्चेन्द्रियेभ्यो न शेषेभ्यः। मनुष्यगतेः स्त्रीभ्यो नरेभ्यो नपुंसकेभ्यो वा। देवगतेश्चतुर्भ्योऽपि देवनिकायेभ्यः। तीर्थकृतः पुनर्देवगतेर्नरकगतेर्वा अनन्तरागताः सिध्यन्ति। तत्राप्याद्यपृथिवीत्रयादेव न शेषाभ्यः। वैमानिकेभ्यो न शेषदेवेभ्यः। वर्तमाननयमाश्रित्य मनुष्यगतिस्था एव शिवं प्राप्नुवन्तीति शेषः३। वेदद्वारे प्रत्युत्पन्ननयमाश्रित्यापगतवेद एव सिध्यति। तद्भवानुभूतपूर्ववेदापेक्षया बाह्याकारमात्रापेक्षया च वेदत्रिकेषु। तीर्थकृतः पुनः स्त्रीवेदे पुरुषवेदे वा४।

---

1 इतः प्राग् 'गर्भजेभ्यः' इत्यधिकं क्वचित्। 2 इतोऽग्रे–'न नपुंसकवेदे' इत्यपि॥

तीर्थद्वारे तीर्थकरतीर्थकरीतीर्थरूपे द्विविधेऽपि तीर्थे ५। लिङ्गद्वारे इदं लिङ्गत्रयं द्रव्यलिङ्गापेक्षया ज्ञेयम्। संयमरूपभावलिङ्गापेक्षया तु स्वलिङ्गे एव ६। चारित्रद्वारे चारित्रे यथाख्याते क्षायिके एव वर्त्तमानाः सिध्यन्ति ॥६॥ तद्भवपूर्वानुभूतचरणापेक्षया त्रिकं चतुष्कं पञ्चकं च प्राप्य सिध्यन्ति। अयमर्थः—केचित्सामायिकसूक्ष्मसंपराययथाख्यातचारित्राणि, केचित्सामायिकच्छेदोपस्थापनीयसूक्ष्मसंपराययथाख्यातानि, केचित्सामायिकपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातानि, केचित्सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातानि चारित्राणि प्राप्य सिध्यन्ति। जिनास्त्रिचरणा एव प्राप्तसामायिकसूक्ष्मसंपराययथाख्यातचारित्राः ७। बुद्धद्वारे 'सयंबुद्धिबुद्धपत्तेआ' इति सूचनात्सूत्रस्य स्वयं[1] बाह्यप्रत्ययनिरपेक्षं बुद्धाः स्वयंबुद्धाः। बुद्धी मल्लिस्वामिनी सामान्यस्त्री वा तया बोधिता बुद्धीबोधिताः। बुद्धा आचार्यादयः, तैर्बोधिता बुद्धबोधिताः। प्रत्येकं किमपि बाह्यप्रत्ययं दृष्ट्वा बुद्धाः प्रत्येकबुद्धा इति निर्देशो ज्ञेयः। ततः स्वयं च बुद्धी च बुद्धाश्च प्रत्येकाश्च स्वयंबुद्धीबुद्धप्रत्येकाः। प्राकृतत्वाद् ह्रस्वः। स्वयंबुद्धीबुद्धप्रत्येकबुद्धानां बोधि १ उपधि २ श्रुत ३ लिङ्ग ४ कृतो विशेषः। स्वयंबुद्धा बाह्यप्रत्ययमन्तरेण जातिस्मरणादिना बोधिभाजः। प्रत्येकबुद्धाश्च प्रत्येकं बाह्यं वृषभादिकं हेतुमभिवीक्ष्य बोधिभाजः, ततस्ते प्रत्येकमेव विहरन्ति न गच्छवासिन इव संहिताः। स्वयंबुद्धानामुपधिर्द्वादशविध एव पात्रादिकः। प्रत्येकबुद्धानां तु द्विधा, उत्कर्षतो जघन्यतश्च। उत्कर्षतो नवविधः प्रावरणवर्जः। जघन्यतो द्विविधो रजोहरणमुखवस्त्रिकारूपः। तथा स्वयंबुद्धानां पूर्वाधीतं श्रुतं भवति वा न वा। यदि भवति ततो लिङ्गं देवता समर्प-

[1] 'बाह्यं निमित्ताद्यनपेक्ष्य' इत्यपि क्वचित् ॥

यति, गुरुसंनिधौ वा प्रतिपद्यते । यदि चैकाकी विहरणसमर्थः, इच्छा वा तस्य तथारूपा जायते; तत एकाक्येव विहरति, अन्यथा गच्छे एव तिष्ठति । अथ पूर्वाधीतं श्रुतं न स्यात् तर्हि नियमाद्गुरुसंनिधौ लिङ्गं प्रतिपद्यते, गच्छं चावश्यं न मुञ्चति । प्रत्येकबुद्धानां पूर्वाधीतं श्रुतं नियमाद्भवति; तच्च जघन्यत एकादशाङ्गानि, उत्कर्षतः किञ्चिन्न्यूनानि दशपूर्वाणि । लिङ्गं च तस्मै देवता समर्पयति । लिङ्गरहितो वा कदाचित्स्यात् ८ । ज्ञानद्वारे केवलज्ञाने एव वर्त्तमानाः सिध्यन्ति । तद्भवानुभूतपूर्वज्ञानापेक्षया केचिद् द्विज्ञाना मतिश्रुतज्ञानाः, केचित्त्रिज्ञाना मतिश्रुतावधिज्ञानाः, यद्वा मतिश्रुतमनःपर्यायज्ञानाः, केचिच्चतुर्ज्ञाना मतिश्रुतावधिमनःपर्यायज्ञानाः । तीर्थकृतस्तु चतुर्ज्ञानिन एव ९ । अवगाहनाद्वारे लघ्वी जघन्या तनुर्द्विहस्ता द्विहस्तप्रमाणा; गुरुरुत्कृष्टा पञ्चधनुश्शता धनुश्शतपञ्चकप्रमाणा । तुशब्दाद् धनुषां पञ्चविंशत्याधिकापि । सा च मरुदेव्या अवसेया तस्या आदेशान्तरेण नाभिकुलकरतुल्यत्वात् 'संघयणं संठाणं, उच्चत्तं चेव कुलगरेहिं समं' इति वचनात् । इत्थं सिद्धप्राभृतटीकायामप्युक्तम् । ततः सिद्धस्तुशब्दार्थः । शेषा तु मध्यमावगाहना । तीर्थकृतां जघन्या सप्तहस्तप्रमाणा, उत्कृष्टा पञ्चशतधनुर्माना शेषा मध्यमेति १० ॥ ७ ॥

> कालमणंतमसंखं, संखं चुअसम्म अचुअसम्मत्ता ११ ।
> लहु गुरु अंतर समओ, छमास १२ अडसमय अवहिआ १३ ॥ ८ ॥
> जहनिअर इक्क अडसय १४, अणेग एगा य थोव संखगुणा १५ ।

उत्कर्षद्वारे कालशब्दस्य प्रत्येकं योगात् । अनन्तं कालं असंख्यं संख्यं च कालं च्युतसम्यक्त्वाः सिध्यन्ति अच्युतम-

म्यक्त्वाश्च । अयमर्थः—च्युतसम्यक्त्वाः केचिदनन्तं कालं अर्धपुद्गलपरावर्त्तलक्षणं संसारे भ्रान्त्वोत्कर्षतो लब्धसम्यक्त्वा-दिरत्नत्रयाः सिध्यन्ति । अपरेऽनुत्कर्षतोऽसंख्यातम् । अन्ये तु संख्येयम् । केचनाच्युतसम्यक्त्वा अपि सिध्यन्तीति ११ । अन्तरद्वारे जघन्यत एकसमयः, उत्कर्षतः षण्मासाः १२ । अनुसमयद्वारे निरन्तरद्वारे जघन्यतो द्वौ समयौ निरन्तरं सिध्यन्ति, उत्कर्षतोऽष्टौ समयाः । अव्यवधानं निरन्तरतेत्यर्थः १३ ॥ ८ ॥ गणनाद्वारे जघन्यत एकः, इतरत उत्कर्षतो-ऽष्टाधिकं शतं सिध्यति । श्रीनाभेयस्य निर्वाणसमयेऽष्टोत्तरशतमेकसमयेन सिद्धम् । आह च संघदासगणिर्वसुदेवहिण्डौ—"उसभो अभीइणा नक्खत्तेणं एगूणपुत्तसएहिं अट्ठहिं नत्तुएहिं सह एगसमएणं निव्वुए। सेसाणवि अणगाराणं दससहस्साणि अट्ठसयऊणगाणि तंमि चेव नक्खत्ते वहुसु समयंतरेसुत्ति" १४ । अल्पबहुत्वद्वारे युगपद्द्वित्रादिकाः सिद्धाः स्तोकाः, तेभ्य एककाः सिद्धाः संख्येयगुणा विवक्षितसमये एकैकसिद्धानां बाहुल्यादिति भावः १५ । गतं सत्पदप्ररूपणाद्वारम् १ । संप्रति[1] द्रव्यमानं क्षेत्रादिषु पञ्चदशसु द्वारेष्वभिधीयते—

चउ उड्ढ नंदणजले, वीस पहुत्तं अहोलोए ॥ ९ ॥
इगविजय वीस अडसय, पत्तेयं कम्मभूमि तिरिलोए। दु दु जलहि पंडगवणे, अकम्ममहि दस य संहरणा॥१॥

तत्र क्षेत्रद्वारे चतुश्शब्दस्य प्रत्येकं योगात् । ऊर्ध्वलोके सामान्यतो मेर्वादौ नन्दनवने जले सामान्यतो नद्यादिगते च जले "चउक्कं दुवे समुद्दंमि" इति वचनात् । श्रीजिनभद्रगणिक्षमाश्रमणरचितसंग्रहण्याम्—"तओ जले चेव" इत्युक्तम्।

---

1 'सप्रति द्रव्यमानमाह' इत्यपि ॥

तदत्र तत्त्वं केवलिनो विदन्ति । यदुक्तम्—"वीस पहुत्तं अहोलोए" इति सिद्धप्राभृते । संग्रहण्यां पुनः—"बावीसमहो लोए" इत्युक्तम् । "दो अ वीसा अहोलोए" इत्युत्तराध्ययने उक्तम् । तदत्र तत्त्वं ज्ञानिनो विदन्ति । पृथक्त्वं द्विप्रभृतिरानवभ्यः ॥ ९ ॥ एकस्मिन् विजये २० पञ्चदशकर्मभूमिषु प्रत्येकं १०८ तिर्यग्लोकेऽप्येवं सिध्यन्ति । सामान्यतः समुद्रे पण्डकवने च द्वौ द्वौ । अकर्ममहीषु हैमवत ५ हरिवर्ष ५ देवकुरु ५ उत्तरकुरु ५ रम्यक ५ ऐरण्यवत ५ रूपासु त्रिंशत्संख्यास्वपि संहरणं प्रतीत्य दश दश सिध्यन्ति १ ॥ १० ॥

**ति चउत्थ अरे अडसय, पंचमए वीस दस दस य सेसे २।**
**नरगतिग भवण–वण–नर–जोइस–तिरि–तिरिखिणी दसगं ॥ ११ ॥**

**वेमाणिअ अट्ठसयं, हरिय छऊ पंकपुढविजल चउरो। जोइविमाणिनरित्थी, वीसं भवणवणथी पणगं३।१२**

कालद्वारे उत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं तृतीये चतुर्थे चारकेऽष्टशतम्। सामान्योक्तावपि "व्याख्यानतो विशेषप्रतिपत्तिः" इति न्यायात् अवसर्पिण्यां पञ्चमारके विंशतिः। 'सेसे' इति जातावेकवचनम्। ततः शेषेष्वरकेषु प्रत्येकं उत्सर्पिण्यामवसर्पिण्यां च संहरणतो दश दश २। गतिद्वारे नरकत्रिकात् रत्नशर्करावालुकाप्रभालक्षणात् भवनपत्यादिभ्य आगता दश दश सिध्यन्ति ॥ ११ ॥ वैमानिकेभ्योऽत्रागता अष्टशतम् । वनस्पतिभ्यः षट् । पङ्कप्रभायाश्चतुर्थनरकपृथिव्याः पृथिव्यप्कायाभ्यां च प्रत्येकं चत्वारः। ज्योतिष्कादीनां त्रयाणां स्त्रीभ्यो विंशतिर्विंशतिः; व्यन्तरस्त्रीभ्यो भवनपतिस्त्रीभ्यश्चागताः पञ्च पञ्च सिध्यन्तीति शेषः । जघन्यतो नरकत्रिकादिषु एको वा द्वौ वा त्रयो वा । उत्कर्षतो दशेति सर्वत्र ३ ॥ १२ ॥

**वीसत्थि दस नपुंसग, पुरिसट्ठसयं नरा नरुव्वट्टा । इय भंगे अट्ठसयं, दस दस सेसट्ठ भंगेसु ४॥१३॥**

वेदद्वारे स्त्रियो विंशतिः, इत्यादि। तथा नरा देवादिपुरुषाः नरेभ्यो देवादिपुरुषेभ्य उद्वृत्ता इति आद्यो भङ्गः १, स्त्रीभ्यो नराः २, षण्डेभ्यो नराः ३ इति भङ्गत्रयम् । एवं स्त्रीनपुंसकयोरपि भङ्गत्रयम् । सर्वे नव । तत्राद्यभङ्गे अष्टशतम् । शेषेषु अष्टभङ्गेषु दश दश ४ ॥ १३ ॥

**तित्थयरी[1] जिण[2] पत्तेअबुद्ध[3] संबुद्ध[4] दु[1] चउ[2] दस[3] चउरो[4] ५ ।**
**चउ[1] दस[2] अडसय[3] गिहि[1] पर[2], सलिंग[3] ६ परिहार विणु ओहो ॥ १४ ॥**
**दस परिहारजुए ७ बुद्धिबोहिथी वीस जीव वीस पहू ८ ।**
**चउ मइसुअ[1] मइसुअमणनाणे[2] दस सेसे[3] दुगि ओहो ९ ॥ १५ ॥**

तीर्थद्वारे तीर्थकर्यः १ जिनाः २ प्रत्येकबुद्धाः ३ स्वयंबुद्धाश्च ४ एकसमयेन सिध्यन्ति यथासंख्यं द्वौ चत्वारो दश चत्वारः। उपलक्षणत्वादष्टशतमतीर्थकृताम् ५। लिङ्गद्वारे गृहि १ पर २ स्व ३ लिङ्गे यथाक्रमं चत्वारो दशाष्टशतम् ६। चारित्रद्वारे 'परिहार विणु ओहो' इति यत्र यत्र चारित्रभङ्गे परिहारविशुद्धिपदं न भवति तत्र तत्र ओघोऽष्टशतं सिध्यन्तीति ज्ञेयम्। इदमुक्तं भवति—सामायिकसूक्ष्मसंपराययथाख्यातचारित्रिणाम्, सामायिकच्छेदोपस्थापनीयसूक्ष्मसंपराययथाख्यातचारित्रिणां च प्रत्येकमष्टशतम् ॥ १४ ॥ परिहारविशुद्धियुते भङ्गे दश दश । इदमुक्तं भवति—सामायिकपरिहारविशुद्धि-

सूक्ष्मसंपरायथाख्यातचारित्रिणाम्, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातचारित्रिणां दश दश ७। बुद्धद्वारे बुद्धीबोधिताः स्त्रियो विंशतिरेकसमयेन सिध्यन्ति। तथा बुद्धीबोधितजीवानां पुंस्त्रीषण्ढविशेषितानां विंशतिपृथक्त्वम्। अयं च सिद्धप्राभृतोक्तो विशेषः। बुद्धबोधितानां पुरुषाणामष्टशतम्। स्त्रीणां विंशतिः। नपुंसकानां दशकम्। प्रत्येकबुद्धानां दशकम् ८। ज्ञानद्वारे पूर्वभावमपेक्ष्य मतिश्रुतज्ञानिनश्चत्वारः। मतिश्रुतमनःपर्यायज्ञानिनो दश। शेषभङ्गद्विके मतिश्रुतावधिज्ञानिनो मतिश्रुतावधिमनःपर्यायज्ञानिन इत्येवंलक्षणे 'ओहो' इति अष्टशतं सिध्यतीति ९॥ १५॥

मज्झे गुरु लहुवगाहण, अडसय दुग चउर अट्ट जवमज्झे १०।
चुअणंतकालसम्मा, अडसय चउ अचुअ दस सेसा ११। १२॥ १६॥

अवगाहनाद्वारे मध्यावगाहनायामष्टशतम्। उत्कृष्टायां द्वौ। लघ्व्यां चत्वारो युगपत्सिध्यन्तीति। अष्टौ यवमध्ये। यवमध्यं नाम उत्कृष्टावगाहनायाः पञ्चविंशत्यधिकपञ्चशतधनूरूपाया अर्ध द्विषष्ट्युत्तरद्विशतधनूंषि। एवमग्रेऽपि समार्धस्य यवमध्यमिति संज्ञा ज्ञेया १०। उत्कृष्टद्वारे अनन्तकालच्युतसम्यक्त्वा अष्टशतम्। अच्युतसम्यक्त्वाश्चत्वारः। शेषा असंख्यातकालच्युतसम्यक्त्वाः, संख्यातकालच्युतसम्यक्त्वाश्च प्रत्येकं दश दश सिध्यन्ति ११। अन्तरद्वारेऽल्पविषयत्वात्सूत्रेऽनुक्तमपि दर्श्यते। अन्तरद्वारे एको वा सान्तरः सिध्यति। बहवो वा तत्र बहवो यावदष्टशतम् १२॥ १६॥

अड १०८ दुरहिअ १०२ सय छनुई, चुलसी दुगसयरि सट्ठि अडयाला।
बत्तीस इक्क दु ति चउ, पण छग सग अड निरंतरिया १३॥ १७॥

अनुसमयद्वारे अष्टाधिकं शतम्, द्व्यधिकं शतं चेत्यर्थः । अष्टोत्तरशतादयोऽष्टौ यथासंख्यं एकसमयादीन् ( दि ) यावदष्टौ समयान्निरन्तरं सिध्यन्तीति संबन्धः । त्र्युत्तरशतं यावदष्टशतं सिध्येत् एकसमयमेव यावल्लभ्यते, ततः परतो नियमादन्तरं भवति । तथा सप्तनवत्यादयो द्व्यधिकशतपर्यन्ता द्वौ समयौ यावन्निरन्तरं सिध्यन्ति, ततः परमवश्यमन्तरम् । एवं पञ्चाशीत्यादयः षण्णवतिपर्यन्तास्त्रीन् समयान् यावत् । त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ताश्चतुरः समयान् यावत् । एकषष्ठ्यादयो द्वासप्ततिपर्यन्ताः पञ्चसमयान् यावत् । एकोनपञ्चाशदादयः षष्टिपर्यन्ताः षट्समयान् यावत् । त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ताः सप्त समयान् यावत् । तथा एकादयो द्वात्रिंशत्पर्यन्ता अष्टौ समयान् यावन्निरन्तरं सिध्यन्तः प्राप्यन्ते, ततः परमवश्यमन्तरम् । अत्रायमाशयः—आद्यसमये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत् सिध्यन्तः प्राप्यन्ते । द्वितीयसमयेऽपि जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत् । एवं तृतीयसमये यावदष्टमसमयेऽपि । ततः परमवश्यमन्तरमेव । एवं सर्वत्रापि योज्यम् १३॥१७॥ गणनाद्वारमल्पबहुत्वद्वारं च प्रागिव द्रष्टव्यम् । तदेवमुक्तं द्रव्यप्रमाणं मौलं द्वितीयं द्वारम् । सांप्रतं क्षेत्रद्वारं स्पर्शनाद्वारं चैकगाथयाह—

**लोअग्गठिआ सिद्धा, इह बुंदिं चइय पडिहय अलोए३[1] । फुसइ अणंते सिद्धे, सव्वपएसेहि सो सिद्धो[2] ४।१८**

क्षेत्रद्वारे लोकाग्रे सिद्धशिलातललक्षणे सिद्धाः स्थिताः । इह मनुष्यक्षेत्रे बुन्दिं शरीरं सर्वपरिशाटेन त्यक्त्वा; अलोके प्रतिहता लग्ना न परतोऽपि गमनं संभवति, धर्मास्तिकायाभावादिति ३। स्पर्शनाद्वारे स्पृशत्यनन्तान् सिद्धान् स विवक्षितसमयसिद्धः ।

---

1 मौलं क्षेत्रद्वारम् । 2 मौलं स्पर्शनाद्वारम् । इदं द्वारद्वय पञ्चदशसु द्वारेषु स्वबुद्ध्या भावनीय सूत्रे सुगमत्वान्नोक्तम् ॥

सर्वप्रदेशैर्जीवसंबन्धिभिर्ये तु तद्देशप्रदेशैः स्पृष्टास्तेऽसंख्येयगुणाः। "फुसइ अणंते सिद्धे, सव्वपएसेहिँ नियमसो सिद्धो। तेऽवि असंखिज्जगुणा, देसपएसेहिँ जे पुट्ठा १" ४॥ १८॥

**जत्थट्ठसयं सिज्झइ, अट्ठ उ समया निरंतरं तत्थ। वीस दसगेसु चउरो, दु सेसि जवमज्झि चत्तारि५॥१९॥**

कालद्वारे चेयं परिभाषा सर्वेषु द्वारेषु यत्र यत्र स्थानेऽष्टशतं सिध्येत् एकसमयेनोक्तम्, तत्र तत्राष्टौ समयान् यावन्निरन्तरं कालो वाच्यः[1]। यत्र यत्र विंशतिस्तत्र तत्र चतुरः समयान् यावन्निरन्तरं सिद्धिकालो वाच्यः। यत्रापि दश दश एकसमयेन सिध्यन्त उक्तास्तत्रापि चतुरः समयान् यावन्निरन्तरं कालः। शेषेषु स्थानेषु द्वौ समयौ। यवमध्ये चत्वारः। इदं संक्षिप्ततरमुक्तम्। संप्रत्येतदेव मन्दमतिविनेयानुग्रहार्थं सविस्तरं पञ्चदशस्वपि द्वारेषु तदेव चिन्तयामः—तत्र क्षेत्रद्वारे पञ्चदशस्वपि कर्मभूमिष्वष्टौ समयान् यावन्निरन्तरं सिद्ध्यन्तः प्राप्यन्ते। हरिवर्षादिष्वधोलोके च चतुरश्चतुरः समयान्। नन्दनपण्डकवनयोर्लवणाब्धौ च द्वौ द्वौ समयौ १। कालद्वारे उत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं तृतीयचतुर्थारकयोरष्टावष्टौ समयान् शेषेषु चतुरश्चतुरः समयान् २। गतिद्वारे देवगतेरागता अष्टौ समयान्, शेषगतिभ्य आगताश्चतुरः समयान् ३। वेद द्वारे पुरुषवेदा अष्टौ समयान्। स्त्रीनपुंसकवेदाः प्रत्येकं चतुरश्चतुरः समयान्। पुरुषेभ्य उद्धृत्य पुरुषा एव सन्तः सिध्यन्तोऽष्टौ समयान् यावत्। शेषेषु चाऽष्टभङ्गेषु चतुरश्चतुरः समयान् ४। तीर्थद्वारे तीर्थकरतीर्थे तीर्थकरीतीर्थे चातीर्थकरसिद्धा उत्कर्षतोऽष्टौ समयान्। तीर्थकरस्तीर्थकर्यश्च द्वौ समयौ ५। लिङ्गद्वारे स्वलिङ्गेऽष्टौ समयान्, अन्यलिङ्गे चतुरः समयान्,

---

1 इतोऽग्रे 'संख्यामधिकृत्य द्वितीयचतुर्थसमयादिषु अष्टशतं न्यूनमेव भवतीति ज्ञेयम्' इति लभ्यतेऽधिकम्॥

गृहिलिङ्गे द्वौ समयौ ६। चारित्रद्वारे अनुभूतपरिहारविशुद्धिकचरित्राश्चतुरः समयान्। शेषा अष्टावष्टौ समयान् ७।बुद्धद्वारे स्वयंबुद्धा द्वौ समयौ, बुद्धबोधिता अष्टौ समयान्, प्रत्येकबुद्धा बुद्धीबोधिताः स्त्रियो नरादयो वा सामान्यतः प्रत्येकं चतुरः समयान् ८। ज्ञानद्वारे मतिश्रुतज्ञानिनो द्वौ समयौ,मतिश्रुतमनःपर्यायज्ञानिनश्चतुरः समयान्, मतिश्रुतावधिज्ञानिनो मतिश्रुतावधिमनःपर्यायज्ञानिनो वाष्टावष्टौ समयान् ९। अवगाहनाद्वारे उत्कृष्टायां जघन्यायां चावगाहनायां द्वौ द्वौ समयौ, यवमध्ये चतुरः समयान्, मध्यमावगाहनायां पुनरष्टौ समयान् १० । उत्कृष्टद्वारे अपतितसम्यक्त्वा द्वौ समयौ संख्येयकालप्रतिपतिता असंख्येयकालप्रतिपतिताश्च चतुरश्चतुरः समयान्, अनन्तकालप्रतिपतिता अष्टौ अष्टौ समयान् ११। इत्यन्तरादीनि चत्वारि द्वाराणि नेहावतरन्ति॥१९॥गतं मौलं पञ्चमं काल इति द्वारम्। सांप्रतं षष्ठमन्तरद्वारमाह—

**जंबुद्दीवे धायइ, ओह विभागे य तिसु विदेहेसु । वासपहुत्तं अंतर, पुक्खरदुविदेह वासहियं १ ॥२०॥**

क्षेत्रविभागे 'ओह' इति सामान्येन जम्बूद्वीपे धातकीखण्डे च विभागेन विशेषचिन्तायां जम्बूद्वीपसत्के एकस्मिन् विदेहे द्वयोश्च धातकीखण्डसत्कयोरेवं त्रिषु विदेहेषु उत्कृष्टं वर्षपृथक्त्वमन्तरं सिद्धिगमनलक्षणम् । तथा पुष्करवरद्वीपार्द्धे ओघेन विभागेन च तद्विदेहयोश्च वर्षमधिकमन्तरमिति १ ॥ २० ॥

**भरहेरवए जम्मा, कालो जुगलीण संखसमसहसा। संहरण २ नरेयतिरिए, समसहसा समसंयपहुत्तं ॥२१॥**

**तिरिईसुरेनरेनारीसूरीहिँ उवएससिद्धिलद्धीए। वासहिअंतर अहसयं, बोहीओ संखसमसहसो ॥ २२ ॥**

**सयमुवएसा भूजलेवणेसुहेमीसाणपढमकुगनेरया ३ ।**

कालद्वारे भरतैरावतेषु जन्मतः कालो युगलिनां युगलिकालः किञ्चिदूनाष्टादशसागरकोटाकोटीलक्षणंः । अवसर्पिण्या आद्यद्वितीयतृतीयारकाः उत्सर्पिण्याश्चतुर्थपञ्चमषष्ठारका इति भावः । संहरणतः संख्येयानि वर्षसहस्राणि २ । गतिद्वारे नरकतिर्यग्गत्योरागत्य सिध्यन्तो यथाक्रमं वर्षसहस्रं समाशतपृथक्त्वं चान्तरम् ॥ २१ ॥ तिरश्चादिभ्य आगत्योपदेशेन सिध्यतां सिद्धिलब्धेः शिवप्राप्तेरन्तरं वर्षं साधिकम् । अथ स्वयंबोधितस्ततः संख्यातसमासहस्राः ॥ २२ ॥ पृथिव्यब्वनस्पतिसौधर्मेशानाद्यद्वितीयनरकेभ्य आगत्य स्वयमुपदेशाद्वा सिध्यन्तः संख्याताः समासहस्राः ३ ॥

थीकीवेसुं भंगट्ठगे असंखिज्जसमसहसा ॥ २३ ॥

नरवेअ पढमभंगे, वरिसं ४ पत्तेअ[1]जिण[2]जिणी[3]सेसा। संखसमसहसं[1] पुव्वासहसपिहु[2]णंत[3]हिअवरिसं ५ ॥ २४ ॥

वेदद्वारे स्त्रीक्लीबवेदयोः शेषभङ्गाष्टके च नराः स्त्रीभ्य आगत्य सिध्यन्तीत्यादिपूर्वोक्तलक्षणे संख्येयाः समासहस्राः॥२३॥ नरवेदे तथा प्रथमभङ्गे पुरुषाः पुरुषेभ्य उद्धृत्य सिध्यन्तीतिलक्षणे वर्षं साधिकमित्यध्याहारः ४ । तीर्थद्वारे प्रत्येकबुद्धजिनजिनी शेषाः जिनीति प्राकृतत्वाद् ङीप्रत्यये तीर्थकरी, शेषाः सामान्यतः सर्वपुरुषाः, एतेषु यथासंख्यं संख्यातसमासहस्राणि पूर्वसहस्रपृथक्त्वम , 'अणंत' इति अनन्तकालः,समधिकं च वर्षमुत्कृष्टमन्तरम् ५। 'पुव्वासहसपिहु' इत्यत्र पूर्वशब्दस्य दीर्घत्वम् । 'दीर्घह्रस्वौ मिथो वृत्तौ' इति सूत्रेण ॥ २४ ॥

संखसमसहस गिहि अन्नलिंगहिअ वरिस तिचरण सलिंगे ।
सेसचरित्ते जुअली, ६ । ७ बुद्धबोहि अ पुरिस वरिसहिअं ॥ २५ ॥

**संखसमसहस सेसा, पुव्वसहस्सप्पहुत्त संबुद्धे ८। मइसुअ पलियअसंखो, भागोहिजुएऽहिअं वरिसं॥२६॥**
**सेसदुभंगे संखा, समसहसा ९ गुरुलहूइ जवमज्झे। सेढीअसंखभागो, मज्झवगाहे वरिसमहिअं १०॥२७॥**

लिङ्गद्वारे गृहिलिङ्गेऽन्यलिङ्गे च संख्यातसमासहस्राणि। स्वलिङ्गे च वर्षं समधिकम् ६। चारित्रद्वारे 'तिचरण' इति चारित्रत्रये सामायिकसूक्ष्मसंपरायथाख्यातस्वरूपे समधिकं वर्षम्, शेषचारित्रे च्छेदोपस्थापनपरिहारविशुद्धियुक्ते पूर्वोक्तचारित्रत्रये। किमुक्तं भवति—सामायिकच्छेदोपस्थापनसूक्ष्मसंपराययथाख्यातचारित्रिणां सामायिकच्छेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातचारित्रिणां च 'जुअली' इति युगलिकालोऽष्टादशातरकोटाकोट्यः किञ्चिदूनाः। यत एते चरणे भरतैरावतेषु प्रथमचरमतीर्थकरतीर्थ एव प्राप्येते, तत्र चेदमन्तरमुत्कर्षतो लभ्यत इति ७। बुद्धद्वारे बुद्धबोधितानां पुरुषाणां समधिकं वर्षम्। सूत्रे च 'तिचरण सलिङ्गे' इति द्वारव्यत्ययो गाथाबन्धानुलोम्यादिति ज्ञेयम्॥२५॥ 'सेसा' इति षष्ठ्यर्थे प्रथमा। ततः शेषाणां बुद्धबोधितस्त्रीणां प्रत्येकबुद्धानां च संख्यातसमासहस्राण्यन्तरम्, स्वयंबुद्धे पूर्वसहस्रपृथक्त्वम्८॥ ज्ञानद्वारे मतिश्रुतज्ञानिनामुत्कृष्टमन्तरं पल्याऽसंख्यातभागः, अवधियुक्ते मतिश्रुतज्ञाने समधिकं वर्षम् ॥ २६ ॥ शेषभङ्गद्विके मतिश्रुतमनःपर्यायलक्षणे मतिश्रुतावधिमनःपर्यायलक्षणे च संख्यातसमासहस्राणि ९। अवगाहनाद्वारे गुर्ववगाहनायां लघ्ववगाहनायां च यवमध्ये च प्रत्येकं "चउदसरज्जू लोगो, बुद्धिकओ सत्तरज्जुमाणघणो। तद्दीहेगपएसा सेढीपयरो य तब्वग्गो १" इत्येवंलक्षणश्रेण्यसंख्येयभागः श्रेण्यसंख्येयभागगतप्रदेशापहारकाल इत्यर्थः। मध्यमावगाहने वर्षमधिकम्१० ॥२७॥

**अचुअ असंखं सुअही, अणंतहिअवास सेस संखसमा ११।**

संतर १२ अणंतरं १३ इग, अणेग १४ समसहस संखिज्जा ॥ २८ ॥

उत्कृष्टद्वारे सूचनात्सूत्रस्य अच्युतसम्यक्त्वानां असंख्यांशो भाग उद्धेः सागरोपमस्य। 'अणंत' इति अनन्तकालच्युतसम्यक्त्वानां साधिकं वर्षम्। 'सेस' इति असंख्यातकालपतितसंख्यातकालपतितानाम् 'संखसमा' इति "व्याख्यानतो विशेषप्रतिपत्तिः" इति न्यायात् संख्यातसमासहस्राणि ११। अन्तरद्वारे सान्तरं सिध्यताम् १२। अनुसमयद्वारे निरन्तरं सिध्यताम् १३। गणनाद्वारे एककानामनेककानां च सिध्यतां उत्कृष्टमन्तरं संख्येयानि वर्षसहस्राणि १४ ॥ २८ ॥ उपसंहरन्नाह—

इअ गुरुअंतरमुत्तं, लहु समओ ६ भावु सव्वहिं खइओ ७।

इत्येवं 'जंबुद्दीवे धायई' इत्यादिपूर्वोक्तप्रमाणेन गुरुमुत्कृष्टमन्तरं सिद्धिगमनविरहकाले उक्तम्। लघु जघन्यमन्तरं सर्वत्र पञ्चदशस्वपि द्वारेषु एकसमयः ६। इत्युक्तं मौलं षष्ठमन्तरद्वारम्। संप्रति भावद्वारमाह—सर्वत्र सर्वद्वारेषु भावः क्षायिक एव ७। संप्रत्यल्पबहुत्वद्वारमाह—

चउ दस वीसा वीसप्पहुत्त अट्ठस्सयं कमसो ॥ २९ ॥

सम थोव समा संखागुणिआ इय भणिअणंतरा सिद्धा। अह उ परंपरसिद्धा, अप्पबहुं मुत्तु भणिअत्था ३०

'चउ दस' इत्यादि। तत्र ये तीर्थकरा ये च जले ऊर्ध्वलोकादौ चत्वारश्चत्वारः सिध्यन्ति, ये च हरिवर्षादिषु संहरणतो दश दश सिध्यन्ति, ते परस्परं समास्तुल्याः। तथैवोत्कर्षतो युगपदेकसमयेन प्राप्यमाणत्वात्। तेभ्यो विंशतिसिद्धाः

स्तोकाः तेषा स्त्रीषु दुःषमायामेकस्मिन् विजये वा प्राप्यमाणत्वात्, तैस्तुल्या विंशतिपृथक्त्वसिद्धाः। यतस्तेऽधोलौकिक-ग्रामेषु। बुद्धीबोधितस्त्र्यादिषु वा लभ्यन्ते, ततो विंशतिसिद्धैस्तुल्याः। क्षेत्रकालयोः स्वल्पत्वात्कादाचित्कत्वेन च संभवादिति। तेभ्योऽष्टशतसिद्धाः संख्यातगुणिताः संख्येयगुणाः इत्यर्थः। गतमल्पबहुत्वद्वारम्। इत्येवं प्रागुक्तप्रकारेणानन्तराः सिद्धाः भणिताः। अथानन्तरं पुनः परम्परासिद्धा भणितव्याः। ते पुनरल्पबहुत्वं मुक्त्वा भणितार्थाः। अयं विशेषः—द्रव्यप्रमाणे सर्वेष्वपि द्वारेषु सर्वत्रैवानन्ता वक्तव्याः। क्षेत्रस्पर्शने प्रागिव। कालः पुनरनादिरूपोऽनन्तो वक्तव्यः, अत एवासंभवादन्तरं न वाच्यम् ॥ २९ ॥ ३० ॥ संप्रति अवशिष्टमल्पबहुत्वं उच्यते—

**सामुद्द दीव जल थल, थोवा संखगुण थोव संखगुणा। उड्ढ अह तिरिअलोए, थोवा दुन्नि पुण संखगुणा ३१॥**

**लवणे कालोअम्मि य, जंबुद्दीवे अ धायईसंडे। पुक्खरवरदीवड्ढे, कमसो थोवा उ संखगुणा ॥ ३२ ॥**

**हिमवंते हेमवए, महहिमवं कुरुसु हरि निसढ भरहे। संखगुणा य विदेहे, जंबुद्दीवे समा सेसे ॥ ३३ ॥**

समुद्रे द्वीपे च सिद्धाः यथाक्रमं स्तोकाः संख्यातगुणाश्च। तथा जलसिद्धाः स्तोकाः, तेभ्यः संख्यातगुणाः स्थलसिद्धाः। तथा ऊर्ध्वलोकसिद्धाः स्तोकाः, तेभ्योऽधोलोकसिद्धाः संख्येगुणाः, तेभ्योऽपि तिर्यग्लोकसिद्धाः संख्येयगुणाः ॥ ३१ ॥ लवणे सिन्धौ सिद्धाः स्तोकाः, तेभ्यो यथोत्तरं कालोदादौ सिद्धाः संख्येयगुणाः ॥३२॥ जम्बूद्वीपे हिमवत्सिद्धाः स्तोकाः, ततो हैमवते संख्येयगुणाः, ततो महाहिमवति, ततो देवकुरुषु, ततो हरिवर्षे, ततो निषधे, ततो भरते, स्वस्थानत्वात् ततो विदेहे संख्येयगुणाः सदाभावात् महत्त्वाच्च। 'समा सेसे' इति समास्तुल्याः शेषे, जातावेकवचनम्। शेषेषु क्षेत्रेषु

तुल्यायामविस्तरेषु। इयमत्र भावना—शिखरिणि हिमवत्तुल्याः, हैरण्यवते[1] हैमवत्तुल्याः, रुपिणि[2] महाहिमवत्तुल्याः, उत्तरकुरुषु देवकुरुतुल्याः, रम्यके हरिवर्षतुल्याः, नीलवति निषधतुल्याः, ऐरवते भरततुल्याः सिद्धाः। हेतुः सर्वत्र क्षेत्रतुल्यबाहुल्यमेव ॥ ३३ ॥

**चुल्ल महहिमव निसढे, हेम कुरू हरिसु भारह विदेहे। चउ छट्ठे साहीया, धायइ सेसा उ संखगुणा ॥ ३४ ॥**

**पुक्खरवरेऽवि एवं, चउत्थठाणंमि नवरि संखगुणा। एसुं संहरणेणं, सिज्झंति समा य समगेसु ॥ ३५ ॥**

धातकीखण्डे क्षुद्रहिमवति सिद्धाः स्तोकाः १ ततो महाहिमवति संख्यातगुणाः २ ततो निषधे संख्यातगुणाः ३ ततो हैमवते विशेषाधिकाः ४ ततो देवकुरुषु संख्यातगुणाः ५ ततो हरिवर्षे विशेषाधिकाः ६ ततो भरते संख्यातगुणाः ७। 'भारह' इति सूत्रे आकारः 'अतः समृद्ध्यादौ वा' इति प्राकृतसूत्रे पाठः। ततो विदेहेषु संख्यातगुणाः ८। क्षेत्रबाहुल्यात्स्वस्थानत्वाच्च 'चउ छट्ठे साहीया' इत्यादि भावितमेव ॥ ३४ ॥ पुष्करार्द्धेऽप्येवं धातकीखण्डवद् ज्ञेयम्। केवलमियान् विशेषः—चतुर्थस्थाने हैमवतलक्षणे संख्यातगुणा वाच्याः। ननु हिमवदादिषु मनुष्योत्पत्त्यभावात् कथं सिद्धिसंभवः? इत्याह—'एसुं संहरणेणं' इति एषु हिमवदादिषु संहरणेन देवादिसंहरणमधिकृत्य सिध्यन्तीति। यद्येवं शिखरिगिर्यादिषु तर्हि सिध्यतां का वार्त्ता? इत्याह—'समा य समगेसु' इति समास्तुल्याः समकेषु समक्षेत्रपर्वतेषु। यथा हैमवतस्य हैरण्यवतस्य च तुल्याः। देवकुरूणामुत्तरकुरूणां चेत्यादि। तथा हिमवतः शिखरितुल्याः। महाहिमवतो रुप्यितुल्या इत्यादि

1 'ऐरण्यवते' इत्यपि। 2 रुक्मिणि ॥

॥ ३५ ॥ अथ सर्वक्षेत्रपर्वतादिसमवायेनाल्पबहुत्वमाह गाथाद्वयेन—

जंबु निसहंत मीसे, जं भणिअं पुव्वमहिअ बीअहिमे। दु ति महहिम हिमवंते, निसढ महाहिमवबिअहिमवे

तिअनिसहे बिअकुरुसुं, हरिसु अ तह तइअहेमकुरु हरिसु।

दु दु संख एग अहिआ, कमभरहविदेहतिग संखा १ ॥ ३७ ॥

अत्रैवं पदघटना—'मीसे' इति क्षेत्रद्विकादियोगे 'जंबु' इति जम्बूद्वीपे हिमवदादिनिषधान्तं यद्भणितं पूर्वं तत्तथैव ज्ञेयम्। तथाहि—जम्बूद्वीपसत्के हिमवति सिद्धाः स्तोकाः १ ततो हैमवते संख्यातगुणाः २ ततो महाहिमवति ३ ततो देवकुरुषु ४ ततो हरिवर्षे ५ ततो निषधे संख्येयगुणाः ६ ततः 'अहिअ' इति विशेषाधिकाः 'बीअहिमे' इति द्वितीयहिमवति धातकीखण्डहिमवतीत्यर्थः ७। 'दु ति महहिम हिमवंते' इति ततो द्वितीयमहाहिमवति धातकीसत्के इत्यर्थः ८। तृतीये हिमवति पुष्कराद्धसत्के इत्यर्थः संख्येयगुणाः ९। तेभ्यः 'दु ति' इत्यनुवर्त्तते ततो द्वितीये धातकीखण्डसत्के निषधे १० तृतीये पुष्कराद्धसत्के महाहिमवति च सिद्धाः संख्येयगुणाः ११ ततः 'बिअहिमवे' इति धातकीखण्डसत्के हैमवते विशेषाधिकाः १२ तेभ्योऽपि तृतीयनिषधे पुष्कराद्धसत्के सिद्धाः संख्येयगुणाः १३ ततो द्वितीयकुरुषु धातकीखण्डसत्केषु कुरुषु देवकुरुषु संख्येयगुणाः १४ तेभ्यो धातकीखण्डसत्क एव हरिवर्षे विशेषाधिकाः १५ तथा तृतीये पुष्कराद्धसत्के हैमवते संख्यातगुणाः १६ ततोऽपि पुष्कराद्धे एव देवकुरुषु सिद्धाः संख्येयगुणाः १७ तेभ्योऽपि तत्रैव हरिवर्षे विशेषाधिकाः १८ 'दु दु संख एग अहिआ' इति द्वयोर्द्वयोः स्थानयोः संख्यातगुणा इति वाच्यम्। एकस्मिन् स्थाने विशेषाधिका इति वाच्यम्।

एतच्च पूर्वमेव सविस्तरं भावितम्। 'कम' इति ततः क्रमेण भरतत्रिकसिद्धाः विदेहत्रिकसिद्धाश्च यथोत्तरं संख्यातगुणा वाच्याः। इदमुक्तं भवति—पुष्करार्द्धहरिवर्षसत्केभ्यः सिद्धेभ्यो जम्बूद्वीपभरतसिद्धाः संख्येयगुणाः १९ तेभ्यो धातकीखण्डभरतसिद्धाः संख्येयगुणाः २० ततः पुष्करार्द्धभरतसिद्धाः संख्येयगुणाः २१ ततो जम्बूद्वीपविदेहसिद्धाः संख्येयगुणाः २२ ततो धातकीखण्डविदेहसिद्धाः संख्यातगुणाः २३ ततः पुष्करवरद्वीपार्द्धविदेहसिद्धाः संख्यातगुणाः २४। समानक्षेत्रेषु समानगिरिषु च निजनिजवर्षैर्वर्षधरैश्च समं तुल्या वाच्याः॥ ३६॥ ३७॥ गतं क्षेत्रद्वारम्। संप्रति कालद्वारमाह—

**दुसमदुसमाइ थोवा, दूसमसंखगुण सुसमसुसमाए। अस्संखा पण छट्ठे, अहिआ तुरिअंमि संखगुणा॥३८॥**
**अवसप्पिणि अरएसुं, एवं ओसप्पिणीइ मीसेवि। परमवसप्पिणि दुस्समअहिआ सेसेसु दुसुवि समा॥३९॥**

अवसर्पिण्यां संहरणतो दुःषमदुःषमाया सिद्धाः स्तोकाः १ दुःषमायां संख्यातगुणाः २ तेभ्यः सुषमदुःषमायामसंख्येयगुणाः कालस्यासंख्येयत्वात् ३ 'पण छट्ठे अहिआ' इति ततः पञ्चमारके सुषमाभिधे 'अधिका' विशेषाधिकाः ४ ततः षष्ठे सुषमसुषमाख्ये विशेषाधिकाः ५ तेभ्यः 'तुरीये' चतुर्थे दुःषमसुषमारके सिद्धाः संख्यातगुणाः ६। ३८॥ एवमवसर्पिण्या अरकेषु गणितम्। उत्सर्पिण्या अरकेष्वप्येवमेव ज्ञेयम्। 'मीसेवि' इति अवसर्पिण्युत्सर्पिणीरूपे मिश्रेऽप्येवमेव, परं केवलमयं विशेषः—उत्सर्पिणीदुःषमारके 'अधिका' विशेषाधिका वाच्याः। द्वयोरप्यवसर्पिण्युत्सर्पिण्योः शेषेष्वरकेषु 'समाः' तुल्या वाच्याः। इदमुक्तं भवति—द्वयोरप्येकान्तदुःषमासिद्धाः सर्वस्तोकाः १ तत उत्सर्पिणीदुःषमारके सिद्धा विशेषाधिकाः २ ततोऽवसर्पिण्यां दुःषमासिद्धाः संख्येयगुणाः ३ ततो द्वयोरपि सुषम दुःषमासिद्धा असंख्येयगुणाः ४ तेभ्योऽपि द्वयोरपि

सुषमासिद्धा विशेषाधिकाः ५ तेभ्योऽपि द्वयोरपि सुषमसुषमासिद्धा विशेषाधिकाः ६ तेभ्योऽपि द्वयोरपि दुःषमसुषमासिद्धाः संख्येयगुणाः ७ ततोऽवसर्पिण्यां सर्वसिद्धाः संख्येयगुणाः ८ तेभ्योऽप्युत्सर्पिण्याः सर्वसिद्धा विशेषाधिकाः ९ । २ ॥ ३९ ॥ गतं कालद्वारम्, संप्रति गतिद्वारमाह—

**थी १ नर २ नरय ३ तिरित्थी ४, तिरि ५ देवी ६ देव ७ थोव १ संखगुणा ६ ।**

**इग १ पणिंदि २ थोव १ संखा २, तरु १ भू २ जल ३ तसिहि ४ संखगुणा ॥ ४० ॥**

**चउ १ ति २ दुग ३ नरय तरु ४, महि ५ जल ६ भवण ७ । ८ वणिंद ९ । १० जोइ ११ देविसुरा १२ ।**

**नारी १३ नर १४ रयणाए १५, तिरिइ १६ तिरि १७ णुत्तरा १८ य सुरा २९ ॥ ४१ ॥**

**दु पढमदिवदेवि ३० । ३१ सुरा ३२ ॥ ३ ।**

मानुषीभ्योऽनन्तरमुद्धृत्य सिद्धाः सर्वस्तोकाः शेषेभ्यो यथोत्तरं संख्येयगुणा वाच्याः । तथा एकेन्द्रियेभ्योऽनन्तरमुद्धृत्य सिद्धाः स्तोकाः, तेभ्यः पञ्चेन्द्रियेभ्योऽनन्तरागता सिद्धाः संख्येयगुणाः । तथा तरुभ्योऽनन्तरागताः सिद्धाः स्तोकाः, ततः पृथिवीकायेभ्यः, जलकायेभ्यः, त्रसकायेभ्योऽनन्तरागता यथोत्तरं संख्यातगुणाः ॥ ४० ॥ चतुर्थनरकागताः सिद्धाः सर्वस्तोकाः संख्येयगुणाः १ एवं तृतीय २ द्वितीयनरकागताः सिद्धाः संख्येयगुणाः ३ तरुभ्यः पर्याप्तबादरप्रत्येकवनस्पतिभ्यः ४ महीकायिकेभ्यः पर्याप्तबादरपृथिवीकायिकेभ्यः ५ ततो बादरजलकायिकेभ्यः ६ ततो भवनपतिदेवीभ्यः ७ ततो

भवनपतिदेवेभ्यः ८ ततो व्यन्तरदेवीभ्यः ९ ततो व्यन्तरदेवेभ्यः १० ततो ज्योतिष्कदेवीभ्यः ११ ततो ज्योतिष्कदेवेभ्यः १२ नारीभ्यः १३ नरेभ्यः १४ ततो रत्नप्रभायाः १५ तिरश्चीभ्यः १६ तिर्यग्भ्यः १७ ततोऽनुत्तरोपपातिदेवेभ्यः १८ ग्रैवेयकेभ्यः १९ ततोऽच्युतदेवलोकेभ्यः २० ततोऽप्यारणात् २१ ततः प्राणतात् २२ एवमधोमुखं तावज्ज्ञेयं यावत्सनत्कुमारादनन्तरमुद्धृत्य सिद्धा यथोत्तरं संख्येयगुणाः २९ ततो द्वितीयदिवो देवीभ्यः ३० सौधर्मदेवीभ्यः ३१ द्वितीयदिवो देवेभ्यः ३२ ततः प्रथमदिवो देवेभ्यः ३३ अनन्तरमुद्धृत्य सिद्धा यथोत्तरं संख्येयगुणाः ३४। उक्तं च—"नरगचउत्था पुढवी, तच्चा दुच्चा तरूपुढविआऊ। भवणवइदेविदेवा, एवं वणजोइसाणंपि ॥१॥ मणुई मणुस्स पढमा, नारय तत्तो तिरित्थि तिरिआ य। देवा अणुत्तराई, सव्वेवि सणंकुमारंता ॥ २ ॥ ईसाणदेविसोहम्मदेविईसाणदेवसोहम्मा। सव्वेवि जहा कमसो, अणंतराया य संखगुणा ॥ ३ ॥" गतं गतिद्वारं ३ संप्रति वेदद्वारमाह—

**कीवि त्थी नर ४ गिहन्ननिअलिंगे ५। तित्थयरि तित्थपत्ते, समणी मुणि कमिणसंखगुणा ॥ ४२ ॥**

**तित्थयर तित्थिपत्ते समणी मुणिणंतसंखसंखगुणा ६।**

वेदद्वारे क्लीबसिद्धाः स्तोकाः, ततः स्त्रीसिद्धाः संख्येयगुणाः, ततः पुरुषसिद्धाः संख्यातगुणाः ४। लिङ्गद्वारे गृहलिङ्गसिद्धाः स्तोकाः, तेभ्योऽन्यलिङ्गसिद्धा असंख्येयगुणाः, ततः स्वलिङ्गसिद्धा असंख्येयगुणाः। अत्र च द्वारे 'मुणि कमिण संखगुणा' इत्यत्र सूत्रपाठेऽकारविश्लेषो द्रष्टव्यः 'गिहिअन्नसलिङ्गेहिं थोवा दुवे असंखगुणा' ५। तीर्थद्वारे तीर्थकरीसिद्धाः स्तोकाः,

---

1 'अनन्तरच्युताः संख्यातगुणा आरणे, ततः संख्यातगुणाः प्राणते, प्राणतादेवं' इत्थं रूपेण क्वचित्।

तेभ्यः तत्तीर्थ एव प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्यस्तत्तीर्थ एवातीर्थकरी श्रमणीसिद्धाः संख्यातगुणाः, तेभ्यस्तत्तीर्थमुनिसिद्धाः संख्येयगुणाः ॥ ४२ ॥ तीर्थकरीतीर्थमुनिसिद्धेभ्यः तीर्थकरसिद्धा अनन्तगुणाः, तेभ्यस्तत्तीर्थ एव प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, ततः श्रमणीसिद्धाः संख्येययगुणाः, ततस्तत्तीर्थ एव मुनिसिद्धाः संख्यातगुणाः ६ ।

परिहार चउग पणगे, छेय ति चउ सेसचरणंमि ॥ ४३ ॥
संख असंख दु संखा ७. सं पत्ते बुद्धि बुद्ध संखगुणा ८ ।
मणजुअ थोवा मइसुअ, संख चउ असंख तिग संखा ९ ॥ ४४ ॥

चारित्रद्वारे च्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातचारित्रसिद्धा इति चतुष्कसिद्धाः स्तोकाः १। सामायिकरहितं च च्छेदोपस्थापनं भग्नचारित्रस्यावगन्तव्यम् । ततः सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातचारित्रसिद्धा इति पञ्चकसिद्धाः संख्येयगुणाः २, तेभ्यः च्छेदोपस्थापनसूक्ष्मसंपराययथाख्यातचारित्रत्रिकसिद्धा असंख्यातगुणाः ३, ततोऽपि सामायिकच्छेदोपस्थापनसूक्ष्मसंपराययथाख्यातरूपचतुष्कसिद्धाः संख्येयगुणाः ४, शेषचारित्रभङ्गे ॥ ४३ ॥ ततः सामायिकसूक्ष्मसंपराययथाख्यातचारित्रसिद्धाः संख्यातगुणाः ५ । ७ । बुद्धद्वारे 'सं' इति स्वयंबुद्धसिद्धाः स्तोकाः १, तेभ्यः प्रत्येकबुद्धसिद्धाः २ तेभ्योऽपि बुद्धीबोधिताः सिद्धाः ३ तेभ्योऽपि बुद्धबोधिताः सिद्धाः ४ क्रमेण त्रयोऽपि



1 'अतीर्थे मुनिसिद्धाः' इत्येवंरूप कचित् । कचित्तु 'तेभ्यस्तत्तीर्थ एव मुनिसिद्धाः' इत्येवंरूपेण ॥

संख्यातगुणाः ८। ज्ञानद्वारे मतिश्रुतज्ञानसिद्धाः मनःपर्यायज्ञानयुक्ताः स्तोकाः मतिश्रुतमनःपर्यायज्ञानसिद्धाः सर्वस्तोकाः १ तत आ आवृत्त्या 'मइसुअ' इति पदमेव व्याख्यायते, तेभ्यो मतिश्रुतज्ञानसिद्धाः संख्येयगुणाः, २ 'चउ' इति तेभ्योऽपि मतिश्रुतावधिमनःपर्यायज्ञानसिद्धाः असंख्येयगुणाः ३ ततो मतिश्रुतावधिज्ञानत्रयसिद्धाः संख्येयगुणाः ४ । ९ ॥ ४४ ॥ इत ऊर्ध्वं गाथाबन्धानुलोम्यात् द्वाराणां व्यत्ययेन व्याख्यानमाह—

**अडसमयसिद्ध थोवा, संखिज्जगुणा उ सत्तसमयाई १३। अचुअ चुअतीसु थोवा, असंख संखा असंखा य ११**

अनुसमयद्वारे सर्वस्तोका अष्टसमयसिद्धाः, अष्टौ समयान् यावन्निरन्तरं सिध्यतां जीवानां स्तोकानामेव लभ्यमानत्वात्। ततः सप्तसमयसिद्धाः संख्येगुणाः । एवं समयसमयहान्या तावद्वाच्यं, यावद्द्विसमयसिद्धाः संख्येयगुणाः । एकसमयस्य तु नैरन्तर्याभावात् अत्रासंभवः १३ । उत्कृष्टद्वारे 'अचुअ' इति अच्युतसम्यक्त्वसिद्धाः स्तोकाः 'चुअतीसु' इति त्रिषु च्युतसम्यक्त्वेषु संख्यातकालच्युतसम्यक्त्वेष्वसंख्यातकालच्युतसम्यक्त्वेष्वनन्तकालच्युतसम्यक्त्वेषु च यथोत्तरं असंख्यातसंख्यातासंख्यातगुणत्वं वाच्यम् । अत्रायमर्थः—सर्वस्तोका अप्रतिपतितसम्यक्त्वसिद्धाः, ततः संख्येयकालप्रतिपतितसम्यक्त्वसिद्धा असंख्येयगुणाः, तेभ्योऽसंख्येयकालप्रतिपतितसम्यक्त्वसिद्धाः संख्येयगुणाः, तेभ्योऽप्यनन्तकालप्रतिपतितसम्यक्त्वसिद्धा असंख्येयगुणाः ११ ॥ ४५ ॥

**एगो जा जवमज्झं, संखगुण परा उ संखगुणहीणा।छम्मासंता १२ लहु गुरु,मज्झ तणू थोव दुअसंखा१०।४६**

अन्तरद्वारे षण्मासान्तरसिद्धाः स्तोकाः, तत एकसमयान्तरसिद्धाः संख्येयगुणाः । ततो द्विसमयान्तरसिद्धाः संख्ये-

यगुणाः । एवं तावद्वाच्यं यावद्यवमध्यम् । ततः परं संख्यातगुणहानिः संख्यातगुणहानिः तावद्वाच्या यावदेकसमयहीनषण्मासान्तरसिद्धेभ्यः षण्मासान्तरसिद्धाः संख्येयगुणहीनाः । अत्रायमाशयः—यवमध्यात्परतः संख्यातगुणहीनसंख्यातगुणहीनास्तावद्वाच्या यावदेकसमयहीनषण्मासान्तरसिद्धाः संख्यातगुणहीनाः १२ । अवगाहनाद्वारे लघुतनुसिद्धाः स्तोकाः, ततो गुरुतनुसिद्धा असंख्येयगुणाः, ततो मध्यतनुसिद्धा असंख्येयगुणाः । अत्रायं विशेषः–सर्वस्तोकाः सप्तहस्तावगाहनाः सिद्धाः, ततः पञ्चधनुःशतप्रमाणावगाहनाः सिद्धा विशेषाधिकाः ॥ १० ॥ ४६ ॥

**अट्ठसयसिद्ध थोवा, सत्तहिअ अणंतगुणिअ जा पन्ना। जा पणवीसमसंखा, एगंता जाव संखगुणा १४॥४७**

गणनाद्वारे अष्टशतसिद्धाः स्तोकाः, तेभ्यः सप्ताधिकशतसिद्धा अनन्तगुणाः; एवमेकैकहान्याऽनन्तगुणास्तावद्वाच्या यादेकपञ्चाशत्सिद्धेभ्यः पञ्चाशत्सिद्धा अनन्तगुणाः । ततस्तेभ्यः एकोनपञ्चाशत्सिद्धा असंख्येयगुणाः, ततोऽप्यष्टचत्वारिंशत्सिद्धा असंख्येयगुणाः; एवमेकैकहान्या तावद्वाच्यं यावत् षड्विंशतिसिद्धेभ्यः पञ्चविंशतिसिद्धा असंख्येयगुणाः । ततस्तेभ्यश्चतुर्विंशतिसिद्धाः संख्येयगुणाः; एवमेकैकहान्या तावद्वाच्यं यावद्द्विकसिद्धेभ्य एकैकसिद्धाः संख्येयगुणाः १४ ॥४७॥

संप्रत्यत्रैवाल्पबहुत्वद्वारे यो विशेषस्तमाह—

**उम्मंथिअ उद्धट्ठिअ, उक्कडि वीरासणे निउंजे अ। पासिल्लग उत्ताणग, सिद्धा उ कमेण संखगुणा १५॥४८॥**



सर्वस्तोका उन्मन्थितसिद्धाः अधोमुखसिद्धाः । ते च पूर्ववैरिभिः पादेनोत्पाट्य नीयमाना अधोमुखकायोत्सर्गस्था वा वेदितव्याः १ । तेभ्य ऊर्ध्वस्थितकायोत्सर्गसिद्धाः २, तेभ्यः उत्कटिकासनसिद्धाः ३, तेभ्यो वीरासनसिद्धाः ४ तेभ्यो-

ऽपि न्युब्जासनसिद्धाः न्युब्ज उपविष्ट एवाधोमुखो द्रष्टव्यः ५, तेभ्यः पार्श्वस्थितसिद्धाः ६ तेभ्योऽप्युत्तानकस्थितसिद्धाः ७। एते क्रमेण यथोत्तरं संख्येयगुणाः १५ ॥ ४८ ॥ तदेवमुक्तमल्पबहुत्वद्वारम्, संप्रति सर्वगताल्पबहुत्वविशेषोपदर्शनाय संनिकर्षद्वारमुच्यते। तत्र संनिकर्षो नाम संयोगो ह्रस्वदीर्घयोरिव विवक्षितं किञ्चित्प्रतीत्य विवक्षितस्याल्पत्वेन बहुत्वेन वाऽवस्थानरूपः संबन्धः—

**पणवीस पन्न अडसय, पण दस वीसा य ति पण दसगं चा।संख असंख अणंत य, गुणहाणि चउट्ठआइं ता॥४९**

**इग दुग इग दुग चउ बहुणंत बहु असंखणंतगुणहीणा। इय सिद्धाण सरूवं, लिहिअं देविंदसूरीहिं ॥ ५० ॥**

यत्र यत्राष्टशतं सिद्धादुपलभ्यते, तत्र तत्रेयं व्याप्तिः। सर्वबहव एककसिद्धाः, ततो द्विकद्विकसिद्धाः संख्येयगुणहीनाः, ततस्त्रिकत्रिकसिद्धाः संख्येयगुणहीनाः, एवं तावद्वाच्यं यावत्पञ्चविंशतिसिद्धाः संख्येयगुणहीनाः। ततोऽपि षड्विंशतिसिद्धा असंख्येयगुणहीनाः, ततः सप्तविंशतिसिद्धा असंख्येयगुणहीनाः, एवमेकैकवृद्ध्या असंख्येयगुणहानिस्तावद्वक्तव्या यावत्पञ्चाशत्। तेभ्योऽपि एकपञ्चाशत्सिद्धा अनन्तगुणहीनाः, ततोऽपि द्विपञ्चाशत्सिद्धाः, एवमेकैकवृद्ध्या अनन्तगुणहानिस्तावद्वक्तव्या यावदष्टाधिकशतसिद्धा अनन्तगुणहीनाः। यत्र यत्र पुनर्विंशतिसिद्धास्तत्र तत्रेयं व्याप्तिः—एककसिद्धाः सर्वबहवः, तेभ्यो द्विकद्विकसिद्धाः संख्यातगुणहीनाः, एवं तावद्वाच्यं यावत्पञ्च। ततः षडादिसिद्धा असंख्यातगुणहीनाः, यावद्दश। तत एकादशादयः सर्वेऽप्यनन्तगुणहीनास्तावद्वाच्या यावद्विंशतिसिद्धा अनन्तगुणहीनाः। एवमधोलोकादिष्वपि। विंशतिपृथक्त्वसिद्धौ प्रथमचतुर्थभागे संख्येयगुणहानिः, द्वितीयचतुर्थभागेऽसंख्येयगुणहानिः, तृतीयस्माच्चतुर्थभागादारभ्य

पुनः सर्वत्राप्यनन्तगुणहानिः। यत्र पुनर्दश दश सिद्ध्यन्ति, तत्रैवं व्याप्तिः—एककसिद्धाः सर्वबहवः, ततो द्विकद्विकसिद्धाः संख्येयगुणहीनाः, ततस्त्रिकत्रिकसिद्धाः संख्यातगुणहीनाः, तेभ्यश्चतुष्कचतुष्कसिद्धाः असंख्यातगुणहीनाः, ततः पञ्च पञ्च सिद्धा असंख्यातगुणहीनाः, ततः षडादयः सर्वेऽप्यनन्तगुणहीना वाच्याः। 'संख असंख अणंत य गुणहाणि' इति भावितमेव। तथा 'चउट्ठआई' इति यत्र यत्र यवमध्यादावष्टौ सिध्यन्ति तत्र तत्र चतुष्कं यावदाद्या संख्यातगुणहानिः, ततः परं पञ्चकादावन्त्यानन्तगुणहानिर्वाच्या। अत्र मध्या संख्येयगुणहानिर्न विद्यते।एतदुक्तं भवति—एककसिद्धाः सर्वबहवः, ततो द्विकद्विकसिद्धाः संख्यातगुणहीनाः, ततस्त्रिकत्रिकसिद्धाः संख्यातगुणहीनाः, ततश्चतुष्कचतुष्कसिद्धाः संख्यातगुणहीनाः, ततः पञ्चादयोऽष्टपर्यन्ताः सर्वेऽप्यनन्तगुणहीनाः ॥ ४९ ॥ 'इग' अत्रैवमक्षरघटना—यत्र लवणादौ द्वयं द्वयं सिध्यति, तत्र सर्वबहव एककसिद्धाः, ततो द्विकद्विकसिद्धा अनन्तगुणहीनाः। यत्र पुनरूर्ध्वलोकादौ चत्वारः सिध्यन्ति, तत्रैवं व्याप्तिः तत्र सर्वबहव एककसिद्धाः, ततो द्विकद्विकसिद्धाः असंख्येयगुणहीनाः, तेभ्यस्त्रिकत्रिकसिद्धा अनन्तगुणहीनाः, तेभ्योऽपि चतुश्चतुःसिद्धा अनन्तगुणहीनाः। तदेवमिह संनिकर्षो द्रव्यप्रमाणे सप्रपञ्चं चिन्तितः। शेषेषु द्वारेषु सिद्धासिद्धप्राभृतटीकातो भावनीयाः। इत्येवं पूर्वोक्तप्रकारेण सिद्धानां मुक्तिपदप्राप्तानां स्वरूपं लिखितं अक्षरन्यासीकृतं श्रीसिद्धप्राभृतादिति शेषः। कैः श्रीदेवेन्द्रसूरिभिः ॥ ५० ॥ ॥ इति श्रीसिद्धपञ्चाशिकावचूरिः समाप्ता ॥



॥ समाप्तेयं श्रीमद्देवेन्द्रसूरिविरचिता सावचूरिका सिद्धपञ्चाशिका ॥

श्रीआत्मानन्द-ग्रन्थरत्नमाला-सप्तदशं रत्नम् ( १७ )

श्रीमदानन्दविजयविरचितवृत्तिसहितं

# अन्नायउंछकुलकम् ।

सुसाध्वीश्रीमतीज्ञानश्रीसदुपदेशेनाणहिल्लपुरपत्तनवास्तव्यश्रीमालिज्ञातीयश्रेष्ठि-
महोकमचन्द्रात्मजभोगिलालस्मरणार्थं श्राविका फदीबाईसमर्पितद्रव्यसाहाय्येन

प्रकाशयित्री-श्रीआत्मानन्दसभा-भावनगर ।

इदं पुस्तकं मुम्बय्यां वल्लभदास-त्रिभुवनदास गांधी सेक्रेटरी जैनआत्मानन्दसभा भावनगर इत्यनेन
निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३, तमे गृहे रामचन्द्र यशवन्त शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४३९. आत्मसंवत् १९. विक्रमसंवत् १९६९.

## ॥ प्रस्तावना ॥

'इह हि संक्षेपेणाहारशुद्ध्यादियत्याचारविचारप्रतिपादकस्य भोजनाद्यवसरे परावर्तनार्थचिन्तना प्रायः प्रतिदिनं साधूपयोगिनः' अस्यैकत्रिंशद्गाथात्मकस्य 'अन्नायउंछ'—कुलकस्य, सङ्ग्रहकर्त्तारः के मुनिनेतारः ? इति न ज्ञायते, अभिधानाद्यनभिधानात् ।

अनेकागमविचारकैष्टीकाकारकैस्तु—"कोविदविजयविमलगणिशिष्येण नन्दविजयसञ्ज्ञेन । एकत्रिंशत्पद्यार्थो लिखितः कोऽपि समयोक्तः ॥" एतदन्तिमानवद्यपद्येन स्वस्य गुरोश्च धृतरत्नत्रयनिधान पावनाभिधानं स्वयं सूचितमेव । श्रीमद्विजयविमलगणयस्तपागच्छनायकश्रीमदानन्दविमलसूरीश्वराणामन्तेवासिन आसन् । तैः कोविदकुलावतंसैर्गच्छाचार—तन्दुलवैचारिकाद्यनेकग्रन्थानां वृत्तयो विहिता, तथा विचारपञ्चाशिका—भावप्रकरणाद्यनेकानि रहस्यपूर्णप्रकरणरत्नानि प्रणीतानि च । तेषां सत्तासमयः, अस्यामात्मानन्दग्रन्थरत्नमालायामेव प्रकटीभूतानां भावप्रकरणादिग्रन्थरत्नानामुपोद्घाते ( प्रस्तावनायां ) तत्संशोधकविद्वद्वरैः श्रीमच्चतुरविजयमुनिवर्यैः सम्यग् निर्णीतः । तेषामेव विबुधानां विनेयाः श्रीमदानन्दविजया अस्य प्रकरणस्य वृत्तिविधायिनः, अत एषामपि सत्तासमयः स एव, यो गुरूणाम् ।

अस्य प्रकरणस्य शोधनसमये त्रीणि पुस्तकानि समासादितानि । तेष्वेकं पूज्यप्रवर्तकश्रीमत्कान्तिविजयमुनिपानां समीपतः, द्वितीयं पत्तनपुरस्थसङ्घसत्कभाण्डागारात्, तृतीयं पुनः सागरगच्छ—पुस्तकसङ्ग्रहात् । पुस्तकत्रयावलोकनेन सम्भाव्यते यत्, द्वितीयपुस्तकादेवाद्यतृतीय पुस्तकं लिपिकृतम् । अत एतत्प्रत्याधारेण शोधितेऽप्यत्र प्रकरणे यत्र कुत्र यानि सन्देहस्थानानि भवेयुस्तानि विशोधयन्तु श्रुतधरमुनिप्रवरा इति निवेदयति नम्रीभूतः—

श्रीमद्विजयानन्दसूरिसन्तानीयः—**जिनविजयो मुनिः ।**

॥ अर्हम् ॥

# ॥ सवृत्तिकं अन्नायउंछकुलकम् ॥

प्रणम्य भक्तितो वीरजिनं सिद्धार्थनन्दनम् । 'अन्नायउंछ' इत्यादिपद्यार्थः कोऽपि लिख्यते ॥ १ ॥

इह हि संक्षेपेणाहारशुद्ध्यादियत्याचारविचारप्रतिपादकस्य भोजनाद्यवसरे परावर्तनार्थचिन्तनाप्रायः प्रतिदिनं साधूपयोगिनः, 'अन्नायउंछगहणे' इत्यादिकुलकस्य स्वपरहितहेतवे व्याख्यामाख्यातुं किञ्चिदुपक्रम्यते । तत्रेयं प्रथमगाथा—

**अन्नायउंछगहणे कयचित्तो निक्खमिज्ज वसहीए । को नाम नाणपमुहे रयणे विक्किज्ज पिंडत्थी ॥ १ ॥**

परिचयाकरणेनाज्ञातस्य सतः साधोर्यदुञ्छस्य भुक्तवत्सु गृहस्थेषूद्धरितभक्तादेर्ग्रहणं, अटित्वाऽऽदानं तदज्ञातोञ्छग्रहणम् । अथवा, अज्ञातोञ्छस्य अनावर्जनादिना भावपरिशुद्धस्य, स्तोक-स्तोकस्य ग्रहणं, अज्ञातोञ्छग्रहणम् । तस्मिन् 'कृतचित्तो' विहितमना व्युच्छिन्नजिनकल्पपरिकर्मकारि-श्रीस्थूलभद्रस्वामि-शिष्य-श्रीमदार्यमहागिरिरिव । यतिरिति शेषः । 'वसतेः' उपाश्रयात्, 'निष्क्रामेत्' भिक्षाचर्यार्थं निर्गच्छेत् । अज्ञातोञ्छग्रहणे कारणमाह—'नाम' इति संभावनायां, 'को' दक्षः पुमान् 'पिण्डार्थी' आहारार्थी, आहारनिमित्तमित्यर्थः । 'ज्ञानप्रमुखानि' ज्ञान-दर्शन-चारित्र-तपःप्रभृतीनि रत्नानीव 'रत्नानि' । सूत्रे पुंस्त्वं प्राकृतत्वात् । 'विक्रीणीयात्' आहारग्रहणार्थं ज्ञानादीनि प्रयुज्य को विफलीकुर्यादित्यर्थः । अत्र श्रीमहागिरिकथानकं यथा—भविकाननुगृह्णन्तौ कुर्वाणौ धर्मदेशनाम् । महीं विहरतः स्मार्यौ महागिरि—सुहस्तिनौ ॥१॥

कालक्रमेण भगवान् जगद्बन्धुर्महागिरिः । शिष्यान्निष्पादयामास वाचनाभिरनेकशः ॥ २ ॥ महागिरिर्निजं गच्छमन्यदाऽदात् सुहस्तिने । विहर्तुं जिनकल्पेन त्वेकोऽभून्मनसा स्वयम् ॥ ३ ॥ व्युच्छेदाज्जिनकल्पस्य गच्छनिश्रास्थितोऽपि हि । जिनकल्पार्हया वृत्त्या विजहार महागिरिः ॥ ४ ॥ ते धर्मदेशनावारि वर्षन्तो वारिदा इव । विहरन्तोऽन्यदा जग्मुः पाटलीपुत्रपत्तनम् ॥ ५ ॥ वसुभूतिरिति श्रेष्ठी तत्राचार्य-सुहस्तिना । संबोधितः श्रावकोऽभूज्जीवाजीवादितत्त्ववित् ॥ ६ ॥ सुहस्त्याख्यातधर्मानुवादेन स्वजनानपि । प्रतिबोधितुमारेभे वसुभूतिर्दिवानिशम् ॥ ७ ॥ प्रबोध्यमाना अपि ते सादरं वसुभूतिना । नाबुध्यन्त विना धर्माचार्यमत्यल्पमेधसः ॥ ८ ॥ वसुभूतिर्गुरोराख्यद् भगवन् ! स्वजना मया । न पारिता बोधयितुं तान् बोधयितुमर्हसि ॥ ९ ॥ इति तत्प्रतिबोधाय सुहस्ती तद्गृहं ययौ । सुधातरङ्गिणीप्रायां चारेभे धर्मदेशनाम् ॥ १० ॥ प्राविशत्तत्र भिक्षार्थं तदाचार्य-महागिरिः । तमभ्युदस्थादाचार्यः सुहस्ती वन्दते स्म च ॥ ११ ॥ श्रेष्ठ्यप्युवाच युष्माकमपि कोऽप्यस्ति किं गुरुः ? । युष्माभिर्वन्द्यते विश्ववन्द्यैर्यदयमागतः ॥ १२ ॥ सुहस्ती स्माह भो श्रेष्ठिन् ! ममैते गुरवः खलु । त्यागार्हभक्तपानादिभिक्षामाददते सदा ॥१३॥ ईदृग् भिक्षाशना ह्येतेऽपरथा स्युरुपोषिताः । सुगृहीतं च नामैषां वन्द्यं पादरजोऽपि हिं ॥ १४ ॥ एवं महागिरिं स्तुत्वा प्रतिबोध्याखिलांश्च तान् । पुनरेव निजं स्थानं सुहस्ती भगवान् ययौ ॥ १५ ॥ श्रेष्ठ्यपि स्वजनानूचे दृढभक्तिर्विशेषतः । ईदृशं पश्यत मुनिं यदा भिक्षार्थमागतम् ॥ १६ ॥ त्यज्यमानं दर्शयित्वा भक्तपानादिकं तदा । तस्मै देयं तदा दत्तं तद्वचः[1] स्यान्महाफलम् ॥ १७ ॥ स्वजनैर्वसुभूतेस्तु प्रत्यपद्यत

१ 'तद्धि वः' इत्यपि ॥

तद्वचः। भिक्षार्थं च द्वितीयेऽह्नि तेष्वेवागान्महागिरिः ॥ १८ ॥ महागिरिं समायान्तं दृष्ट्वा ते श्रेष्ठिबन्धवः। तथैवारेभिरे कर्तुं तस्मै तद्दातुमिच्छवः ॥ १९ ॥ उपयोगेन विज्ञाय तदशुद्धं महागिरिः। अनादायैव वसतिं गत्वा चोचे सुहस्तिनम् ॥ २० ॥ त्वया ह्यो विनयं कृत्वा ऽनेषणा महती कृता। ते हि त्वदुपदेशेन भिक्षां मह्यमसज्जयन् ॥ २१ ॥ नैवं भूयः करिष्येऽहमिति जल्पन् सुहस्त्यपि। क्षमयामास पादाग्रे लुठन्नार्यमहागिरिम् ॥ २२ ॥ इति ॥ १ ॥ आदावाहारशुद्धेः सदृष्टान्तां दुर्लभतामाह—

**आहारे खलु सुद्धी दुलहा समणाण समणधम्मंमि। ववहारे पुण सुद्धी गिहिधम्मे दुक्करा भणिआ ॥२॥**

'श्रमणानां' साधूनां, 'श्रमणधर्म्मे' श्रामण्ये, 'खलु' निश्चितं, 'आहारः' इति चतुर्विधाहारविषया 'शुद्धिः' शुद्धता, निर्दोषता 'दुर्लभा'। 'गृहिधर्म्मे' श्रावकधर्म्मे, 'पुनर्व्यवहारे' व्यवहारविषया 'शुद्धिः' 'दुष्करा' कर्तुमशक्या 'भणिता' तीर्थकर–गणधरैः। अयं भावः। यथा गृहिधर्म्मे व्यवहारशुद्धिर्दुष्करा, तथा श्रमणधर्म्मे आहारशुद्धिर्दुर्लभेति ॥ २ ॥ अथ येनानीतानि साधोः पिण्डादीनि न कल्पन्ते तद्दर्शनायाह—

**अणहीआ खलु जेणं पिंडेसण-सिज्ज-वत्थ-पाएसा। तेणाणिआणि जइणो कप्पंति न पिंडमाईणि ॥ ३ ॥**

अत्र 'पाएसण' इति स्थाने 'पाएस' इति, आर्षत्वात्, ततो 'येन' साधुना 'खलु' निश्चितं 'पिण्डैषणा १, शय्यैषणा २, वस्त्रैषणा ५, पात्रैषणा ६, ' आचाराङ्ग–द्वितीयश्रुतस्कन्धे प्रथम–द्वितीय–पञ्चम–षष्ठाध्ययनरूपा, 'अनधीता' न सम्यगभ्यस्ता, 'तेनामीतानि' सूत्रे ह्रस्वः पानीयादित्वात्। 'यतिना' यतेर्वा. साधोर्न 'कल्पन्ते'। 'पिण्डमाईणि' इति माका-

रस्य प्राकृतप्रभवत्वात्। 'पिण्डादीनि' आहारादीनि, भोक्तुमिति शेषः ॥ ३ ॥ अथाकल्पिकं पिण्डादिकं नेच्छेदित्याह—

**पिंडं सिज्जं च वत्थं च चउत्थं पायमेव य । अकप्पिअं न इच्छिज्जा पडिगाहिज्ज कप्पिअं ॥ ४ ॥**

'पिण्डं' अशनाद्याहारं १ । 'शय्यां च' उपाश्रयं २ । 'वस्त्रं च' वसनं ३ । 'चतुर्थं पात्रमेव च' ४ । 'अकल्पिकं' आधाकर्मादिदोषदुष्टं, बालत्वे श्रीवज्रस्वामीव 'न इच्छेत्' साधुरिति शेषः । किन्तु 'प्रतिगृह्णीयात्', 'कल्पिकं' निर्दोषम् । श्रीमहावीरादिष्ट–रेवतीश्राविका–गृहस्थितनिर्दोषौषधग्राहि–सिंहानगारवदिति । तत्र श्रीवज्रस्वामिसम्बन्धलेशो यथा—अन्यदा वज्रगुरवः प्रत्यवन्तीं प्रतस्थिरे । धाराधरोऽखण्डधारमन्तराले ववर्ष च ॥ १ ॥ यक्षमण्डपिकाप्राये स्थाने क्वाप्यस्रवज्जले । आचार्या वज्रगुरवस्ते तस्थुः सपरिच्छदाः ॥ २ ॥ प्राग्जन्मसुहृदो वज्रस्यामरा जृम्भकास्तदा । सत्त्वं परीक्षितुं तत्र वणिग्मूर्त्तीर्विचक्रिरे ॥ ३ ॥ उत्पर्याणितवद्धाश्ववृषभं चरदौष्ट्रकम् । मण्डलीकृतशकटं संनिवेशितकेणिकम् ॥ ४ ॥ जयनच्छन्नविक्रेयवस्तुगोणीपरम्पराम् । राद्धान्नोत्तीर्णपात्राकं भुञ्जानजनसंकुलम् ॥ ५ ॥ तृणप्रावरणच्छन्नसंचरत्कर्मकृज्जनम् । आवासं ते दिविषदो वणिग्रूपा विचक्रिरे ॥ ६ ॥ त्रिभिर्विशेषकम् ॥ वारिदे विरतप्राये तानाचार्यान् दिवौकसः । न्यमन्त्रयन्त भिक्षार्थं ह्रस्ववन्दनपूर्वकम् ॥ ७ ॥ निवृत्तामिव विज्ञाय वृष्टिमाचार्यपुङ्गवाः । वज्रमादिदिशुर्भिक्षानयने विनयोज्ज्वलम् ॥ ८ ॥ वज्रोप्यावश्यकीं कृत्वा द्वितीयमुनिना सह । विहर्त्तुं निरगादीर्याशुद्धिमध्वनि चिन्तयन् ॥ ९ ॥ तुषारान् पततो दृष्ट्वा त्रसरेणुनिभानपि । वज्रो निववृते च द्राग् भीतो ऽप्कायविराधनात् ॥१०॥ तुषारमात्रमप्यम्बुवृष्टिं देवा निरुध्य ताम् । आह्वामत पुनर्वज्रं वृष्टिर्नास्तीति भाषिणः ॥११॥ वज्रस्तदुपरोधेन वृष्ट्यभावेन चाचलत् । जगाम च तदावासं

भक्तपानादिसुन्दरम् ॥ १२ ॥ ससंभ्रमेषु देवेषु तेषु भक्तादिदित्सया । द्रव्य-क्षेत्र-काल-भावैरुपयोगमदत्त सः ॥ १३ ॥ कूष्माण्डकादिकं द्रव्यं कुतो राद्धमसम्भवम् । इदं चोज्जयनीक्षेत्रं स्वभावादपि कर्कशम् ॥ १४ ॥ प्रावृषि प्रथमायां च द्रव्यस्यास्य कथापि का ? । दातारोऽप्यनिमेषाक्षाऽभूस्पृशश्चरणा इति ॥ १५ ॥ नियतं देवपिण्डोऽयं साधूनां नहि कल्पते । तस्मादनात्तपिण्डोऽपि व्रजामि गुरुसंनिधौ ॥१६॥ त्रिभिर्विशेषकम् । इत्यनादाय तद्-भिक्षां वज्रस्वामी न्यवर्तत । प्रत्यक्षीभूय तैश्चाथो जगदे विस्मितैः सुरैः॥१७॥ वयं वि(हि)जृम्भका देवाः प्राग्जन्मसुहृदस्तव । त्वां द्रष्टुमागमामेह (?) त्वमद्यापि हि नः सुहृत् ॥ १८ ॥ अथ वैक्रियलब्ध्याख्यां विद्यां तोषभृतोऽमराः । निष्क्रयं कूष्ममायाया इव वज्राय ते ददुः ॥ १९ ॥ ज्येष्ठे मास्यन्यदा वज्रो विहरंश्च बहिर्भुवि । नैगमीभूय तैर्देवैर्घृतपूरैर्न्यमन्त्र्यत ॥ २० ॥ वज्रो गत्वा तदावासे देवपिण्डं च पूर्ववत् । ज्ञात्वा न खलु जग्राहोपयोगविदुरो हि सः ॥ २१ ॥ वज्राय पूर्वसुहृदे विद्यामाकाशगामिनीम् । प्रददुस्तोषभाजस्ते स्वं स्वं स्थानमथो ययुः ॥ २२ ॥ इति ॥ सिंहानगारवृत्तान्तस्तु श्रीभगवतीसूत्रतो ऽवमेय इति ॥ ४ ॥

अथ पिण्डविशुद्धिमकुर्वन्नचारित्री स्यादित्याह—

**पिंडं असोहयंतो अचरित्ती इत्थ संसओ नत्थि । चारित्तंमि असंते सव्वा दिक्खा निरत्थिआ ॥ ५ ॥**

'पिण्डं' अशनाद्याहारं, 'अशोधयन्' अशुद्धं गृह्णन् भुञ्जानश्च 'अचरित्री' अचारित्री भवतीति शेषः । 'अत्रार्थे' 'संशयः' सन्देहो नास्ति । 'चारित्रे चासति सर्वा दीक्षा निरर्थिका' निष्फलेति । इदं केवलोत्सर्गापेक्षया द्रष्टव्यम् । उत्सर्गापवादद्वयापेक्षया त्वेवमुक्तमागमे-"संथरणंमि असुद्धं दुण्हवि गिण्हंत दिंतयाणऽहिअं । आउरदिट्ठंतेणं तं चेव हियं असंथरणे त्ति"५

अथैवंविधं शय्यादिविषयं गाथात्रयमाह—

**सिज्जं असोहयंतो अचरित्ती इत्थ संसओ नत्थि। चारित्तंमि असंते सव्वा दिक्खा निरत्थिआ ॥ ६ ॥**

**वत्थं असोहयंतो अचरित्ती इत्थ संसओ नत्थि। चारित्तंमि असंते सव्वा दिक्खा निरत्थिआ ॥ ७ ॥**

**पत्तं असोहयंतो अचरित्ती इत्थ संसओ नत्थि। चारित्तंमि असंते सव्वा दिक्खा निरत्थिआ ॥ ८ ॥**

'शय्यां' उपाश्रयमशोधयन्, आधाकर्म्मादिदोषदुष्टं गृह्णन् व्यापारयंश्चेत्यर्थः। शेष व्याख्यानमुत्सर्गापवादभावना च पूर्ववदिति ॥ ६ ॥ 'वस्त्रं' वसनं कार्पास-कम्बलादिरूपम्। शेषं पूर्ववदिति ॥ ७ ॥ 'पात्रं' पतद्-ग्रहादि तुम्बक-दारु-मृन्मयरूपम्। शेषं पूर्ववदिति ॥ ८ ॥ अथ भिक्षाचर्यायां यः खिद्यते स मन्दसंवेग इत्याह—

**समणत्तणस्स सारा भिक्खायरिआ जिणेहिं पन्नत्ता। इत्थ परितप्पमाणं तं जाणसु मंदसंवेगम् ॥ ९ ॥**

इह क्वचिद् "द्वितीयादेः" इति प्राकृतसूत्रेण सप्तमीस्थाने षष्ठीविधानात् 'समणत्तणस्स' इति 'श्रमणत्वे' श्रामण्ये 'सारा' संयमनिर्वाहनिमित्तनिरवद्याहारलाभहेतुत्वेन प्रधानका, 'भिक्षाचर्या' भिक्षायै भक्तादेः परेभ्यो याचनाय 'चर्या' भ्रमणं; भिक्षाचर्या, 'जिनैः' तीर्थकरैः 'प्रज्ञप्ता' कथिता। अतः 'अत्र' भिक्षाचर्यायां 'परितप्यमानं' वैयावृत्यकरे पितरि कालगतेऽर्हन्नकमुनिमिव 'तं' श्रमणं 'जानीहि मन्दसंवेगं' इति ॥ ९ ॥ अथ यो भिक्षाचर्योद्यतः स तीव्रसंवेग इत्याह—

**नाण-चरणस्स मूलं भिक्खायरिया जिणेहिं पन्नत्ता। इत्थ य उज्जममाणं तं जाणसु तिव्वसंवेगम् ॥ १० ॥**

ज्ञानं च चरणं चेति समाहाराद्वन्द्वादेकत्वे 'ज्ञान-चरणं,' तस्य 'मूलं' कारणं 'भिक्षाचर्या जिनैः प्रज्ञप्ता'। तल्लभ्यनिरवद्याहारावष्टम्भेनैव ज्ञान-चरणयोः साधुभिर्निर्वाह्यमाणत्वात्। अतो 'ऽत्र च' भिक्षाचर्यायामुद्यच्छन्तं, 'उद्यमं कुर्वाणं, वक्ष्यमाणं धर्मरुच्यनगारमिव, नन्दिषेणश्रमणमिव वा, 'तं' साधुं 'जानीहि तीव्रसंवेगं' इति ॥ १० ॥

अथैषणाशुद्ध्युद्यमे कथानके सूचयन्नाह—

**धम्मरुई अणगारो सो नंदउ नंदिसेणसमणोऽवि। जे एसणाइ समिआ पसंसिआ सक्कपमुहेहिं ॥ ११ ॥**

'स धर्मरुचिरनगारो नन्दतु' समृद्धिं प्राप्नोतु। तथा 'स नन्दिषेणश्रमणोऽपि नन्दतु'। 'यौ एषणायां समितौ' सम्यक्प्रवृत्तौ 'शक्रप्रमुखैः' इन्द्रादिभिः 'प्रशंसितौ'। तत्र धर्मरुचेरनगारस्य कथानकमोघनिर्युक्तिगतम्। यथा—

धर्मरुचिरनगारो ज्येष्ठमासे आतापयत्यष्टमं च करोति। स च पारणके स्वग्रामे न हिण्डते। अन्यं ग्रामं व्रजति। तं दृष्ट्वैका देवता कुङ्कणरूपे विकुर्वति। भक्त्या आरनालभृताऽलाबुः क्षितिरुहाधस्तिष्ठति। ततः समीपागतं साधुं प्रेक्ष्यैको वक्ति–इदं काञ्जिकं पिब। स उवाचालमनेन। ततः परो वक्ति–क इदं वहति, साधोर्दीयते। पर आह–देहि वा, त्यज्य वा। ततस्तेन साधुर्निमन्त्रितो भणितश्च यूयमिदं गृह्णीत। ततः स भगवान् द्रव्यतः क्षेत्रतः कालतो भावतश्च गवेषयति। द्रव्यत इदं काञ्जिकं शीतलं सुरभि च, क्षेत्रतोऽस्यामटव्यां को दत्ते? कालतो ज्येष्ठमासोऽत्रापि दुःखं दातुं, भावतो हृष्ट-तुष्टचित्तो निमन्त्रयति। ततोऽत्र कारणेन भाव्यं तदोपयुज्यते, न तस्य पादौ भूमावलगन्तौ, नयन अनिमेषे च दृष्ट्वा, देव इति ज्ञात्वा, वर्जितमिति ॥

अथ वसुदेव-पूर्वभव-नन्दिषेणश्रमणकथानकमावश्यक-लघुवृत्त्युक्तम् । यथा—

मगधेषु नन्दिग्रामे गोतमः कणवृत्तिकः । तत्पत्नी धारिणी तस्या गर्भे षाण्मासिके ऽपि सः ॥ १ ॥ मृतो माताऽपि जाते च मातुलेन स वर्द्धितः । नन्दिषेणाभिधस्तस्य गृहे कर्म चकार सः ॥ २ ॥ प्रतारितः स लोकेन मातुलेन स्थिरीकृतः । मा श्रौषीर्लोकवाक्यानि तिस्रः सन्ति सुता मम ॥ ३ ॥ दास्यामि तव नैपुस्ताः कुरूपमिति तं पुरम् । निर्विण्णः सोऽथ निर्गत्य मुमूर्षुर्वीक्ष्य कुत्रचित् ॥ ४ ॥ नन्दिवर्द्धनसूरीणां संनिधौ व्रतमग्रहीत् । स षष्ठक्षपकः ख्यातयशःकीर्तिरभून्मुनिः ॥ ५ ॥ वैयावृत्त्येऽभिगृही च बाल-ग्लानादिसाधुषु । शक्रोऽशंसत् तमेको ऽथाश्रद्दधानः सुरोऽभ्यगात् ॥ ६ ॥ चक्रे श्रमणरूपे द्वे बहिरेकोऽतिसारकी । स्थितोऽगाद्परो मध्ये साधूनान्ते ब्रवीदिदम् ॥ ७ ॥ ग्लानर्षिः पतितोऽस्त्येको वैयावृत्त्यकरो ऽस्ति चेत् । स उत्तिष्ठतु तच्छ्रुत्वा षष्ठपारणकेऽपि हि ॥ ८ ॥ सहसा नन्दिषेणर्षिर्मुक्त्वा कवलमुत्थितः । ऊचेऽर्थः केन ? सोऽवादीज्जलेनागात् स तत्कृते ॥ ९ ॥ अनेषणं सुरश्चक्रेऽनेषणीयं न सोऽगृहीत् । भ्रान्त्वा शुद्धिः स शुद्धाम्भो गृहीत्वागात्तदन्तिके ॥ १० ॥ आचुक्रोश स तं ग्लानो मुनिं निष्ठुरया गिरा । त्वं वैयावृत्त्यकारीति मुने ! नाम्नैव वर्त्तसे ॥ ११ ॥ स तद्गिरं सुधासारां मन्यमानः क्षमाधृतिः । अशूकः क्षालयामास तं विष्ठालिप्तमप्यृषिम् ॥ १२ ॥ अथाहोत्तिष्ठ यामोऽन्तर्नीरुजं त्वां करोमि यत् । ग्लानोऽवग् न क्षमः सो ऽवक् पृष्ठमारोह तर्हि मे ॥ १३ ॥ पृष्ठमारोप्य तं गच्छंस्तेन देवेन मायया । नन्दिषेणः पुरीषेण लिप्तोऽतीव विगन्धिना॥१४॥आकुश्च(?)कथं वेगभङ्गान्मे मृतमारणम् । करोषि भोक्तुकामस्त्वं व्रजन्नध्वनि रंहसा ॥ १५ ॥ मुनिश्चन्दनलेपं तं मन्वानोऽमेध्य लेपनम् । आक्रोशं चाशिषं दध्यौ

कथं स्यादस्य निर्वृतिः ॥ १६ ॥ देवस्तुष्टो ऽथ संहृत्य मायां नत्वा च तं मुनिम् । शक्रप्रशंसां चावेद्य स्वविमानं जगाम सः ॥ १७ ॥ वसतौ मुनिरप्यगाद् गुरोरालोच्य भुक्तवान् । एषणासमितिः पाल्या सदैवं मुनिपुङ्गवैः ॥ १८ ॥ इति ॥ ११ ॥

अथ शुद्धेनैव पिण्डेन धीराः पिण्डं पोषयन्तीत्याह—

**पिंडेण अकप्पेणवि पोसिज्जइ अहह एरिसो देहो । सुद्धेणं चिअ धीरा पिंडं पिंडेण पोसंति ॥ १२ ॥**

'अकल्पेनापि' आधाकर्मादिदोषदुष्टेनापि 'पिण्डेन' आहारेण, 'अहह' इति खेदे, 'ईदृशो' ऽशुचित्व-विनश्वरत्वादिधर्म्मोपेतो 'देहः', कैश्चित् संसारानुरक्तचित्तैस्तथाविधद्रव्यलिङ्गधारिभिरिति शेषः। 'पोष्यते' पुष्टीक्रियत इति, समीक्ष्येति शेषः। 'धीरा' महात्मानो धन्यानगारादय इव 'शुद्धेनैव पिण्डेन' आहारेण 'पिण्डं' शरीरं 'पोषयन्तीति' ॥ १२ ॥

अथ यदर्थं साधुराहारमाहारयति तत् सदृष्टान्तमाह--

**जह अब्भंगणलेवा सगडक्खवणाण जुत्तिओ हुंति । इअ संजमभरवहणट्ठयाए साहुण आहारो ॥१३॥**

'यथा अभ्यङ्गनलेपौ' यथासङ्ख्येन 'शकटाक्षस्य' अनोधुरो, 'व्रणस्य' च क्षतस्य, 'युक्तितो भवतः' । एतदुक्तं भवति । यथा—अभ्यङ्गनं लोकोक्त्या "उंगण" इति प्रसिद्धं;शकटाक्षे तावन्मात्रमेव दीयते, यावता शकटमनायासेन भारमुद्वहति। न चातिबहु न चातिस्तोकम् । तथा व्रणे लेपोऽपि तावानेव दीयते, यावता पूयादिनिर्हरणं संरोहणे भवतः, न पुनरतिबहुरतिस्तोको वा इति । एवं संयम भरवहनार्थनायै तल्-प्रत्ययस्य प्राकृतशैलीप्रभवत्वेन स्वार्थिकत्वात् । संयमभरवहनप्रयोजनाय । अथवा संयम एव भरः संयमभरस्तस्य वहनं पालनं तदेवार्थः प्रयोजनं यस्याहारस्य स संयमभरवहनार्थ-

स्तस्य भावस्तत् ता; तस्यै उपलक्षणत्वात् क्षुद्-व्रण-संरोहणाय च 'साधूनामाहारो' युक्तितो भवति । नातिस्तोको नाति-बहुरिति भाव इति ॥ १३ ॥ अथ योऽशुद्धमाहारादि गृह्णाति स संसारप्रवर्द्धक इत्याह—

**जो जहव तहव लद्धं गिण्हइ आहार-उवहि-माईअं। समण-गुण-मुक्कजोगी संसारपवड्ढओ भणिओ ॥१४॥**

'यः' साधुः, 'यथा वा तथा वा लब्धं' सदोषमित्यर्थः । 'आहार-उवहि-माईअंति' मकारस्य प्राकृतप्रभवत्वात् । आ-हारोपध्यादिकं गृह्णाति' । स 'श्रमण-गुण-मुक्तयोगी' यतिगुणरहितव्यापारवान्, षष्ठाष्टमादिषण्मासान्ततपः-कारि-स-चित्तजलादिपरिभोगि-श्रीमहानिशीथोक्त-सुसढ इव 'संसारप्रवर्द्धको भणितः' । तीर्थकरादिभिरिति ॥ १४ ॥

अथ निरवद्याहारिणां विशेषगुणमाह—

**निरवज्जाहारेणं साहूणं निच्चमेव उववासो । उत्तरगुणवुड्ढिकए तहवि उववासमिच्छंति ॥ १५ ॥**

'निरवद्याहारेण' निर्दोषाहारेणाभ्यवह्रियमाणेनापि, 'साधूनां नित्यमेवोपवासः' स्यात्। अयं भावः—यथा ह्युपवासिनां त्रिकरणशुद्धानामाहारोत्थाः पूर्वोत्तरे दोषा न लगन्ति, तथा निरवद्याहारकारिणामपि त्रिकरणशुद्धानां सर्वथाऽऽहारोत्था दोषा न लगन्तीति । तेषामुपवासिनामिवाहारदोषरहितत्वेन सदैवोपवास इवोपवास इति । यत उच्यतेऽन्यत्रापि—"अकृताकारिणं शुद्धमाहारं धर्म्महेतवे । अश्नतोऽपि मुनेर्नित्योपवासफलमुच्यते ॥ १ ॥" अत्र च "विरयाविरयसहोयर उदगस्स भरेण भरिअ सरिआए । भणिआइ साविआए दिन्नो मग्गुत्ति भाव वसा ॥" इति भाविनीकुलकसूचितं भ्रातृ-द्वयकथानकं भाव्यम् । निरवज्जाहाराणमिति पाठे तु-निरवद्य आहारो येषां ते निरवद्याहारास्तेषामिति साधूनामित्यस्य

भवति । 'तद्वैकेनानेकैर्वा' बहुभिर्भोक्तव्यम् । 'वर्जयित्वा धूमाङ्गारं' रागद्वेषौ वर्जयित्वेत्यर्थः ॥ २१ ॥

अथ भोक्तुकामः साधुः कथमात्मानमनुशास्त इत्याह—

**बायालीसेसणसंकडंमि गहणंमि जीव नहु च्छलिओ । इण्हिं जह न च्छलिज्जसि भुंजंता रागदोसेहिं ॥२२॥**

इह एषणाग्रहणेनैषणागता दोषा अभिधीयन्ते । ततोऽयमर्थः द्विचत्वारिंशत्संख्या ये एषणादोषा गवेषणाग्रहणैषणा-दोषास्तैः 'सङ्कटे' विषमे 'ग्रहणे' भक्तपानादीनामादाने हे 'जीव ! त्वं नैव च्छलितः' । तत 'इदानीं' संप्रति 'भुञ्जानो राग-द्वेषाभ्यां यथा न छल्यसे' तथा कर्तव्यमिति शेषः इति ॥ २२ ॥ अथ साधोर्भोजनगृद्धित्यागोपदेशमाह—

**जइ इच्छसि भो साहु बारसविहतवफलं महाविउलं । तो मण–वय–काएहिं भोअणगिद्धिं विवज्जेसु ॥२३॥**

'भोः साधो ! यदि त्वं महाविपुलं' अतिविस्तीर्ण्णं 'द्वादशविधतपःफलमिच्छसि, ततो मनो–वचः–कायैर्भोजनगृद्धिं' आहारलाम्पट्यं 'विवर्जय' सर्वथा त्यज । भोजनगृद्ध्या तपःफलस्य हीनतापत्तेर्यत उक्तं मरणसमाधिप्रकीर्ण्णके—"कलं कलंपिवरं आहारो परिमिओ अ पंतो अ । नवखवणापारणए बहु बहुतरो बहुविहो अ ॥ १ ॥" इति ॥ २३ ॥

अथ वदनप्रक्षेपणशुद्धिमाह—

**असुरसुरं अचवचवं अहुअमविलंबिअं च आहारं । रागद्दोसविमुक्को जिमिज्ज सायं अगिण्हं तो ॥ २४ ॥**



'असुरसुरं' इति तक्रान्वितघृष्टिभोजने; रब्बादिभोजने वा सरड–सरडेति शब्दवर्जितं, 'अचवचवं' इति वटक–रोट्ट-कादिचर्वणे चव–चवेति शब्दवर्जितं, 'अद्रुतं' अत्वरितं, 'अविलम्बितं च' अमन्थरं, यथा स्यात्तथा 'रागद्वेषविमुक्तः स्वाद-

धारं 'कुर्यात्' । तथा 'द्वौ भागौ द्रवस्य' पानीयस्य षष्ठं तु भागं 'वायुप्रविचारणार्थमूनं कुर्यात्' ॥ १८ ॥

इह कालापेक्षया तथाहारस्य प्रमाणं भवति । कालश्च त्रिधा तथाचाह—

**सीओ उसिणो साहारणो य कालो तिहा मुणेअव्वो । साहारणंमि काले तत्थाहारे इमा मत्ता ॥१९॥**

'त्रिधाकालो ज्ञातव्यः' तद् यथा—'शीत उष्णः साधारणश्च' । तत्र तेषु कालेषु मध्ये 'साधारणे काले आहारे' आहारविषया इयमनन्तरोक्ता 'मात्रा' प्रमाणं ॥ १९ ॥

**सीए दवस्स एगो भत्ते चत्तारि अह व दो पाणे । उसिणे दवस्स दोन्नि उ तिन्नि व सेसा उ भत्तस्स ॥२०॥**

'शीते' अतिशयेन शीतकाले 'द्रवस्य' पानीयस्य 'एको' भागः कल्पनीयः । 'चत्वारो भक्ते' भक्तस्य मध्यमे तु शीतकाले द्वौ भागौ पानीयस्य कल्पनीयौ । त्रयस्तु भागा भक्तस्य 'वा' शब्दो मध्यमशीतलसंसूचनार्थः । तथा 'उष्णे' मध्यमोष्णकाले द्वौ भागौ 'द्रवस्य' पानीयस्य कल्पनीयौ 'शेषास्तु त्रयो' भागा 'भक्तस्य' अत्युष्णे च काले त्रयो भागा द्रवस्य, शेषौ द्वौ भागौ भक्तस्य । 'वा' शब्दोऽत्रात्युष्णकालसूचनार्थः । सर्वत्र च षष्ठो भागोवायुप्रविचारणार्थमुत्कलो मोक्तव्य इति ॥ २० ॥ अथ भोजनं कुर्वतां साधूनां पात्रादन्नग्रहणविधिमाह—

**कडपयरच्छेएणं भोत्तवं अहव सीहखइएणं । एगेण अणेगेहिव वज्जित्ता धूम इंगालं ॥ २१ ॥**

'कटच्छेदेन भोक्तव्यं' । यथा किलिञ्जस्य खण्डकं छित्त्वा, अपनीयते । एवमसावपि भुङ्क्ते । तथा 'प्रतर'—च्छेदेन वा-भोक्तव्यम् । तरिकाच्छेदेनेत्यर्थः। 'अथवा सिंहखादितेन' सिंहो हि किल एकदेशादारभ्य तावद्भुङ्क्ते यावत्सर्वं भोजनं निष्ठितं

कवला ॥ १ ॥ इत्तो किणाइ हीणं अद्धं अद्धद्धगं च आहारं । साहुस्स विंति धीरा जाया मायं च ओमं च ॥२॥ पगामं च निगामं च पणीअं भत्तपाणमाहारे । अइबहुअ अइबहुसो पमाणदोसो मुणेअब्वो ॥ ३ ॥" यः प्रकामं निकामं प्रणीतं वा भक्तपानमाहरयति । तथा अतिबहुकमतिबहुशश्च तस्य प्रमाणदोषो ज्ञातव्यः । प्रकामादिस्वरूपमाह—"बत्तीसाइ परेणं पगामं १ निच्चं तमेव उ निकामं २ । जं पुण गलंतनेहं पणीअमिति तं बुविंति ॥ ४ ॥ " द्वात्रिंशदादिकवलेभ्यः परेण परतो भुञ्जानस्य यद्भोजनं तत्प्रकामभोजनम् । तमेव प्रमाणातीतमाहारं प्रतिदिवसमश्नाता निकामभोजनम् । शेषं सुगमम् । "अइबहुअं ४ अइबहुसो ५ अइप्पमाणे ६ भोजणं भुत्तं । हादिज्जव वामिज्जमारिज्जवतं अजीरंतं ॥ ५ ॥" अतिबह्वादिस्वरूपमाह—"बहुआइमइबहुअं अइबहुसो तिन्नि तिन्नि च परेणं । तं चिअ अइप्पमाणं भुंजइ जं वा अतिप्पंतो ॥६॥" बहुकातीतमतिशयेन बहु, अतिशयेन निजप्रमाणाभ्यधिकमित्यर्थः । ४ । तथा दिवसमध्ये यस्त्रीन् वारान् भुङ्क्ते । यद्वा त्रिभ्यो वारेभ्यः परतस्तद्भोजनमतिबहुशः । ५ । तदेव वारत्रयातीतमिति प्रमाणमुच्यते । भुङ्क्ते यद्वा अतृप्यन्निति ॥१७॥

अथ "हिआहारा मिआहारा अप्पाहाराय जेनरा । न ते विज्जा विगिच्छंति *अप्पाणं ते विगिच्छगा ॥" इति वचनाद् गाथात्रयेण मिताहारं दर्शयन्नाह—

**अद्धमसणस्स सव्वंजणस्स कुज्जा दवस्स दो भाए । वाउपविआरणट्ठा च्छब्भागं ऊणगं कुज्जा ॥ १८ ॥**

इह किल सर्वमुदरं षड्भिर्भागैर्विभज्यते । तत्र च 'अर्द्धं' भागत्रयरूपं 'अशनस्य सव्यञ्जनस्य' तक्र-शाकादिसहितस्या-

* आत्मनैवात्मनस्ते चिकित्सकाः ॥

विशेषणम् । यद्येवं ततः कथं साधूनामुपवासकरणमित्यत आह—'तथापि चोत्तरगुणवृद्धिकृते' उत्तरगुणानां विवर्द्धनाय, 'उपवासमिच्छन्ति' मुनय इति शेषः ॥ १५ ॥ अथाऽशुद्धाहारस्य त्याग-भोगयोर्गुण-दोषौ दर्शयन्नाह—

**गहिअमसुद्धं केणवि कारणजाएण भोअणावसरे । तं चयमाणो सुद्धो भुंजंतो लिप्पए नियमा ॥१६॥**

'केनापि' लोभाज्ञानादिरूपेण 'कारणजातेनाशुद्धं' सदोषमशनादि 'गृहीतं' । पश्चात् 'भोजनावसरे' 'तद्' अशुद्धं 'त्यजन्' परिष्ठापयन् परलब्धिलब्धाहारनिषेधाभिग्रहिढण्ढणर्षिरिव 'शुद्धो' निर्दोषः स्यात् । 'भुञ्जानः' तथाविधहीयमान-चारित्रपरिणाम इव 'नियमात्' निश्चयेन 'लिप्यते' पापेनेति शेष इति ॥१६॥ अथ साधोराहारप्रमाणं किञ्चिज्जेमनविधिं चाह—

**अविकिअवयणपमाणे कवले बत्तीस साहुमाहारं । भणिऊण नमोक्कारं पयासदेसट्ठिओ जिमइ ॥१७॥**

अत्र गाथायां विभक्तिलोपादि प्राकृतप्रभवम् । ततः 'अविकृत-वदनप्रमाणान्' अनतिविकासितमुखप्रवेशयोग्यान् । 'द्वात्रिंशतं कवलान् साधुराहारं प्रकाशदेशस्थितः' सोद्योतस्थानेऽवस्थितो 'नमस्कारं भणित्वा जेमति' । अत्र प्रस्तावा-द्भाजनेऽपि प्रकाशमुखे जेमतीतिज्ञेयम् । यत उक्तमोघनिर्युक्तौ—"मक्खिअ कंटऽट्ठाईण जाणणट्ठा पगास भुंजणया । अट्ठिअ लग्गणदोसा वग्गुलिदोसा जहा एवं ॥ १ ॥ जे चेव अंधयारे दोसा ते चेव संकडमुहंमि । परिसाडीबहुलेवाडणं च तम्हा पगासमुहे ॥२॥" गाथाद्वयं सुगमम् । नवरं प्रथमगाथाया उत्तरार्द्धे गलादौ कण्टकास्थिगलनदोषास्तथा मक्षिका-भक्षणजनितवल्गुलिव्याधिदोषास्त्यक्ता भवन्तीति ज्ञेयम् । तथा द्वात्रिंशत्कवलेभ्योऽधिकस्तु आहारः प्रमाणातिक्रान्तः स्यात् । यत उक्तं पिण्डनिर्युक्तौ—"बत्तीसं किरकवला आहारो कुच्छिपूरओ होई । पुरिसस्स महिलिआए अट्ठावीसं भवे

मगृह्णन्' साधुरिति शेषः । 'आहारं जेमेदिति' ॥ २४ ॥ अथ कथं स्वादमगृह्णन् जेमतीत्याह—

**नो दाहिणाओ वामं न वामहणुआउ दाहिणं नेइ। पन्नगमिव आहारं जावणमित्तं जई जिमइ ॥ २५ ॥**

नो दक्षिणाद् हनुकाद् वामं हनुकं नयति । न वामहनुकाद्दक्षिणं हनुकं नयत्याहारम् । उक्तं चाचाराङ्गप्रथमश्रुतस्कन्धगतविमोक्षाध्ययनषष्ठोद्देशकेऽपि—"से भिक्खु वा भिक्खुणी वा असणं वा पाणं वा खाइमं वा साइमं वा आहारेमाणे नो वामाओ हणुआओ दाहिणं हणुअं संचारिज्जा आसाएमाणे दाहिणाओ वा हणुआओ वामं हणुअं नो संचारिज्जा आसाएमाणे" इति । तर्हि किं करोतीत्याह—'यापनामात्रं' शरीरसन्धारणासमर्थं 'आहारं पन्नगमिव' इति विभक्तिव्यत्ययस्य प्राकृतप्रभवत्वात् । 'पन्नग इव' सर्प्प इव 'यतिर्जेमति' । पन्नगो हि भक्ष्यं ग्रसित्वा न चर्वणमाचरति ग्रसने एव गिलत्येव । तथा साधुरपि जिनकल्पिकादिर्भुञ्जानो न चर्वणं करोतीत्यर्थः । अथवा यथा पन्नगः पार्श्वासंस्पर्शेनात्मानं बिले प्रवेशयति, तथा साधुरप्याहारं मुखेनासंस्पर्शन्निव रागादिरहितत्वाज्जेमति ॥ २५ ॥ अथ रसत्यागिश्रमणलक्षणमाह—

**सरसरसेहिं न तूसइ विरसविगंधेहिं जाइ न पओसं। सो रसचाइसमणो सुमणो सिद्धिं समल्लिअइ ॥२६॥**

'सरसरसेहिं' इति "रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे देहधातौ तिक्तादौ पारदेऽपि च ॥ १ ॥' इत्यनेकार्थसंग्रहवचनात्, सह रसेन स्वादेन वर्तन्ते ये, ते, सरसाः । एवंविधा रसा मधुरादयो येषु, ते, सरसरसाः । सिंहकेसरमोदक–घृतपूर–परमान्न–प्रभृतय आहारास्तैर्यो न तुष्यति न हर्षमुपयाति । तथा विरसबन्धैर्विगतरसविरुद्धगन्धैरतिपुराणौदनादिभिराहारैर्यो न प्रद्वेषं याति । 'स रसत्यागी श्रमणः सुमना सिद्धिं' मुक्तिं 'समालीयते' समाश्रयतीत्यर्थ

इति ॥ २६ ॥ अथ जेमन्तः साधवः परिसाटिं न पातयन्तीत्याह—

**तह परिसाडिविमुक्कं जिमंति जइणो जिइंदिया निच्चं। जह जिमिआजिमिआणं ठाणविसेसो न लक्खिज्जा**

'तथा परिशाटिविमुक्तं' उदनमुद्गादिसित्थु १ मोदकादिकणिका २ मण्डकादिलग्नलोट्टचूर्ण ३ शाकवघार ४ घृतादिबिन्दु ५-तक्रादिच्छटानां ६ भूमावपातनेन 'जितेन्द्रिया यतयो जेमन्ति नित्यं' 'यथा जिमिताजिमितानां' यतीनां 'स्थान-विशेषः' स्थानकभेदो 'न लक्ष्येत' न ज्ञायेत श्राद्धादिभिरिति॥२७॥ सांप्रतं संयतोऽनिष्टमप्याहारमिष्टमिव भुञ्जीतेत्याह—

**तित्तगं च कडुअं च कसायं अंबिलं च महुरं लवणं वा।एअ लद्ध मन्नट्ठ पउत्तं महुघयं व भुंजिज्ज संजए ॥२८**

'तिक्तकं वा' एलुकचालुकादि,'कटुकं वा' आर्द्रकतीमनादि,'कषायं' वल्लादि,'आम्लं वा' तक्रारनालादि,'मधुरं' क्षीरद-ध्यादि,'लवणं वा' प्रकृतिक्षारं तथाविधशाकादि, लवणोत्कण्टं वाऽन्यदेतत् तिक्तकादि लब्धागमोक्तेन विधिना प्राप्तम्। अ-न्यार्थमक्षोपाङ्गन्यायेन परमार्थतो मोक्षार्थं प्रयुक्तं तत्साधकमिति कृत्वा 'मधुघृतमिव भुञ्जीत संयतो' न वर्णाद्यर्थम्॥२८॥किञ्च—

**अरसं विरसं वावि सूइअं वा असूइअं । उल्लं वा जइ वा सुक्कं मंथुकुम्मासभोअणं ॥ २९ ॥**

'अरसं' असंप्राप्तरसं हिङ्ग्वादिभिरसंस्कृतमित्यर्थः। 'विरसं वापि' विगतरसमतिपुराणौदनादि, 'सूचितं वा' व्यञ्जनादि-युक्तम् । 'असूचितं वा' तद्रहितम् । 'आर्द्रं वा' प्रचुरव्यञ्जनम् । 'यदि वा शुष्कं' स्तोकव्यञ्जनम् । किं तदित्याह—'मन्थु-कुल्माषभोजनम्' मन्थु बदरचूर्णादि, कुल्माषाः सिद्धमाषाः ॥ २९ ॥ एतद्भोजनं किमित्याह—

**उप्पन्नं नाहीलिज्जा अप्पं वा बहुफासुअं । मुहालद्धं मुहाजीवी भुंजिज्जा दोस वज्जिअं ॥ ३० ॥**

'उत्पन्नं' विधिना प्राप्तं 'नातिहीलयेत्' सर्वथा न निन्देत् । 'अल्पं' एतन्न देहपूरकमिति किमनेन 'बहु वा' आसारप्रायमिति । 'वा' शब्दस्य व्यवहितः संबन्धः । किंभूतं तदित्याह—'प्रासुकं' प्रगतासु निर्जीवमित्यर्थः । नातिहीलयेदिति । किन्त्वेवं भावयेद् यदेव इह लोका ममानुपकारिणः प्रयच्छन्ति तदेव शोभनमिति । एवं 'मुधालब्धं' मन्त्रवादादि विना प्राप्तं, 'मुधाजीवी' सर्वथा अविदानजीवी, जात्याद्यनाजीवको वा, 'भुञ्जीत दोषवर्जितं' संयोजनादिरहितमित्यर्थः ॥३०॥

एतद्दुरापमित्याह—

**दुल्लहाओ मुहादाई मुहाजीवीवि दुल्लहा । मुहादाई मुहाजीवी दोवि गच्छंति सुगइं तिबेमि ॥ ३१ ॥**

**॥ इति 'अन्नायउंछ' इति कुलकं समाप्तं ॥**

दुर्लभा मुधादातारस्तथाविधभागवतवत् । मुधाजीविनोऽपि दुर्लभास्तथा विधचेल्लकवत् । अमीषां फलमाह—'मुधादातारो मुधाजीविनश्च द्वावप्येतौ गच्छतः सुगतिं' सिद्धिगतिम् । कदाचिदनन्तरमेव, कदाचिद्देवलोकसुमानुषप्रत्यागमनपरम्परया । इति ब्रवीमि न स्वमत्या किन्तु तीर्थकृदुपदेशेन । तत्र भागवतोदाहरणं यथा—

"एगो परिव्वायगो सो एगं भागवतं उवट्ठिओ अहं तव गिहि वरिसारत्तं करेमि मम उदंतं वहाहि तेण भणिओ जइ मम उदंतं ण वहसि एवं होउत्ति, तो सो भागवओ सेज्ज-भत्त-पाणाइणा उदंतं वहइ, अण्णया य तस्स घोडओ चोरेहिं हिओ अतिप्पभायंति काऊणं जालीए बद्धो सो अ परिव्वायगो तलाए ण्हायओ गओ तेण सो घोडओ दिट्ठो आगंतुं भणति मम पाणियतडे पुत्ती विस्सरिआ गोहो विसज्जिओ तेण घोडओ दिट्ठो आगंतुं कहिअं तेण भागवएण णायं जहा परिव्वा-

यमेण कहिअं तेण परिवायगो भण्णइ जाहि नाहं तव णिविट्ठं उदंतं वहामि णिविट्ठं अप्पफलं भवइ एरिसो मुहादाइ ॥

अथ मुधाजीव्युदाहरणं यथा—

एगोराया धम्मं परिक्खइ को धम्मो जो अणिविट्ठं भुंजइ तो तं परिक्खामित्ति काऊणं मणूसा संदिट्ठा राया भोअए देइ, तत्थ बहवे कप्पडिआदयो आगया पुच्छिज्जंति तुब्भे केण भुंजइ एगो भणति अहं मुहेण, अण्णो भणति अहं पाएहिं, अण्णो भणति अहं हत्थेहिं, अण्णो भणति अहं लोगाणुग्गहेण, चेलओ भणति अहं मुहियाए, रण्णा पुच्छिअं कहं चेअं एगेण भणिणं अहं कहओ अओ मुहेण, अण्णेण भणिअं अहं लेहवाहओ, अओ पाएहिं, अण्णेण भणिअं अहं लेहओ अतो इत्थेहिं, भिक्खुणा भणिओ अहं पवइओ अतो लोगाणुग्गहेण, चेलएण भणिअं अहं संजायसंसारविरागो अतो मुहियाए, ताहे सो राया एस धम्मुत्ति काऊण आयरीयसमीवं गतो पडिबुद्धो पवइओ अ एसो मुहाजीवित्ति ॥ ३१ ॥

कोविदविजयविमलगणिशिष्येणानन्दविजयसञ्ज्ञेन । एकत्रिंशत्पदार्थो लिखितः कोऽपि समयोक्तः ॥ १ ॥ सूत्रेणामा गणनया ग्रन्थमानं विनिश्चितम् । अनुष्टुभामुभे एव षण्णवत्यधिके शते ॥ २ ॥

इति 'अन्नायउंछग्रहणे' इति कुलकवृत्तिः समाप्ता ॥ पण्डितश्रीआनन्दविजयगणिकृता सुविहितयतिततिवाचनाकृते लिखिता प्रथमादर्शे बुद्धिविमलगणिना ॥ इति शुभम् ॥ श्रीः ॥

Printed by R. Y. Shedge at the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay, and Published by Vallabhadas Tribhuvandas Gandhi, Secretary, Jaina Atmananda Sabha, Bhavanagar.

श्रीआत्मानन्द–ग्रन्थरत्नमाला–अष्टादशं रत्नम् ( १८ )

# श्रीमन्महेन्द्रसूरिसङ्कलिता विचारसप्ततिका ।

( श्रीमद्विनयकुशलविरचितवृत्तिसमेता )

पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयविनेयचतुरविजयोपदिष्टसुरतनगरवास्तव्य–
श्रीओशवालज्ञातीय प्राणजीवनात्मज–धर्मचन्द्रभार्या–रूबलबाई–द्रव्यसाहाय्येन
प्रकाशयित्री–श्रीआत्मानन्दसभा–भावनगर ।

इदं पुस्तकं मुम्बय्यां **वल्लभदास–त्रिभुवनदास गांधी** सेक्रेटरी **जैन आत्मानन्दसभा भावनगर** इत्यनेन
**निर्णयसागर**मुद्रालये कोलभाटवीथ्यां २३, तमे गृहे रा. य. शेडगे द्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४३९.　　आत्मसंवत् १९.　　विक्रमसंवत् १९६९.

## ॥ प्रस्तावना ॥

इदं विचारसप्ततिकाख्यं चिरत्नप्रकरणरत्नं जिनप्रवचनपारावारपारीणैः अञ्चलगच्छापरपर्यायविधिपक्षभट्टारकसुरसूरिभिः श्रीमहेन्द्रसूरिभिः संदृब्धम्, तच्च "मर्हिंद" इति प्रान्तगाथागतपदावलोकनेन स्फुटमेव विज्ञायते। वृत्तिकारैस्तु—"महेन्द्रसिंहसूरिभि." इत्युल्लेखितम्, परमेभिरेवाचार्यैर्विनिर्मितान्यप्रकरणेषु महेन्द्रसूरिरित्येवोपलभ्यतेऽतो मयापि तथैव लिखितम्, इत्येतद्विषयस्त्वग्रे स्फुटीभविष्यति। अस्य रचयितारोऽञ्चलगच्छीयश्रीधर्मघोषसूरिविनेयावतंसतां धर्तारो गुणभूरयो महेन्द्रसूरयो विक्रमार्कीयत्रयोदशशताब्द्यामभूवन्। एतेषां धर्मघोषसूरिशिष्यत्वं सत्तासमयश्च मनःस्थिरिकरणप्रकरण—आयुःसंग्रह—परिग्रहप्रमाणगतानां क्रमेण —

"सिरिधम्मसूरिसुगुरूवएसओ सिरिमहिंदसूरीहिं। मणथिरिकरणपयरणं संकलिअं बारचूलसीए ॥ १६६ ॥"

"इय धम्मसूरिसुगुरूवएसओ सिरिमहिंदसूरीहिं। कइवयथूलपयाऊ संकलिअ बारचूलसीए ॥ ८२ "

"सिरिजयसिंहमुणीसरसरवरकमलाण धम्मसूरीण। तच्चरणमहुयराणं महिंदसूरीण पासंमि ॥ ९८ ॥ बारसतेयासीए"

इत्येतासां सपादत्रयगाथानां निर्वर्णनेन प्रकटमेवावगम्यते। एतत्प्रकरणप्रणेतृभिरुक्तव्यतिरिक्ता अन्येऽपि ग्रन्थाः कृता भवेयुः परं कति किंविषयाः ? इति नाद्यापि निर्णयपथमवतीर्णम्।

प्रकरणस्यास्य के वृत्त्याः प्रणेतार इत्येतद्विषयनिर्णयस्तु—

"श्रीतपगणगगनाङ्गणसूरिश्रीविजयदेवसूरीणाम्। विनियोगाद्वृत्तिरियं विनिर्मिता विनयकुशलेन ॥ १ ॥"

इति वृत्तिप्रान्तवर्तिना पद्येन श्रीमद्विनयकुशला इति प्रकटमेवावबुध्यते । यद्यपि वृत्तिकारकैरत्र स्वसत्तासमयः स्वगुरोरभिधेयश्च क्वापि नोपनिबद्धस्तथापि एतन्मुनिपुङ्गवविनिर्मितमण्डलप्रकरणस्य स्वोपज्ञवृत्तिप्रशस्तिगताभ्याम्—

"गुरुतमतपगणपुष्करसूर्याः श्रीविजयसेनसूरीन्द्राः । श्रीमदकब्बरनरवरविहितप्रबलप्रमोदा ये ॥ १ ॥
तेषां शिशुना वृत्तिः स्वोपज्ञा व्यरचि विनयकुशलेन । मूलत्राणपुरे करबाणरसेन्दु १६५२ मिते वर्षे ॥ २ ॥ "

इत्येताभ्यां पद्याभ्यां तपगणगगनाङ्गणगभस्तिमालिश्रीमद्विजयसेनसूरीन्द्राणामन्तेवासित्वं विक्रमार्कीयसप्तदशशताब्द्यां सत्तासमयश्च प्रकटमेव प्रतिभाति ।

प्रकरणेऽस्मिन् प्रकरणकारैः "पडिमा" इत्याद्याद्यगाथागतद्वादशविचाराणां स्वरूपं प्रकटतया प्रपञ्चितमस्ति, तत्तु स्वयमेवावभोत्स्यते विचारचतुरैरिति नास्माकमत्रातिकथनीयम् ।

अस्य संशोधनसमये पुस्तकमेकं पन्न्यासश्रीमद्वीरविजयमुनिसत्कम्, द्वितीयं पुनः पूज्यपादप्रवर्तकश्रीमत्कान्तिविजयान्तेवासिमुनिश्रीभक्तिविजयसत्कम्, एते द्वे एव पुस्तके समुपलब्धे । ततः पुस्तकप्रेषणेन साहाय्यं वितन्वनोरेनयोर्मन्येऽहं महान्तमुपकारम् ।

एतत्पुस्तकद्वितयनिरीक्षणेनैव संशोधितेऽप्यत्र निबन्धे यत्र क्वचनाशुद्धिः कृता जाता वा भवेत्तत्र संशोधनीयं विपश्चिदपश्चिमैरिति प्रार्थ्यते—

**प्रकल्पिताञ्जलिः प्रवर्त्तकपादपाथोजपरागः**

**चतुरविजयो मुनिः ।**

॥ अर्हम् ॥

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिभ्यो नमः

# श्रीमहेन्द्रसूरिविरचिता विचारसप्ततिका ।

## ( श्रीविनयकुशलरचितवृत्तिसमेता )

सर्वज्ञं श्रीजिनं नत्वा विश्वस्थितिविचारकम् । विचारसप्ततेः किञ्चित्संक्षेपार्थो विधीयते ॥ १ ॥

इह सार्वज्ञे प्रवचनेऽनेके विचाराः सन्ति । परमत्राञ्चलगच्छशृङ्गारहारश्रीमहेन्द्रसिंहसूरिभिर्द्वादश विचाराः संगृहीताः। तत्र प्रथमं द्वारगाथामाह—

**पडिमा[1] मिच्छा[2] कोडी[3] चेईअ[4] पासाय[5] रविकरप्पसरो[6]। पज्जत्ति[7] किन्ह[8] वलया[9] नंदी[10] गिहिकिरिअ[11] गुणठाणा[12]॥१॥**

शाश्वतप्रतिमानां संख्याविचारः १ । ईर्यापथिकीमिथ्यादुष्कृतविचारः २ । कोटिशिलास्वरूपविचारः ३ । चैत्यानां शाश्वतसिद्धायतनानां संख्याविचारः ४ । प्रासादानां देवविमानानां आकारविचारः ५ । षट्सु दिक्षु सूर्यकिरणानां प्रसारविचारः ६ । औदारिकवैक्रियाहारकदेहत्रिके षट्पर्याप्तिविचारः ७ । पञ्चमस्वर्गस्थकृष्णराजीविचारः ८ । मानुषोत्तरकुण्डलरुचकाभिधवलयाकारपर्वतत्रयविचारः ९ । नन्दीश्वराभिधानस्याष्टमद्वीपस्य विचारः १० । गृहस्थानामिति श्रावकाणां धर्मक्रियावक्तव्यताविचारः ११ । चतुर्दशगुणस्थानकानां विचारः १२ । एभिर्द्वादशभिर्द्वारैर्विचारसप्ततिकाभिधानो ग्रन्थो-

ऽयमभिधीयते ॥ १ ॥ अथाद्य प्रतिमाद्वारमाह—

**उसभाईजिणपडिमं इक्कं पि न्हवंतपूअयंतेहिं । चिंतेअव्वं एयं भवेहिँ विवेगमंतेहिं ॥ २ ॥**

ऋषभाद्यनेकजिनप्रतिमानां मध्यादेकामपि जिनप्रतिमां स्नपयद्भिः पूजयद्भिर्विवेकवद्भिर्भव्यैरेतच्चिन्तयितव्यम् ॥ २ ॥

यच्चिन्तयितव्यं तद्गाथापञ्चकेनाह—

**भवणवई भवणेसुं कप्पाइविमाण तह महीवलए। सासयपडिमा पनरस कोडिसय बिचत्त कोडिओ॥३॥**

**पणपन्नलक्ख पणविस सहसा पंच य सयाइं चालीसा। तह वणजोइसुरेसुं सासयपडिमा पुण असंखा॥४॥**

भवनपतिभवनेषु तथा कल्पादिविमानेषु तथा महीवलये इति तिर्यग्लोके पञ्चदशशतकोटयो द्विचत्वारिंशत्कोटयः पञ्चपञ्चाशल्लक्षाः पञ्चविंशतिः सहस्राश्चत्वारिंशदधिकाः पञ्चशतप्रतिमाः १५ ४२ ५५ २५ ५ ४० । तथा व्यन्तरज्योतिष्कभवनेषु शाश्वत्यः प्रतिमाः पुनरसंख्याताः, तेषां निवासस्थानानामसंख्यातत्वात् । यत्तु ग्रन्थान्तरे व्यन्तरज्योतिष्कातिरिक्ताः शाश्वत्यः प्रतिमाः—"पनरस कोडिसयाइं दुचत्त कोडीऽडवन्न लक्खाइं । छत्तीस सहस असिआ तिहुअणबिंबाणि पणमामि॥१॥" इत्युक्ता दृश्यन्ते तद्ग्रन्थमते तथैव, एतद्ग्रन्थकर्तृमते चैतावत्यः ॥ ३–४ ॥ अथाशाश्वतीः प्राह—

**तह चेव जंबुदीवे धायइसंडे य पुक्खरद्धे अ । भरहेरवयविदेहे गामागरनगरमाईसु ॥ ५ ॥**

तथा चैव जम्बूद्वीपे धातकीखण्डे पुष्करार्द्धे च भरतैरावतविदेहेषु ग्रामाकरनगरादिषु ॥ ५ ॥ एतेषु किमित्याह—

**सुरमणुएहिं कयाओ चेइअगिहचेइएसु जा पडिमा। उक्कोस पंच धणुसय जाव य अंगुट्ठपवसमा ॥६॥**

एतेषु पूर्वोक्तस्थानकेषु काश्चन सुरकृता विद्युन्मालिसुरकृतश्रीमहावीर जीवित्स्वामिमूर्त्यादयः, काश्चन भरतचक्र्यादि-मनुष्यकारिताष्टापदपर्वतस्थितचतुर्विंशतितीर्थकरमूर्त्यादयः। तथा "चेइअ" इति चैत्येषु श्रावककारितजिनायतनेषु। तथा गृहचैत्येषु देवतावसथेषु या या जिनप्रतिमाः सन्ति तासां प्रमाणं उत्कृष्टतः पञ्च धनुःशतानि, जघन्यतो यावदङ्गुष्ठपर्वसमाः ॥६॥

ताः कियत्यः? इत्याह—

**बहुकोडिकोडिलक्खा ताओ चिय भावओ अहं सवा। समगं चिय पणमामि न्हवेमि पूएमि झाएमि ॥७॥**

अशाश्वतीः प्रतिमा बहुकोटिकोटिलक्षाः शाश्वतीश्च ताः सर्वा अपि समकं समकालमेव शिरसा प्रणमामि, सुगन्धोदकैः स्नपयामि, चन्दनपुष्पादिभिः पूजयामि, मनसा ध्यायामीति चिन्त्यम् ॥ ७ ॥

व्याख्यातं प्रथमं प्रतिमाद्वारम्। अधुना ईर्यापथिकीमिथ्यादुष्कृतद्वारं द्वितीयमाह—

**चउदस पय अडचत्ता तिगहिअतिसई सयं च अडनउअं।**
**चउगइ दसगुण मिच्छा पण सहसा छ सय तीसा य ॥ ८ ॥**

चतुर्दश पदानि नरकेषु, अष्टचत्वारिंशच्च तिर्यक्षु, त्रिकाधिका त्रिशती मनुष्येषु, अष्टनवत्यधिकं शतं च देवेषु, एवं चतुर्गतिसंभवजीवभेदात्रिषष्ट्यधिकपञ्चशतसंख्याकान् ५६३ संमील्येर्यापथिकीदण्डकसप्तमसंपद्गताभिहतादिभिर्दशपदैर्गुणितानि मिथ्यादुष्कृतानि पञ्च सहस्राणि षट् शतानि त्रिंशदधिकानि जातानीति ५६३० संक्षेपेणोक्तानि ॥ ८ ॥

तानि कथं भवन्तीति विस्तरेणाह—

**नेरइआ सत्तविहा पज्जअपज्जत्तणेण चउदसहा । अडचत्ताईसंखा तिरिनरदेवाण पुण एवं ॥ ९ ॥**

नैरयिकाः सप्तविधाः रत्नप्रभादिसप्तनरकभेदेन । ते च पर्याप्तापर्याप्तभेदाभ्यां चतुर्दशधा । तथा 'अडचत्त' इति अष्टचत्वारिंशदादयः संख्याः पुनः तिर्यग्नरदेवानां, 'एवं' अमुना वक्ष्यमाणेन प्रकारेण ज्ञेयाः ॥ ९ ॥ ता आह—

**भूदग्गिवाउणंता वीसं सेसतरु विगल अट्ठेव। गब्भेयर पज्जेयर जलथलनहउरभुआ वीसं ॥ १० ॥**

'भूदग्गि' इति भूजलानलानिलानन्तकायवनस्पतयो मूलभेदेन पञ्च, ते सूक्ष्मबादरभेदाभ्यां दश भेदाः । दशापि पर्याप्तापर्याप्तभेदाभ्यां विंशतिः। 'सेसतरु'इति शेषवनस्पतिः प्रत्येकवनस्पतयः द्वित्रिचतुरिन्द्रियलक्षणविकलेन्द्रियत्रयमिलिताश्चत्वारो भेदाः,ते पर्याप्तापर्याप्तभेदाभ्यां अष्टौ। 'गब्भेयर' इति गर्भजसंमूर्छनजपर्याप्तापर्याप्तभेदैश्चतुर्विधा अपि पञ्चेन्द्रियाः पञ्च; ते के ? जलचर-स्थलचर-खेचर-उरःपरिसर्प-भुजपरिसर्पाः। पञ्चते चतुर्भेदगुणिता विंशतिः । एवमेकेन्द्रियाः पूर्वोक्ता विंशतिः, प्रत्येकवनस्पतिविकलेन्द्रिया अष्टौ, पञ्चेन्द्रिया विंशतिः, मिथः संमिलिता अष्टचत्वारिंशत्तिर्यग्भेदाः ४८ ॥ १० ॥ अथ मनुष्यभेदानाह—

**पनरस तीस छपन्ना कम्माकम्मा तहंतरद्दीवा । गब्भा पज्ज अपज्जा मुच्छ अपज्जा तिसय तिन्नि ॥११॥**

पञ्चभरतपञ्चैरावतपञ्चमहाविदेहसंभवाः पञ्चदश कर्मभूमिजाः । तथा भरतैरावतान्तरालवर्तिषु पञ्चहैमवतपञ्चहरिवर्षपञ्चरम्यकपञ्चहैरण्यवतपञ्चदेवकुरुपञ्चोत्तरकुरुषु त्रिंशदकर्मभूमिजा युगलिनः। तथा क्षुल्लहिमवच्छिखरिनाम्नोः पर्वतयोः पर्य-

न्तालवणोदधौ पूर्वस्यां पश्चिमायां ( च ) द्वे द्वे गजदन्ताकारे दंष्ट्रे विनिर्गते, एवमष्टौ दंष्ट्राः, एकैकस्यां सप्त सप्त द्वीपाः, एवं षट्पञ्चाशदन्तरद्वीपेषु, युगलिनः । ततः पञ्चदश, त्रिंशत्, षट्पञ्चाशत् ( च ) मिलितेषु एकोत्तरशतक्षेत्रेषु गर्भसमुत्पन्ना मनुष्याः । ते च पर्याप्तापर्याप्तभेदाभ्यां द्व्यधिकं द्विशतं भवन्ति। एतेष्वेव पूर्वोक्तस्थानकेषु संमूर्छनजा मनुष्या एकाधिकं शतं भवन्ति, ते चापर्याप्ता एव, तेषां पर्याप्तत्वभवनाभावात् । एवं सर्वे त्र्यधिका त्रिशती भेदा मनुष्यस्य ॥ ११ ॥

अथ देवभेदानाह—

**भवणा परमा जंभय वणयर दस पनर दस य सोलसगं।गइ ठिइ जोइस दसगं किब्बिस तिग नव य लोगंता**
**कप्पा गेविजणुत्तर बारस नव पण पजत्तमपजत्ता। अडनउ अ सयं अभिहयवत्तियमाईहिँ दसगुणिआ।१३।**

भवनपतयोऽसुरादयो दश प्रसिद्धाः । तथा परमाधार्मिकाः पञ्चदश असुरनिकायजातीयाः । यथा—"अंबे १ अंबरिसी चेव २ सामए ३ सबले विय ४ । रुद्दो ५ वरुद्द ६ काले अ ७ महाकालत्ति ८ आवरे ॥ १ ॥ असिपत्ते ९ धणुं १० कुंभे ११ वालुं १२ वेअरणी १३ तहा । खरस्सरे १४ महाघोसे १५ पन्नरस परमाहम्मिआ ॥ २ ॥" एतेषां नामान्वर्थः समवायाङ्गवृत्त्यादिभ्यो ज्ञेयः । तथा जृम्भका दशधा, यथा—"अन्नजृम्भकः १ पानजृम्भकः २ लयनजृम्भकः ३ वसुजृम्भकः ४ शयनजृम्भकः ५ पुष्पजृम्भकः ६ फलजृम्भकः ७ विद्याविद्याजृम्भकः ८ पुष्पफलजृम्भकः ९ अव्यक्तजृम्भकः १० "। एते व्यन्तरजातीया दीर्घवैताढ्यवासिनः । तथा व्यन्तराः षोडश, यथा—रत्नप्रभायां शतयोजनानन्तरनिवासिनः । के ते ?—"वंतर पुण अट्ठविहा पिसाय १ भूआ २ तहा जक्खा ३ । रक्खस ४ किंनर ५ किंपुरिस ६ महोरग ७ अट्ठमा

य गंधवा ८ ॥ १ ॥ ” इति । द्वितीयव्यन्तरा दशयोजनानन्तरं वसन्ति । यथा—“अणपन्नी १ पणपन्नी २ इसिवाइ अ ३ भूअवाइए ४ चेव । कंदी अ ५ महाकंदी ६ कोहंडे ७ चेव पयए य ८ ॥ १ ॥ ” इत्यष्टौ । एवं षोडशभेदाः । दशेत्यादीनि पदानि प्रत्येकं योज्यानि । “गइ” इति चन्द्रसूर्यग्रहनक्षत्रतारकालक्षणाः चर ५ स्थिर ५ भेदाज्ज्योतिष्का दश । तथा सौधर्मेशानयोरधस्त्रिपल्यायुषः १, सनत्कुमाराधस्त्रिसागरायुषः २, लान्तकाधस्त्रयोदशसागरायुषः ३, किल्बिषास्त्रयः । तथा लोकान्तिका नव, यथा—“सारस्सय १ माइच्चा २ वण्ही ३ वरुणा य ४ गद्दतोया य ५ । तुसिआ ६ अव्वाबाहा ७ अग्गिच्चा ८ चेव रिट्ठा य ॥ १ ॥ ” इत्यादि ॥ १२ ॥ तात्स्थ्यात्तद्व्यपदेशात् कल्पा ग्रैवेयका अनुत्तराः ( च ) देवाः । एवं द्वादशनवपञ्चभेदैः षड्विंशतिः । एते पूर्वोक्तैर्दशपञ्चदशदशषोडशदशत्रिकनवकैर्मिलिता नवनवतिर्भेदा देवानाम् । ग्रन्थान्तरे च—“इंद १ सम २ तायतीसा ३ पारसिया ४ रक्ख ५ लोगपाला य ६ । अणि अ ७ पइन्न ८ अभिओगा ९ किब्बिस १० दस भवणवेमाणी ॥ १ ॥ ” इत्यादि देवभेदा अनेके सन्ति, परमेतद्ग्रन्थकर्त्रा नवनवतिरेव विवक्षिताः । ते च पर्याप्तापर्याप्ताभ्यां द्विगुणिता अष्टनवत्यधिकं शतं १९८ भवन्ति । ततः सर्वे चतुर्गतिका जीवाः ५६३ ॥ १३ ॥

'अभिहया' इत्यादिदशपदैर्गुणिता यद्भवति तदाह—

**अभिहयपयाइ दह गुण पण सहसा छ सय तीसई भेआ।ते रागदोसदुगुणा इक्कारस सहस दोसया सट्ठी १४**
**मणवयकाए गुणिआ तित्तीस सहस्स सत्तसयसीया।करकारणानुमइए लक्खं सहसो तिसय चाला ॥१५॥**
**कालतिगेणं गुणिआ तिलक्ख चउ सहस वीसमहिआ य । अरिहंतसिद्धसाहूदेवयगुरुअप्पसक्खीहिं॥१६॥**

अट्ठारस लक्खाइं चउवीस सहस्स एगवीसहिआ। इरिआमिच्छादुक्कडपमाणमेअं सुए भणियं ॥१७॥

अभिहतपदादिभिः ५६३ दशभिर्गुणिताः पञ्च सहस्राः षट् शतानि त्रिंशदधिकानि जायन्ते ५६३०। तेऽपि रागद्वेषाभ्यां द्विगुणिता एकादश सहस्राः षष्ठ्यधिके च द्वे शते स्युः ११२६० ॥ १४ ॥ ते च मनोवचःकायैर्गुणितास्त्रयस्त्रिंशत्सहस्राण्यशीत्यधिकानि सप्त शतानि भवन्ति ३३७८०। तेऽपि च करणकारणानुमतिलक्षणत्रिकैर्गुणिता एकं लक्षं एकः सहस्रश्चत्वारिंशदधिकानि त्रीणि शतानि च १०१३४० ॥ १५॥ ते च कालत्रिकेण "अतीतं निन्दामि, अनागतं प्रत्याख्यामि, प्रत्युत्पन्नं संवरामि" इति वचनादतीतानागतवर्तमानलक्षणेन गुणिताः तिस्रो लक्षाश्चत्वारः सहस्रा विंशत्यधिकाः ३०४०२०। ते चार्हत्सिद्धसाधुसम्यग्दृष्टीन्द्रादिदेवगुर्वात्मसाक्षिकैः षड्भिर्गुणिता अष्टादश लक्षाश्चतुर्विंशतिः सहस्रा विंशत्यधिकशतं १८२४१२० इतीर्यापथिकीमिथ्यादुष्कृतप्रमाणं श्रुते भणितम्। क्वचिदाभोगानाभोगभेदद्वयगुणिताः षट्त्रिंशल्लक्षा अष्टचत्वारिंशत्सहस्राश्चत्वारिंशदधिके द्वे शते ३६४८२४० ॥ १६-१७ ॥ इति मिथ्यादुष्कृतद्वारं द्वितीयम् ॥

अथ कोटिशिलाख्यं तृतीयं द्वारमाह—

जोयणपिहुलायामा दसन्नपव्वयसमीव कोडिसिला। जिणछक्कतित्थसिद्धा तत्थ अणेगा उ मुणिकोडी ॥१८

उत्सेधाङ्गुलनिष्पन्नैकयोजनपृथुलायामा एकयोजनोच्चा भरतक्षेत्रमध्ये मध्यखण्डे मगधदेशे दशार्णपर्वतसमीपे वृत्ता कोटिशिला नाम शिला आस्ते। तत्र तस्यां कोटिशिलायां श्रीशान्त्यादिजिनषट्कतीर्थसिद्धा अनेका मुनिकोटयो ज्ञेयाः ॥१८॥

कथं सिद्धास्तदाह—

पढमं संतिगणहरो चक्काउहणेगसाहुपरियरिओ । बत्तीसजुगेहिँ तओ सिद्धा संखिज्जमुणिकोडी॥१९॥
संखिज्जा मुणिकोडी अडवीसजुगेहिँ कुंथुनाहस्स। अरजिण चउवीसजुगा बारसकोडीओ सिद्धाओ ॥२०॥
मल्लिस्सवि वीसजुगा छ कोडि मुणिसुव्वयस्स कोडितिगं। नमितित्थे इगकोडी सिद्धा तेणेव कोडिसिला २१

प्रथमं श्रीशान्तिनाथजिनेश्वरस्य चक्रायुधनामा प्रथमो गणधरोऽनेकसाधुगणपरिवृतः सिद्धिं गतः । ततो द्वात्रिंशद्युगैरिति द्वात्रिंशत्पट्टप्रतिष्ठितपुरुषपरम्पराभिः संख्येयमुनिकोटयः सिद्धाः । तत्र शिलायामिति शेषः १ ॥ १९ ॥ संख्येयमुनिकोटयोऽष्टाविंशतियुगैः श्रीकुन्थुनाथतीर्थसंबन्धिन्यस्तत्र सिद्धाः २। तथा श्रीअरनाथजिनस्य द्वादश कोटयो मुनीनां चतुर्विंशतियुगान् यावत् सिद्धाः ३ ॥ २० ॥ श्रीमल्लिनाथस्यापि विंशतियुगान् यावत् षट् कोटयः साधवः सिद्धाः ४ । तथा श्रीमुनिसुव्रतजिनस्य तिस्रः कोटयः सिद्धाः ५। तथा श्रीनमिनाथतीर्थङ्करस्य एका कोटिः सिद्धा मुनीनामिति शेषः ६ । अन्येऽपि बहवः साधवः सिद्धास्तेन कारणेनैषा कोटिशः सिद्धभवनात्कोटिशिलेत्यभिधीयते ॥२१॥ अथ सा शिला कैरुत्पादिता तदाह—

छत्ते सिरम्मि गीवा वच्छे उयरे कडीइ ऊरूसु । जाणू कहमवि जाणू नीया सा वासुदेवेहिं ॥ २२ ॥

नवभिर्वासुदेवैः सा शिला उत्पाटनावसरे एतेषु स्वाङ्गस्थानकेषु आनीता । यथा—प्रथमेन त्रिपृष्ठवासुदेवेन वामहस्तेनोत्पाट्य छत्रस्थाने शिरस्यूर्ध्वं समानीता १ । द्वितीयेन द्विपृष्ठेन तथैवोत्पाट्य शीर्षं यावदानीता २ । तृतीयेन स्वयंभुवा ग्रीवां यावदानीता ३ । चतुर्थेन पुरुषोत्तमेन वक्षस्यानीता ४ । पञ्चमेन पुरुषसिंहेन उदरं यावदानीता ५ । षष्ठेन पुरुषपुण्डरीकेण कटीं यावदानीता ६ । सप्तमेन दत्तनाम्ना ऊर्वोर्नीता ७ । अष्टमेन लक्ष्मणेन जान्वोर्नीता ८ । नवमेन कृष्णेन

कथमपि जान्वोः किञ्चिदधः समानीता ९ ॥ २२ ॥ कोटिशिलाद्वारं तृतीयम् ॥ अथ शाश्वतचैत्यद्वारं चतुर्थमाह—

**इक्कारअहिअपणसय सासयचेइअ नमामि महिवलए। तीसं वासहरेसु वेयड्ढेसुं च सयरिसयं ॥ २३ ॥**

एकादशाधिकानि पञ्च शतानि ५११ शाश्वतानि चैत्यानि सिद्धायतनानि महीवलये तिर्यग्लोके नमामि। यतो यान्यूर्ध्वलोके ८४९७०२३ चैत्यानि। अधोलोके च ७७२००००० चैत्यानि। व्यन्तरज्योतिष्केष्वसंख्यातानि, तानि ग्रन्थान्तरसुगम्यानि। अत्र तु तिर्यग्लोकगतचैत्यस्थानान्येवाह—'तीसं' इति वर्षधरपर्वतेषु त्रिंशत् चैत्यानि, प्रतिपर्वतमेकैकचैत्यसद्भावात्। तथा दीर्घवैताढ्येषु सप्तत्यधिकं शतं १७० ॥ २३ ॥ तथा चाह—

**वीसं गयदंतेसुं कुरुदुमदसगे तहेव नउई अ। वक्खारगिरिसु असिई पणसीई मेरुपणगम्मि ॥ २४॥**

**इसुमणुकुंडलरुअगे चउ चउ वीसं च नंदिसरिदीवे। अडवीस नंदिकुंडलिरुअगे सयपन्नबासयरी ॥२५॥**

विंशतिर्गजदन्तपर्वतेषु २०। तथा जम्बूवृक्षादिदशवृक्षेषु नवतिः ९०। यत एकमूर्ध्वशाखायां वृक्षादिग्विदिक्कूटेष्वष्टसु कूटेषु चैकैकचैत्यसद्भावात् प्रतिवृक्षं नवैव, तेन दशवृक्षेषु नवतिः ९०। तथाऽशीतिसंख्येषु वक्षस्कारगिरिषु अशीतिश्चैत्यानि ८०। तथा मेरुपञ्चके पञ्चाशीतिः। यतश्चतुर्षु वनेषु चतुर्दिक्षु चतुश्चैत्यसद्भावात् १६, चूलिकायां चैकम् एवं प्रतिमेरु १७ ॥ २४ ॥ इषुकारमानुषोत्तरकुण्डलरुचकाभिधेषु प्रत्येकं चत्वारि चत्वारि। तथा नन्दीश्वरद्वीपे विंशतिश्चैत्यानि। अथैतेषां चैत्यानामुच्चत्वादिप्रमाणमाह—नन्दीश्वरसत्का विंशतिः, कुण्डलरुचकयोरष्टौ, सर्वाण्यष्टाविंशतिः। 'सयपन्न' इति पूर्वपश्चिमयोः शतयोजनदीर्घाणि, दक्षिणोत्तरतः पञ्चाशदायामानि, द्वासप्ततिरुच्चानि, चतुर्द्वाराणि ॥ २५ ॥

अथ तदर्धमानान्याह—

अट्ठाराहिय दुसई पनद्ध छत्तीस दीहपिहुउच्चा । माणसइसुगयदंतयवक्खारवासहरमेरुसुं ॥ २६ ॥
पणसट्ठिअहिअ सयदुग संपुण्णं कोसमद्ध देसूणं । दीहे पिहु उच्चत्ते कुरुदुमवेअड्ढचूलासु ॥ २७ ॥

अष्टादशाधिकानि शतद्वयप्रमितानि चैत्यानि 'पन' इति पञ्चाशद्दीर्घाणि । 'अद्ध' इति पञ्चविंशतिरायामानि । षट्त्रिंशदुच्चानि । कानि तानि चैत्यानि ? मानुषोत्तर ४ इषुकार ४ गजदन्त २० वक्षस्कार ८० वर्षधर ३० चूलिकापञ्चवर्जमेरुषु ८० गतानि सर्वाण्यष्टादशाधिकानि शतद्वयचैत्यानि ज्ञेयानि ॥ २६ ॥ पञ्चषष्ठ्यधिकानि शतद्वयमितानि चैत्यानि दीर्घत्वे संपूर्णक्रोशानि, पृथुलत्वे देशोनक्रोशानि, उच्चत्वेऽर्धक्रोशानि सन्ति । कानि तानि ? कुरुक्षेत्रदशकगतजम्बूवृक्षादिषु नवतिः ९० । विजयभरतैरावतगतदीर्घवैताढ्येषु सप्ततिशतं १७० । मेरुचूलासु पञ्च ५ । सर्वाणि २६५ पूर्वोक्तचैत्यैः सह सर्वाणि ५११ ज्ञेयानि । यत्तु श्रीदेवेन्द्रसूरिप्रमुखकृतशाश्वतजिनस्तोत्रेषु द्वात्रिंशच्छतान्येकोनषष्ठ्यधिकानि तिर्यग्लोकगतान्युक्तानि तत्तु मतान्तरमवसेयम् । यदुक्तं वीरं जय सेहरेति क्षेत्रसमासे—"जिणभवणविसंवाओ जो तं जाणंति गीअत्था" ॥ २७ ॥ व्याख्यातं चैत्यद्वारं चतुर्थम् ॥ अथ पञ्चमं प्रासादद्वारमाह—

पासाया ईसाणे सुहमा सिद्धोववाय हरए अ । अभिसेअ अलंकारा ववसाए नंदि बलिपीढं ॥ २८॥

देवसंबन्धिनो मूलप्रासादावतंसकादीशानकोणे एवास्थानसभातुल्या जिनदाढोपेतमाणवकचैत्यस्तम्भादियुता सुधर्मा नाम सभा वर्तते १ । तत्पुरत एवेशानकोणे सिद्धायतनं जिनगृहं २ । तत्पुरत उपपातसभा, यस्यां निजनिजविमानगता

देवा उत्पद्यन्ते ३ । तदग्रे ह्रदो निर्मलजलभृतः, यत्र देवाः स्नानं कुर्वन्ति ४। तदग्रेऽभिषेकसभा, यत्र निजनिजविमानाधिपतीनामभिषेको देवैर्विधीयते ५ । तदग्रेऽलङ्कारसभा, यत्राभिषेकानन्तरमागत्यालङ्कारादि परिदधति ६ । तदग्रे व्यवसायसभा, यस्यां तत्रस्थपुस्तकादिकं वाचयित्वा धार्मिकं व्यवसायादिकं गृह्णन्ति ७ । तदग्रे नन्दा पुष्करिणी, यत्र पाणिपादौ प्रक्षाल्य तन्मध्योत्पन्नानि कमलानि लात्वा जिनायतने समागत्य सप्तदशादिभेदैः पञ्चशतधनुर्मानानां गर्भगृहस्थाष्टोत्तरशतसंख्यजिनप्रतिमानां पूजां स्तुतिं नतिं च शक्रस्तवं यावद्वितन्वन्ति । तदनु सर्वं विमानं चन्दनच्छटाक्षेपादिना पूजयित्वा नन्दापुष्करिणीतोऽग्रे बलिपीठं वर्तते, तत्रागत्य बलिमुञ्चन्ति ९ । जीवाभिगमवृत्तौ विजयदेवाधिकारेऽष्टमस्थाने बलिपीठं दृश्यते, नवमस्थाने च वापी, तन्मतान्तरमवसीयते । प्रतिविमानमेतानि त्रिद्वाराणि नवप्राकाराणि मूलप्रासादावतंसकादीशानकोण एवानुक्रमेण वर्तन्ते । जीवाभिगमराजप्रश्नीयोपाङ्गादिग्रन्थेष्वपीत्युक्तत्वात् ॥ २८ ॥

एषां नवानां मध्ये षट्सु स्थानकेषु प्रत्येकं त्रिषु द्वारेषु यद्वर्तते तदाह—

**मुहमंड पिच्छमंडव थूभं चेइअ झओ अ पुक्खरिणी। जम्मुत्तरपुव्वासुं जिणभवणसभासु पत्तेअं ॥२९॥**

पश्चिमां वर्जयित्वा याम्योत्तरपूर्वासु प्रतिदिशं प्रथमं मुखमण्डपः १ । तदग्रे प्रेक्षामण्डपः २ । तदग्रे स्तूपं तत्स्तूपस्योपरि अष्टौ मङ्गलानि, स्तूपाच्चतसृषु दिक्षु मणिपीठिकाः, तन्मणिपीठिकासु प्रत्येकमेकैका स्तूपाभिमुखा जिनप्रतिमा ऋषभ- १ वर्धमान २ चन्द्रानन ३ वारिषेणा ४ ऽभिधाः सन्ति ३ । तदग्रे चैत्यमिति चैत्यवृक्षः ४। तदग्रे इन्द्रध्वजः ५। तदग्रे पुष्करिणी वापी जलपूर्णा ६। एतानि षट् प्राकाराणि जिनभवने पञ्चसु सभासु च त्रिद्वारेषु प्रत्येकं सन्ति। जिनभवनसभादि-

नवानां प्रमाणं पण्णां मुखमण्डपादीनां प्रमाणं च राजप्रश्नीयोपाङ्गादिभ्यो ज्ञेयम् ॥ २९ ॥ अथमूलप्रासादावतंसकः क्वास्तीत्याह—

**ओआरियलयणंमि अ पहुणो पणसीइ हुंति पासाया। तिसय इगचत्त कत्थय कत्थवि पणसट्ठि तेरसया ३०**

सौधर्मविमानेषु समन्तात् प्राकारः । स च योजनानां त्रीणि शतानि उच्चत्वेन, मूले चैकं योजनशतं पृथुलः, मध्यभागे पञ्चाशत्, सर्वोपरितनभागे पञ्चविंशतियोजनानि । भवनपतिनिकायभवनेषु प्राकारः तदर्धमान उच्चत्वपृथुत्वादिषु । तस्य सर्वत्रापि मध्ये 'उपकारिकालयनं' पीठिकेत्यर्थः । तस्यां सर्वमध्ये प्रभोः पञ्चाशीतिः प्रासादाः १। कुत्रापि उपकारिकालयने एकचत्वारिंशदधिकानि त्रीणि शतानि प्रासादाः २। कुत्रापि पञ्चषष्ट्यधिकानि त्रयोदश शतानि प्रासादाः ३। एवं भेदत्रयम् ३०॥

कथं वर्त्तन्ते ते प्रासादाः ? इत्याह—

**मुहपासाओ चउदिसि चउहिं ते सोलसेहिँ सोलावि। चउसट्ठीए सावि य छप्पन्नेहिं दुहि सएहिं ॥ ३१॥**

**तेऽवि अ पुण सहसेणं चउवीसहिएण हुंति परिअरिआ। मूलुच्चत्तपुहुत्ता अद्धद्धे पणवि पंतीओ ॥३२॥**

मुख इति सर्वमध्यवर्त्तिमूलप्रासादावतंसकः, स चतसृषु दिक्षु चतुर्भिः प्रासादावतंसकैः परिवृत इति प्रथमा पङ्क्तिः । सर्वे पञ्च । तेऽपि चत्वारः प्रासादा अन्यैः षोडशभिः प्रासादैश्चतसृषु दिक्षु परिवृताः प्रत्येकं चत्वार एवेति द्वितीया पङ्क्तिः, सर्वे २१ भवन्ति । तेऽपि च षोडश प्रासादाश्चतुःषष्ठ्या प्रासादैः परिवृता इति तृतीया पङ्क्तिः, सर्वे ८५ । तेऽपि चतुःषष्टिः प्रासादाः षट्पञ्चाशदधिकेन शतद्विकेन परिवृता इति चतुर्थी पङ्क्तिः, सर्वे ३४१ ॥ ३१ ॥ तेऽपि षट्पञ्चाशदधिकशतद्वयप्रासादाश्चतुर्विंशत्यधिकेन सहस्रेण परिवृता भवन्तीति पञ्चमी पङ्क्तिः, सर्वे १३६५ । पञ्चापि पङ्क्तयो मूलप्रासादा-

वतंसकस्योच्चत्वपृथुत्वदीर्घत्वेभ्योऽर्धार्धमाना ज्ञेयाः । किमुक्तं भवति ? यत्र मूलप्रासादावतंसः पञ्चशतयोजनमान उच्च-त्वपृथुत्वाभ्यां, तस्मादाद्या चतुःप्रासादरूपा या पङ्क्तिः सा सार्धद्विशतीयोजनमाना । ततो द्वितीयपङ्क्तिगतप्रासादा अर्ध-माना । ततोऽप्यर्धा तृतीया पङ्क्तिः । एवमनुक्रमेण पञ्चापि भावनीयाः ॥ ३२॥ अथ प्रतिविमानं कति प्रासादा भवन्तीत्याह—

**तेरससय पणसट्ठाइअ पणपंतीहिँ हुंति पासाया । पणसी पंतितिगेणं तिसई इगचत्त चउहिं तु ॥३३॥**

तावद्विमानेषु पङ्क्तिविषयं भेदत्रयमेवास्ति । यथा केषुचिद्विमानेषु पङ्क्तिपञ्चकं भवति। केषुचित् पङ्क्तिचतुष्कं। केषुचित् पङ्क्तित्रयं । अतो हीनं चतुर्निकायेषु विमानं न भवति, तत्र पञ्चभिः पङ्क्तिभिस्त्रयोदश शतानि पञ्चषष्ट्यधिकानि प्रासादा भवन्ति । पङ्क्तित्रिकेण च पञ्चाशीतिः प्रासादाः सन्ति। चतसृभिः पङ्क्तिभिरेकचत्वारिंशदधिकानि त्रीणि शतानि। व्यत्ययो गाथाबन्धवशाज्ज्ञेयोऽत्र ॥ ३३ ॥ अथ प्रतिदिशं भेदत्रयेऽप्येकैकस्मिन् भेदे कियन्तः प्रासादा भवन्तीत्याह—

**पणसीई एगवीसा पणसी पुण एगचत्त तिसईए । तेरससय पणसट्ठा तिसई इगचत्त पइककुहं ॥३४॥**

प्रतिदिशमेकविंशत्या प्रासादैः पङ्क्तित्रिकेण पञ्चाशीतिः प्रासादाः । तथा चतसृभिः पङ्क्तिभिः प्रतिदिशं पञ्चाशीत्या प्रासादैरेकचत्वारिंशदधिकानि त्रीणि शतानि प्रासादा भवन्ति । तथा प्रतिदिशं एकचत्वारिंशदधिकया त्रिशत्या प्रासादैः सर्वमध्यवर्तिसहितैः पञ्चपङ्क्तिविमानेषु पञ्चषष्ट्यधिकानि त्रयोदशशतानि भवन्तीति स्थापनयाऽवगन्तव्यम् ॥ ३४ ॥ व्याख्यातं पञ्चमं प्रासादद्वारम् ॥ अथ किरणप्रसरद्वारं षष्ठमाह। तत्र प्रथमं सूर्यस्य पूर्वपश्चिमदक्षिणोत्तरदिग्विभागं दर्शयति—

**पिट्ठे पुवा पुरओ अवरा वलए भमंत सूरस्स । दाहिणकरम्मि मेरु वामकरे होइ लवणोही ॥ ३५ ॥**

मेरुं परितः प्रदक्षिणावर्तेन सूर्यस्य भ्रमतः पृष्ठे पूर्वा दिक्, पुरतोऽपरा पश्चिमा भवति । सूर्यस्य दक्षिणकरे मेरुः, वामकरे लवणोदधिः । एताः सूर्यस्य दिशः, न तु लोकदिशः, लोकानां सूर्यापेक्षया दिशो भवन्ति । निखिलक्षेत्रेषु तास्ताः पदिश उच्यन्ते । स्वाभाविकास्तु क्षेत्रदिशः, ता मेरुरुचकप्रभवा भवन्ति । रुचका अपि मेरुसर्वमध्यस्थिता अष्टौ आकाशप्रदेशाः समभूतलस्थाने गोस्तनाकाराः । तत्र चतस्रो द्विप्रदेशादयो द्व्युत्तराः शकटोद्धिसंस्थानाः पूर्वाद्या महादिशश्चतस्र एव । एकप्रदेशादयो मुक्तावलीनिभा विदिशः द्वे च चतुःप्रदेशात्मिके ऊर्ध्वाधोदिशाविति । तेन जम्बूद्वीपजगत्यां विजयद्वारि पूर्वा दिक्, एवं वैजयन्तद्वारि दक्षिणा, जयन्तद्वारि पश्चिमा, अपराजिते उत्तरा इति क्षेत्रदिग्निर्णयः ॥ ३५ ॥

अथ षट्सु दिक्षु प्रतिवासरं जम्बूद्वीपगतसूर्यकिरणप्रसारं गाथाषट्केनाह—

**सगचत्तसहस दुसइं तेवट्ठा तहिगवीससट्ठंसा । पुव्वावरकरपसरो कक्के सूरा अहुत्तरउ ॥ ३६ ॥**

कर्कसंक्रान्त्याद्यदिने योजनानां सप्तचत्वारिंशत्सहस्राणि द्वे च शते त्रिषष्ठ्यधिके, योजनस्यैकविंशतिः षष्टिभागाः ४७-२६३ $\frac{२१}{६०}$ । एतावान् सूर्यात् पूर्वस्यां करप्रसरः एतावानेव च सूर्यादपरस्यां । पूर्वापरमीलने तद्दिने उदयास्तान्तरजातं ९४५-२६ $\frac{४२}{६०}$ । 'अहुत्तर' इति मेरुदिशि करप्रसर उच्यते ॥ ३६ ॥ तदाह—

**असिईसऊण सहसा पणयालीसाऽह जम्मओ दीवे।असिइसयं लवणेऽवि अ तित्तीससहस्स सतिभागा३७**

सर्वाभ्यन्तरे मण्डले सूर्यः सन् कर्काद्यदिनेऽशीत्यधिकं योजनशतं जगतीतो द्वीपान्तः प्रविशति, तेन तदूनानि पञ्चचत्वारिंशद्योजनसहस्राणि ज्ञेयानि । एतावता चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि विंशत्यधिकानि ४४८२० उत्तरस्यां

मेरुं यावत्करप्रसरः । यद्यपि मण्डलसमश्रेणेर्मेरोर्विष्कम्भो योजनदशसहस्रात्मको न लभ्यते, किंतु किञ्चिन्न्यूनस्तथापि व्यवहारेणैतावान् ग्राह्यः । 'अह जम्मओ' इति अथ याम्यतो दक्षिणदिशि तत्र द्वीपसंबन्ध्यशीत्यधिकं शतम् १८० । लवणे च त्रयस्त्रिंशत्सहस्राणि 'सतिभागा' सहस्रतृतीयांशयुतानि । कोऽर्थः ? त्रीणि शतानि त्रयस्त्रिंशदधिकानि तृतीयभागो $\frac{१}{३}$ योजनस्य च । उभयमीलने जातम् ३३५१३ $\frac{१}{३}$ । एवं जम्बूद्वीपगतद्वितीयस्यापि सूर्यस्य करप्रसरो भावनीयः ॥ ३७ ॥

अथ मकरसंक्रान्तौ यदवशिष्यते तदाह—

**इगतीससहस अडसय इगतीसा तह य तीससट्ठंसा। मयरे रविरस्सीओ पुव्ववरेणं अह उदीणे ॥३८॥**

सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामन् सूर्यः क्रमेण करप्रसरेण हीयमानः सर्वबाह्यमण्डलमागच्छति, तत्र चैकत्रिंशत्सहस्राण्यष्टौ शतान्येकत्रिंशदधिकानि, त्रिंशच्चैकषष्टिभागा योजनस्य ३१८३१ $\frac{३०}{६१}$ । एतावत्प्रमाणो मकरे पूर्वस्यामपरस्यां च करप्रसरो भवति । पूर्वापरमीलने तद्दिनोदयास्तान्तरं जातं ६३६६३ । अत्र प्रतिदिनं साधिकं द्विसप्ततिशतं योजनानां हानिः १७२ $\frac{१०}{६०}$ $\frac{१४४}{१८३}$ प्रतिपूर्वपश्चिमयोश्च तदर्धं साधिका षडशीतिर्योजनानां ८६ $\frac{५}{६०}$ $\frac{७२}{१८३}$ ॥ ३८ ॥

अथ मकरे उदीच्यां दक्षिणस्यां चाह—

**लवणे तिसई तीसा दीवे पणचत्तसहस अह जम्मे। लवणम्मि जोअणतिगं सतिभाग सहस्स तित्तीसा ३९**

सर्वबाह्ये मण्डले सूर्यो लवणसमुद्रे त्रिंशद्योजनाधिकां त्रिशतीमागतः, तेन लवणसंबन्धीनि त्रीणि शतानि त्रिंशदधिकानि ३३० द्वीपसंबन्धीनि पञ्चचत्वारिंशत्सहस्राणि ४५००० । उभयमीलने ४५३३० उदीच्यां करप्रसरः । 'अह जम्मे'

अथ याम्ये लवणदिशि त्रयस्त्रिंशत्सहस्राणि एकयोजनस्य तृतीयभागयुतयोजनत्रयाधिकानि ३३००३⅓ करप्रसरः ॥ ३९ ॥



अथोर्ध्वाधस्तेजःप्रसरस्वरूपमाह—

**मयरम्मिवि कक्कम्मिवि हिट्ठा अट्ठारजोअणसयाइं । जोयणसयं च उड्ढं रविकर एवं छसु दिसासु॥४०॥**

मकरे इति मकरादिषु षट्सु संक्रान्तिषु । 'कक्कम्मि' इति कर्कादिषु षट्सु संक्रान्तिषु अर्थात् सर्वेष्वपि मण्डलेषु वर्तमानस्य सूर्यास्याधोऽष्टादश योजनशतानि तेजो भवति । यतः सूर्यादष्टयोजनशतेषु समभूतलम् । समभूतलापेक्षया चाधो योजनसहस्रमधोग्रामाः, ते हि जम्बूद्वीपापरविदेहे मेरोरारभ्य जगत्यभिमुखं प्रदेशप्रदेशहान्या क्षेत्रस्यातिनिम्नीभवनादन्तिमविजयद्वयस्थाने द्विचत्वारिंशद्योजनसहस्रैः सन्ति । यदुक्तं लघुक्षेत्रविचारे—"जोयणसयदसगंते समधरणीओ अहे अहोगामा । बायालीससहस्सेहिं गंतुं मेरुस्स पच्छिमओ ॥ १ ॥" ततः परं योजनसहस्रत्रयं समभूतलतुल्यतया समभूभागो वर्तते । शीतोदायाः प्रवेशस्तु जयन्तद्वाराधो भूत्वा लवणाब्धावनेकयोजनसहस्राणि गत्वा च भवति । इदं चाधःकरप्रसरमानं जम्बूद्वीपगतसूर्यापेक्षया एव ज्ञेयम् । द्वीपान्तरसूर्यास्त्वधोऽष्टशतानि तपन्ति, तत्क्षेत्रस्य समत्वादिति । ऊर्ध्वं तु सर्वत्र सर्वेषां सूर्याणां शतमेकं करप्रसरः । यदुक्तं भगवत्यामष्टमशतेऽष्टमोद्देशके—"जम्बूदीवेणं भंते सूरिया केवइअं खित्तं उड्ढं तवेंति ? केवइअं खित्तं अहो तवेंति ? केवइअं खित्तं तिरिअं तवेंति ? गोयमा ! एगं जोअणसयं उड्ढं तवेंति, हेट्ठा अट्ठारस जोअणसयाइं तवेंति इत्यादि" । एवममुना प्रकारेण षट्सु दिक्षु रविकरप्रसरः ॥ ४० ॥ अथ जम्बूद्वीपे एव दक्षिणोत्तरयोः सर्वदा सर्वाग्रमाह—

**पइदिणमवि जम्मुत्तर अडसत्तरिसहस सहसतइअंसो। उड्ढह गुणवीससया अठिया पुव्वावरा रस्सी॥४१॥**

प्रतिदिनमपि याम्योत्तरयोः करप्रसरमीलने अष्टसप्ततिसहस्राणि त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि योजनतृतीयांशश्च ७८३३३ $\frac{१}{३}$ । तथोर्ध्वाधश्च एकोनविंशतिशतानि १९०० । तथा सूर्यात्पूर्वस्यां अपरस्यां च रश्मयो रवेरभीषवोऽस्थिराः, सर्वमण्डलेषु हानिवृद्धिभावात् । अयं रवितेजःप्रसरो जम्बूद्वीपे एव ज्ञेयः । लवणधातकीकालोदपुष्करार्धगतसूर्याणां तेजःप्रसरोऽधिकाधिकतरो वर्तते । तेन तत्स्वरूपं मत्कृतमण्डलप्रकरणादवसेयम् । मनुष्यलोकाद्बहिः चन्द्रसूर्याः स्थिराः सन्ति ॥ ४१ ॥ व्याख्यातं रविकरप्रसरद्वारं षष्ठम् ॥ अथ सप्तमं पर्याप्तिद्वारमाह—

**आहारसरीरिंदियऊसासवेओमणो छ पज्जत्ती। चउ पंच पंच छप्पिअ इगविगलाऽमणसमणतिरिए॥४२॥**

**गब्भयमणुआणं पुण छप्पि अ पजत्ति पंच देवेसु। जं तेसिं वयमणाण दुवेऽवि पज्जत्ति समकालं॥४३॥**

पर्याप्तिराहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः । सा च पुद्गलोपचयादुपचीयते । ताश्च षट् । तत्र यया शक्त्या करणभूतया जन्तुः आहारमादाय खलरसरूपतया परिणमयति सा आहारपर्याप्तिः १ । यया रसीभूतमाहारमौदारिकवैक्रियाहारकशरीरत्रययोग्यपुद्गलरूपं रसासृग्मांसमेदोऽस्थिमज्जशुक्र ( रूप ) सप्तधातुतया यथासंभवं परिणमयति सा शरीरपर्याप्तिः २ । यया धातुरूपतया परिणमितादाहारादेकस्य द्वयोस्त्रयाणां चतुर्णां पञ्चानां चेन्द्रियाणां योग्यान् पुद्गलानादाय स्वस्वेन्द्रियरूपतया परिणमय्यालम्ब्य च स्वस्वविषयं परिज्ञातुं प्रभुर्भवति सेन्द्रियपर्याप्तिः ३ । ययोच्छ्वासनिःश्वासयोग्यं दलिकमादाय तथा परिणमय्यालम्ब्य च निःस्रष्टुं समर्थो भवति सा पुनः प्राणपर्याप्तिः ४ । यया भाषा-

योग्यं दलिकमादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः ५। यया मनोवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मनःसमर्थो भवति सा मनःपर्याप्तिः ६ । एतास्वेकेन्द्रियाणामाद्याश्चतस्रः । विकलेन्द्रियाणां भाषासहिताः पञ्च । अमनस्कानामिति संमूर्छिमपञ्चेन्द्रियतिरश्चां ता एव पञ्च । समनस्कानामिति गर्भजतिरश्चां मनःसहिताः षट् ॥ ४२ ॥ गर्भजमनुष्याणां पुनः षडपि पर्याप्तयः । संमूर्छिममनुष्याणां त्वपर्याप्तत्वेन मरणं भवति, (ततः) तेषामाद्यत्रिकं संभवति, करणापर्याप्तत्वेन सर्वेषां अपर्याप्तानां जीवानां मरणासंभवात् । देवनारकेषु पञ्च, यतस्तेषां वचोमनःपर्याप्ती द्वे अपि समकालं भवतस्तेन पञ्च ॥ ४३ ॥ अथाद्य त्रिषु शरीरेषु सर्वपर्याप्तिकालप्रमाणं विवक्षुराह—

उरालविउवाहारे छन्हऽवि पज्जत्ति जुगवमारंभो । तिन्हऽवि पढमिगसमए बीआ पुण अंतमोहुत्ती ॥४४॥

औदारिकवैक्रियाहारकशरीरेषु प्रत्येकं प्रत्येकं युगपत्समकालं षण्णां पर्याप्तीनां प्रारम्भो भवतीति स्थितिः निष्ठां च क्रमादुपयान्ति । यथा—प्रथममाहारपर्याप्तिस्ततो द्वितीया शरीरपर्याप्तिः,तत इन्द्रियपर्याप्तिरित्यादयः सर्वा ज्ञेयाः। तासां मध्ये प्रथमैकाहारपर्याप्तिः शरीरत्रिकेऽप्येकसामयिकी भवति । एकसमयेनौज आहाररूपपर्याप्तिः समाप्तिं यातीत्यर्थः । द्वितीया शरीरपर्याप्तिः त्रिष्वेव शरीरेष्वन्तर्मुहूर्तप्रमाणा ॥ ४४ ॥

अथ शेषपर्याप्तीनामौदारिकशरीरे एव गाथापूर्वार्धेन, अन्त्यार्धेन च वैक्रियाहारकयोः कालप्रमाणमाह—

पिहु पिहु असंखसमइअ अंतमुहुत्ता उराल चउरोऽवि। पिहु पिहु समया चउरोऽवि हुंति वेउविआहारे ४५

तृतीया चतुर्थी पञ्चमी षष्ठी चैताश्चतस्रोऽपि पर्याप्तयः पृथक् पृथक् औदारिके शरीरेऽसंख्यातसमयात्मकान्तर्मौहूर्तिक्यो

भवन्ति । सर्वा अपि वृद्धान्तर्मुहूर्तेन परिपूर्णा भवन्तीति पूर्वार्धार्थः । तथा 'चउरोऽवि' इति वैक्रियाहारकशरीरयोस्तु तृतीयाप्रमुखाश्चतस्रोऽपि पृथक् पृथक् एकैकसमयेन एकैका पूर्णा भवतीत्यर्थः । यथा एकेन समयेन इन्द्रियपर्याप्तिः, द्वितीयेनोच्छ्वासपर्याप्तिः, तृतीयेन समयेन वचनपर्याप्तिः, चतुर्थेन समयेन च मनःपर्याप्तिः ॥ ४५ ॥

एवं मनुष्यतिरश्चोः प्रोक्ता अथ देवनैरयिकेष्वाह—

**छन्हऽवि समआरंभे पढमा समएऽवि अंतमोहुत्ती । ति तुरिअ समए समए सुरेसु पण छट्ठ इगसमए ॥ ४६ ॥**

सुरनैरयिकेषु षण्णां पर्याप्तीनां युगपत्प्रारंभेऽपि प्रथमा ओजाहाररूपा एक पर्याप्तिरेकेन समयेन परिपूर्णा भवति । द्वितीया शरीरपर्याप्तिरप्यान्तर्मौहूर्तिकी । तृतीया चतुर्थी च पर्याप्तिः पृथक् पृथक् एकैकेन समयेन भवति । तथा पञ्चमी वचनपर्याप्तिः षष्ठी मनःपर्याप्तिश्चोभे अप्येकस्मिन् समये एव भवतस्तथास्वाभाव्यात् । उत्तरवैक्रियं देवनारकाणामपीत्थमेव ४६

गतं पर्याप्तिद्वारं सप्तमम् ॥ अथ कृष्णराजिस्वरूपमष्टमं द्वारमाह—

**बंभे रिट्ठे तइअंमि पत्थडे अट्ठ कण्हराईओ । इंदय चउसु दिसासुं अक्खाडगसंठिआ दिग्घे ॥ ४७ ॥**

ब्रह्मलोकनामकः पञ्चमः कल्पः । तत्रापि तृतीये रिष्टाभिधाने प्रस्तटेऽष्टौ कृष्णराज्यो भवन्ति । सचित्ताचित्तपृथ्वीपरिणामरूपा भित्त्याकारव्यवस्थिताः । किमाकारा इत्याह—तृतीयरिष्टाभिधानप्रस्तटगतेन्द्रकविमानाच्चतसृषु दिक्षु द्वे द्वे कृष्णराज्यौ स्तः । तथाहि—पूर्वस्यांदक्षिणोत्तरायते तिर्यग्विस्तीर्णे । एवं हि दक्षिणस्यां पूर्वापरायते । अपरस्यां दक्षिणोत्तरायते । उत्तरस्यां पूर्वापरायते । सर्वा अष्टौ । कीदृश्यः ? आखाटकसंस्थानसंस्थिताः आखाटको नाम प्रेक्षास्थाने आसन-

विशेषः प्रज्ञप्तिटीकायां तथैव व्याख्यानात् । दीर्घे इति दीर्घत्वे ताः कियत्प्रमाणाः ? ॥ ४७ ॥ तदाह—

जोअणअसंख पोहत्ति संख ईसाणि अंचि अंचिमाली । वइरोअणं पहंकर चंदाभं सूरिअ सुकाभं ॥ ४८ ॥
सुपइट्ठाभं रिट्ठं मज्झे वट्टं वहिं विचित्तट्ठं । तेसिं पहू सारस्सयपमुहा तद्दुदुगपरिवारा ॥ ४९ ॥
सत्तसय सत्त चउदस सहसा चउदहिअ सगसहससत्त । नव नवसय नव नवहिअ अव्वाबाहागिच्चरिट्ठेसु ५०

दीर्घे इति लम्बत्वेऽसंख्यातयोजनसहस्रा भवन्ति । "पोहत्ति" पृथुलत्वे विष्कम्भत्वे तु संख्यातयोजनसहस्राः । परिक्षेपे त्वसंख्यातयोजनसहस्राः । महत्त्वं चासां यो देवो महर्द्धिको यया गत्या तिसृभिश्चपुटिकाभिरेकविंशतिवारान् सकलमपि जम्बूद्वीपं समवृत्त्या गच्छेत्, स एव देवस्तया गत्याऽर्द्धमासेनैकां व्यतिव्रजेत् नेतरामिति । तासां कृष्णराजीनामन्तराले किमस्तीत्याह—'ईसाणि' इति एतासां कृष्णराजीनामीशानादिषु दिक्षु विदिक्ष्वष्टस्वप्यन्तरेषु राजीद्वयमध्यलक्षणेष्वाकाशान्तरेष्वष्टौ विमानानि भवन्ति, तासां बहुमध्यदेशभागे चैकं विमानम् । तद्यथा—अभ्यन्तरोत्तरपूर्वयोः कृष्णराज्योरन्तरेऽर्चिर्नाम विमानम् १ । एवं पूर्वयोरर्चिमाली २ । अभ्यन्तरपूर्वदक्षिणयोर्वैरोचनम् ३ । दक्षिणयोः प्रभङ्करम् ४ । अभ्यन्तरदक्षिणपश्चिमयोश्चन्द्राभम् ५ । पश्चिमयोः सूराभम् ६ । अभ्यन्तरपश्चिमोत्तरयोः सुकाभम् ७ । उत्तरयोः सुप्रतिष्ठाभम् ८ । सर्वकृष्णराजीमध्यभागे रिष्टाभम् ९ । तच्च वृत्तं । शेषाण्यष्टौ विचित्राकाराणि, अनावलिकाप्रविष्टत्वात् । तेभ्योऽसंख्यातयोजनसहस्रैरलोकः । 'तेसिं पहू' इति तेषां प्रभवः सारस्वतप्रमुखा देवाः । 'तद्दुदुग' इति तद्द्विकद्विकपरिवाराः तेषां विमानानां युगलं त्रिकेषु वक्ष्यमाणपरिवारदेवा भवन्तीत्यर्थः ॥ ४८-४९ ॥ सारस्वतादित्ययोः समुदितयोः

सप्ताधिकानि सप्तदेवशतानि सन्तीति परिवारः । एवं वह्निवरुणयोश्चतुर्दशाधिकाश्चतुर्दश सहस्राः । गर्दतोयतुषितयोः सप्ताधिकाः सप्त सहस्राः । शेषेषु त्वव्याबाधाग्नेयरिष्टेष्वेतद्ग्रन्थकर्तृमते प्रत्येकं नवाधिकानि नव शतानि सन्ति । तत्र सर्वविमानगताः सर्वे देवास्तज्जातीयाः २४४५५ । प्रवचनसारोद्धारादिबहुषु ग्रन्थेषु त्वन्त्यत्रिषु तेषु समुदितेषु नवाधिकानि नव शतान्येव, तन्मते सर्वे देवाः २२६३७७ ज्ञेयाः ॥ ५० ॥ अथ तेषां देवानां नामान्याह—

**सारस्स य माइच्चा वण्ही वरुणा य गद्दतोया य । तुसिआ अव्वाबाहा अग्गिच्चा चेव रिट्ठा य ॥ ५१ ॥**

सारस्वताः १, मकारोऽलाक्षणिकः । आदित्याः २ । वह्नयः ३ । वरुणाः ४ । गर्दतोयाः ५ । तुषिताः ६ । अव्याबाधाः ७ । आग्नेयाः ८ । रिष्टाश्चेति, तात्स्थ्यात्तद्व्यपदेश इति रिष्टविमानाधारा देवा रिष्टाः ९ । एते च सारस्वतादयो लोकान्तिका लोकस्य ब्रह्मलोकस्यान्ते समीपे भवा लोकान्तिकाः । ते च सुराः संवत्सरेणार्वाक् स्वयंबुद्धमपि जिनेन्द्रं जितमिति कृत्वा प्रव्रज्यासमये समागत्य "भगवन् ! सर्वजगज्जीवहितं तीर्थं प्रवर्तय" इति बोधयन्ति । ते देवा अजघन्योत्कृष्टाष्टसागरायुषः, तथा सप्ताष्टभिर्भवैर्मुक्तिगामिनः ॥ ५१ ॥ अथ कृष्णराजीनां परस्परं स्पर्शनस्वरूपं दर्शयति—

**पुव्वंतर जम्मबाहिं पुट्ठा जम्मंतरा बहिं वरुणं । तम्मज्झुत्तरबाहिं उईणमज्झा बहिं पुव्वं ॥ ५२ ॥**

पौरस्त्याभ्यन्तरा दक्षिणबाह्यां स्पृशति १ । दक्षिणाभ्यन्तरा "बहिं वरुणं" इति पश्चिमबाह्यां स्पृशति २ । "तम्मज्झ" इति तत्पश्चिमाभ्यन्तरा उत्तरबाह्यां स्पृशति ३ । "उईणमज्झा" इति उत्तराभ्यन्तरा पूर्वबाह्यां स्पृशति ४ ॥ ५२ ॥ अथैतासां कोणविभागानाह—

**पुव्वावरा छलंसा तंसा पुण दाहिणुत्तरा बज्झा । अब्भंतर चउरंसा सव्वाविअ कण्हराईओ ॥ ५३ ॥**

पौरस्त्यपाश्चात्ये द्वे बाह्ये कृष्णराज्यौ ( षडस्रे षट्कोणे । दक्षिणोत्तरे द्वे बाह्ये ) त्र्यस्रे त्रिकोणे । अभ्यन्तराश्चतस्रोऽपि कृष्णराज्यश्चतुरस्राश्चतुष्कोणा इत्यर्थः ॥ ५३ ॥ व्याख्यातं कृष्णराजिद्वारमष्टमम् ॥ ८ ॥ साम्प्रतं वलयद्वारं नवममाह—

**पुक्खरिगारस तेरेव कुंडले रुअगि तेर ठारे वा । मंडलिआचलतिन्निउ मणुउत्तर कुंडलो रुअगो ॥५४॥**

कालोदसमुद्राद्बहिर्वलयाकारः षोडशलक्षयोजनविस्तीर्णः पुष्करवरद्वीपोऽस्ति, तस्यापि(र्धे) बाह्ये दले प्रथमः १ । तथा जम्बूद्वीपादेकादशो मतान्तरेण त्रयोदशो वा कुण्डलद्वीपोऽस्ति, तस्यार्धे द्वितीयः २ । तथा "जम्बूधायइपुक्खर" इति संग्रहणीदर्शितक्रमप्रमाणेन त्रयोदशो मतान्तरेणाष्टादशो वा ( रुचकद्वीपोस्ति ) तत्र तृतीयः ३ । एवं मण्डलाचला वलयाकारपर्वतास्त्रयः पुष्करकुण्डलरुचकद्वीपेषु अर्धार्धभागेषु च प्राकाराकाराः सन्ति । तेषां नामानि च मानुषोत्तरः कुण्डलो रुचक इति ॥ ५४ ॥ गाथाप्रथमार्धेनैतेषामुच्चत्वमाह—

**सत्तरसय इगवीसा बायालसहस्स चुलसिसहसुच्चा । चउसय तीसा कोसं सहसं सहसं च ओगाढा ॥५५॥**

सप्तदशशतान्येकविंशत्यधिकानि मानुषोत्तराचलः उच्चः १ । तथा कुण्डलाचलो द्विचत्वारिंशत्सहस्राण्युच्चः २ । तथा रुचकश्चतुरशीतिसहस्राण्युच्चः ३ । गाथान्त्यार्धेन तेषां भूमाववगाढत्वं निर्दिशति—प्रथमो मानुषोत्तर उच्चत्वचतुर्थांशं पृथिव्यामवगाढो भूमौ प्रविष्ट इत्यर्थः । यथा क्रोशोत्तराणि त्रिंशदधिकानि चतुःशतयोजनानि ४३० क्रोश १ । शेषौ कुण्डलरुचकपर्वतौ योजनानां सहस्रं सहस्रं भूमाववगाढौ स्तः ॥५५॥ अथैतेषां पर्वतानामधोमध्योर्ध्वभागेषु विष्कम्भमानमाह—

**भुवि दससय बावीसा मज्झे सत्त य सया उ तेवीसा। सिहरे चत्तारि सया चउवीसा मणुअकुण्डलगा॥५६॥**

प्रथमपर्वतद्वयस्य विष्कम्भं कथयति 'भुवि' इति समभूभागापेक्षया द्वात्रिंशत्यधिकं सहस्रं योजनानि १०२२ विस्तारः। सर्वमध्ये त्रयोविंशत्यधिकानि सप्त शतानि विस्तारः ७२३। तथा शिखरे इति सर्वोपरितनभागे चत्वारि शतानि चतुर्विंशत्यधिकानीति मानुषोत्तरकुण्डलयोर्विस्तारः ॥ ५६ ॥ अथ रुचकस्य त्रिधापि विस्तारमेताभ्यामन्यमेवाह—

**दससहसा बावीसा भुवि मज्झे सगसहस्स तेवीसा[२]। सिहरे चउरो सहसा [३]चउवीसा रुअगसेलंमि ॥ ५७॥**

द्वाविंशत्यधिका दश सहस्राः १००२२ 'भुवि' इति समभूभागे विस्तारः। सर्वमध्ये सप्त सहस्रास्त्रयोविंशत्यधिकाः ७०२३। शिखरे सर्वोपरितनभागे चत्वारः सहस्राश्चतुर्विंशत्यधिका योजनानां ४०२४ विस्तारो रुचकशैले। एतेन पूर्वोक्तपर्वतद्विकयोः शतस्थानेऽत्र सहस्रमवसेयम् ॥ ५७ ॥ अथ पूर्वोक्तद्वितयाभ्यां रुचकपर्वतशिखरे विशेषमाह—

**रुअगे सिहरे चउदिसि बिअसहसेगिगचउत्थअट्ठट्ठ।विदिसिचऊ इअ चत्ता दिसिकुमरी कूड सहसंका ५८**

वलयाकारस्य रुचकशैलस्य चतुर्विंशत्यधिकचतुःसहस्रविस्तीर्णे शिखरे चत्वारो भागा विधीयन्ते। तत्रैकैकस्मिन् भागे षड्योजनाधिकः सहस्रो भवति। तत्र प्रथमं भागं मुक्त्वा द्वितीये भागे पूर्वादिचतुर्दिक्ष्वेकैकं कूटमस्ति सहस्राङ्कम्। तथा रुचकशैलशिखरस्य षडधिकसहस्रमिते चतुर्थे भागेऽष्टावष्टौ कूटानि सन्ति, परं तानि दिक्कुमारीणां संबन्धीन्येव ज्ञेयानि। अन्यथा तन्मध्यवर्तिसिद्धकूटयुतानि प्रतिदिशं नव नव कूटानि सन्तीति वृद्धाः। सिद्धकूटे च सिद्धायतनं जिनप्रतिमालङ्कृतम्। तथा तस्मिन्नेव चतुर्थे भागे विदिक्षु चत्वारि कूटानि सन्ति सर्वाणि सहस्राङ्कानि। कोऽर्थः ? एकसहस्रयोजन-

मूलविस्ताराणि, सप्तशतं मध्यविस्ताराणि, पञ्चशतं शीर्षविस्ताराणि, एकसहस्रोच्चानि । तेषु सर्वेषु कूटेषु भवनपतिजातीयचत्वारिंशद्दिक्कुमार्यः सपरिवारा वसन्ति। तत्र पूर्वस्यामष्टौ यानि कूटानि, तेषां नामानि स्थानाङ्गोक्तान्यमूनि । यथा—रिट्ठ- १ तवणिज्ज २ कंचण ३ रयदिसा ४ सोत्थिए ५ पलंबेय ६ । अंजण ७ अंजणपुलए ८ रूयगस्स पुरच्छिमे कूडा ॥ १ ॥" तेष्वेतन्नाम्न्यो दिक्कुमार्यो वसन्ति । यथा—"नन्दोत्तरा १ तथा नन्दा २ सुनन्दा ३ नन्दिवर्धिनी ४ । विजया ५ वैजयन्ती च ६ जयन्ती ७ चापराजिता ८॥२॥" दक्षिणस्यामष्टौ कूटानि । यथा—"कणए १ कंचण २ पउमे ३ नलिणे ४ ससी ५ दिवायरे ६ । वेसमणे ७ वेरुलिए ८ रुअगस्स य दाहिणे कूडा ॥ ३ ॥" तत्रेमा देव्यः—"समाहारा १ सुप्रदत्ता २ सुप्रबद्धा ३ यशोधरा । लक्ष्मीवती ५ शेषवती ६ चित्रगुप्ता ७ वसुन्धरा ८ ॥" पश्चिमायामष्टौ कूटानि, यथा—"सुत्थिए १ अ सुहए २ हिमवंते ३ मन्दरे ४ तहा रुअगे ५ रुअगुत्तमे अ ६ चंदे ७ अट्ठमे अ सुदंसणे ८ ॥ ५ ॥" तत्र देव्यो यथा—"इलादेवी १ सुरादेवी २ पृथ्वी ३ पद्मावती ४ तथा । एकनाशा ५ नवमिका ६ भद्रा ७ ऽशोका ८ च नामतः ॥ ६ "अथोत्तरस्यामष्टौ कूटानि, यथा—"रयणे १ रयणुच्चयए २ सवरयणे ३ रयणसंचए ४ विजए ५ वेजअंते ६ अ जयंते ७ अपराजिए ८ ॥ ७ ॥" तत्र देव्यो यथा—"अलम्बुसा १ मितकेशी २ पुंडरीका ३ च वारुणी ४ । हासा ५ सर्वप्रभा ६ श्री ७ र्ह्री ८ ह्यष्टावुत्तरसंस्थिताः ॥ ८ ॥" तथा—चित्रा १ चित्रकनका २ सुतेजाः ३ सुदामिनी ४ एताश्चतस्रोपि विदिक्कूटनिवासिन्यः । तथा—रूपा १ रूपांशिका २ सुरूपा ३ रूपकावती ४ चेति चतस्रो रुचकमध्यवासिन्यः ॥ ५८ ॥ अथैतेषां पर्वतानां पुनर्विशेषमाह—

पढमो सीहनिसाई अद्धजवनिभो अ चउदिसिं सिहरे। पन्नाई चउ जिणगिहो सयाइ चउचेइआ दुन्नि ५९

प्रथमो मानुषोत्तराभिधः सिंहवन्निषीदतीत्येवंशीलः सिंहनिषादी। यथा सिंहोऽग्रेतनं पादयुग्ममुत्तभ्य पश्चात्तनं पादयुगं संकोच्य युताभ्यां मनाग् लग्नो निषीदति, तथा निषण्णश्च शिरःप्रदेशे उन्नतः, पश्चाद्भागे तु निम्नो निम्नतरः। एवं मानुषोत्तरोऽपि जम्बूद्वीपदिशि च्छिन्नटङ्कः सर्वोन्नतः समभित्त्याकारः पश्चाद्भागे तूपरितनभागादारभ्य प्रदेशप्रदेशहान्या निम्नो निम्नतरः। अथवाऽर्धयवनिभश्च, अपगतं अर्धं यस्यासौ अपार्धः, स चासौ यवो राशिश्च अपार्धयवराशी, तयोरिव यत्संस्थानं तेन संस्थितः। यथा यवो यवराशिर्वा धान्यानामपान्तराल ऊर्ध्वाधोभागेन च्छिन्नो मध्यभागे छिन्नटङ्क इव भवति। बहिर्भागे तु शनैः शनैः पृथुत्वबुद्ध्या निम्नो निम्नतरः। तद्वदेष शैलोऽपि। पुनः किंलक्षणः? चतुर्दिक्षु शिखरे पञ्चाशदादिचतुर्जिनगृहः। कोर्थः? पञ्चाशद्दीर्घाणि पञ्चविंशतियोजनपृथुलानि षट्त्रिंशदुच्चानि चत्वारि शाश्वतानि जिनगृहाणि यत्र स तथा। तथा "सयाइ" इति शतादिचतुश्चैत्यकौ शतयोजनदीर्घाणि पञ्चाशत्पृथुलानि द्वासप्ततियोजनोच्चानि चतुर्दिक्षु प्रत्येकं चत्वारि चैत्यानि यत्र तौ जिनभवनालङ्कृतौ इत्यर्थः। "दुन्नि" इति प्राकृतत्वात् द्वौ कुण्डलरुचकाह्वौ शिखरिणौ स्तः॥५९॥

व्याख्यातं वलयद्वारं नवमं॥ अथ नन्दीश्वरद्वारं दशममाह—

तेवट्ठं कोडिसयं लक्खा चुलसीइ वलयविक्खंभो। नंदिसरट्ठमदीवो चउदिसि चउअंजणा मज्झ॥६०॥

एकं कोटिशतं त्रिषष्टिकोट्यश्चतुरशीतिलक्षाश्च १६३८४००००० इत्येतावद्योजनप्रमाणवलयविष्कम्भो जम्बूद्वीपादष्टमः सकलसुरासुरविसरानन्दी उदारजिनमन्दिरोद्यानपुष्करिणीपर्वतप्रभृतिपदार्थसार्थसमुद्भूतया विभूत्या चेश्वरः सान्वयनामा

नन्दीश्वरद्वीपोऽस्ति। तस्य वलयसर्वमध्यभागे पूर्वादिदिक्षु एकैकस्यां दिशि एकैकभागेन चत्वारोऽञ्जनगिरयः सन्ति। तन्नामानि यथा—पूर्वस्यां देवरमणाभिधः १, दक्षिणस्यां नित्योद्द्योतः २, अपरस्यां स्वयंप्रभः ३, उत्तरस्यां रमणीय इति ४ ॥ ६० ॥ अथाञ्जनगिरीणां स्वरूपमाह—

**गोपुच्छा अंजणमय चुलसीसहसुच्च सहसमोगाढा॥समभुवि दससहसपिहू सहसुवरिं तेसिं चउदिसिसु६१**

ऊर्ध्वीकृतगोपुच्छसंस्थानसंस्थिताः। यथा धेनोः पुच्छं मूले स्थूलं तदनु लघु लघुतरं, तथैतेऽपि चत्वारोऽञ्जनपर्वता मूले सविस्तरा उपरि च स्तोका इत्यर्थः। सर्वात्मनाऽञ्जनरत्नमयाः। तथा ते चत्वारोऽपि चतुरशीतियोजनसहस्राण्युच्चा बहिः। एकं योजनसहस्रं भूमाववगाढाः। तथा समभूमौ योजनदशसहस्रविष्कभाः। तदनन्तरं च परिहीयमाणा उपर्येकसहस्रविस्तीर्णाः। तेषां परिधिर्मूले एकत्रिंशद्योजनसहस्राणि षट् च शतानि त्रयोविंशत्यधिकानि ३१६२३ किञ्चिन्न्यूनानि। शिखरे च परिधिस्त्रीणि सहस्राणि द्विषष्ट्यधिकं योजनशतं ३१६२। "तेसिं इति" प्राकृतत्वात् पञ्चम्यर्थे षष्ठी, तेभ्यश्चतसृषु दिक्षु ॥ ६१ ॥ किमस्ति ? इत्याह—

**लक्खंतरिआ चउ चउ वावीदस दस य जोअणुविद्धा। लक्खं दीहपिहुच्चे तम्मज्झे दहिमुहा सोल ॥ ६२॥**

लक्षान्तरिता इति तेभ्योऽञ्जनगिरिभ्यश्चतुर्दिक्षु प्रत्येकं योजनलक्षं गत्वा चतस्रश्चतस्रो वाप्यः सन्ति। तन्नामान्यमूनि—पूर्वदिग्भागी योऽञ्जनगिरिस्तस्माल्लक्षयोजनानि गत्वा पूर्वस्यां नन्दोत्तरा १, दक्षिणस्यां नन्दा २, अपरस्यामानन्दा ३, उत्तरस्यां नन्दिवर्धना ४। तथा दक्षिणस्यां योऽञ्जनगिरिस्तस्माच्च पूर्वस्यां भद्रा ५, दक्षिणस्यां विशाला ६, अपरस्यां

कुमुदा ७, उत्तरस्यां पुण्डरीकिणी ८। तथा पश्चिमदिग्भागेऽञ्जनगिरिस्तस्मात्पूर्वस्यां नन्दिषेणा ९, दक्षिणस्याममोघा १०, अपरस्यां गोस्तुभा ११, उत्तरस्यां सुदर्शना १२। तथोत्तराञ्जनगिरेः पूर्वस्यां विजया १३, दक्षिणस्यां वैजयन्ती १४, अपरस्यां जयन्ती १५, उत्तरस्यां अपराजिता १६। एता षोडश वाप्यः प्रत्येकं दश दशयोजनोद्वेधा उण्डा इत्यर्थः। निर्मलशीतलसुस्वादुजलसंपूर्णाः प्रायो मत्स्यादिजलचररहिताः। दीर्घपृथुत्वाभ्यामिति विष्कम्भायामाभ्यां योजनलक्षप्रमाणा वृत्ता जम्बूद्वीपपरिधियुताः प्रत्येकं चतसृषु दिक्षु वाप्यो नानामणिमयसोपानमणिमयानेकस्तम्भसंनिविष्टैर्विविधशालभञ्जिकाविलासोत्तुङ्गतोरणैर्युक्ताः। तथा पूर्वादिदिक्क्रमेणाशोक १ सप्तच्छद २ चम्पक ३ चूतवनैः ४ प्रत्येकं परिक्षिप्ताः। सर्वाणि चतुःषष्टिवनानि। तासां सर्वासां षोडशानां वापीनां मध्ये बहुमध्यदेशभागे दधिमुखनामानो महीधराः षोडश सन्ति ॥६२॥

ते च दधिमुखाः कीदृशाः? इत्याह—

**सहसोगाढा चउसट्ठिसहस्सुच्चा दससहस्स पिहुला य। सव्वत्थ समा पल्लयसरिसा रुप्पामया सव्वे ॥ ६३ ॥**

ते च दधिमुखपर्वता एकैकं योजनसहस्रं भूमावधोऽवगाढाः। बहिश्चतुःषष्टियोजनसहस्राणि उच्चाः। दशसहस्रयोजनानि सर्वत्र पृथुलाः। तेनोर्ध्वमध्याधस्तुल्यविस्ताराः। अत एव पल्यसदृशाः पल्यको धान्यकोष्ठकः तत्संस्थानसंस्थिताः। तथा रूप्यात्मकाः सर्वात्मना श्वेता इत्यर्थः। वापीनामनुसारेण तेषां षोडशदधिमुखानां नामान्यप्यत्रसेयानि ॥ ६३ ॥

अथाञ्जनदधिमुखपर्वतेषु विशेषमाह—

**अंजणदहिमुहचेइअ वीसं चउदार दीहपिहुउच्चा। सयपन्ना बावत्तरि जोअण ठाणंगि जिअभिगमे ॥ ६४ ॥**

अञ्जनपर्वतेषु दधिमुखेषु च षोडशसु प्रत्येकमेकैकचैत्यसद्भावात् सर्वाणि चतुर्द्वाराणि विंशतिश्चैत्यानि सन्ति । अन्येषां तु मते द्वात्रिंशद्रतिकरपर्वतेष्वेकैकचैत्यसद्भावात् द्वापञ्चाशच्चैत्यानि तानि सिद्धायतनानि पूर्वपश्चिमतः शतयोजनदीर्घाणि दक्षिणोत्तरतः पञ्चाशद्योजनविस्तीर्णानि द्वासप्ततियोजनोच्चानि । प्रतिद्वारं च मुखमण्डप १ प्रेक्षामण्डप २ चैत्यस्तूप ३ चैत्यवृक्ष ४ महेन्द्रध्वज ५ पुष्करिण्यः ६ एते षट् पदार्थाः सन्ति । मुखमण्डपप्रेक्षामण्डपौ शतयोजनदीर्घौ, पञ्चाशदा (द्यो्जना) यामौ, षोडशयोजनोच्चौ । चैत्यस्तूपं षोडशयोजनायामविस्तारम् । चैत्यवृक्षमहेन्द्रध्वजयोः पीठिके अष्टयोजनायामविस्तारे । ता अपि पुष्करिणीवाप्यो योजनशतायामविस्ताराः, दशयोजनोद्वेधाः । तासूपरितनवापीषु प्रज्ञापनातृतीयपदवृत्त्युक्तत्वेन मत्स्याद्याः सन्ति । चैत्यवृक्षेन्द्रध्वजयोः प्रमाणं जीवाभिगमोपाङ्गादवधार्यम् । इति विंशतिसिद्धायतनस्वरूपं स्थानाङ्गे जीवाभिगमे चोक्तमस्ति ॥ ६४ ॥ अथ रतिकरपर्वतवक्तव्यतामाह—

**नंदी विदिसिं चउरो दसिगसहस्सापिहुच्चपाओहे । झल्लरिसरिस अचेइअ रइकर ठाणंगि सुत्तंमि ॥६५॥**

नन्दीश्वरद्वीपे विदिक्षु चत्वारः एव रतिकराः सन्ति । तेऽपि चैत्यरहिताः सिद्धायतनवियुक्ताः । प्रवचनसारोद्धारादिग्रन्थमते तु चतसृणां वापीनां अन्तरालेषु द्वौ द्वौ रतिकरौ स्तः । यादृशमेकस्यां दिशि तादृशं शेषासु तिसृषु दिक्षु सर्वे द्वात्रिंशद्रतिकराः सिद्धायतनसंयुक्ताश्च । अथ चतुर्णां द्वात्रिंशतो वा प्रमाणमेकमेवाह—"दसि" इति दशसहस्रं पृथुलाः, दशसहस्रं विस्ताराः वृत्ता एकसहस्रमुच्चाः, सहस्रस्य पादो भूमाववगाढाः, सार्धशतद्वययोजनानि भूमौ प्रविष्टा इत्यर्थः । अध उपरि च दशसहस्रयोजनानां पृथुलत्वेन सर्वत्र समाः । ततो झल्लरिवादित्रविशेषस्तत्तुल्याकारा वृत्ता इत्यर्थः । इति सर्वे

स्थानाङ्गसूत्रे प्रोक्तम् ॥ ६५ ॥ अथोक्तस्थानादन्येषामूर्ध्वाधोलोकस्थसिद्धायतनानामुच्चत्वादिप्रमाणमाह—

**नंदीसर व उड्ढं पन्नासाई य असुरजिणभवणा । तयअद्धं नागाइसु वंतरनगरेसु य तय अद्धं ॥ ६६ ॥**

नन्दीश्वरचैत्यवत् देवलोकसिद्धायतनानि शतयोजनदीर्घाणि, पञ्चाशद्विस्तीर्णानि, द्वासप्ततिरुच्चानि, परं त्रिद्वाराणि । तथाऽसुरनिकाये जिनभवनानि तदर्धप्रमाणानि ५०–२५–३६ । तथा नागादिषु नवनिकायेषु ततोऽप्यर्धमानानि, यथा–२५–१२॥–१८ । तथा व्यन्तरनगरेषु ततोऽप्यर्धमानानि १२॥–६।–९ । तथा ज्योतिष्केषु तिर्यग्लोकेषु च विविधप्रमाणानि ॥ ६६ ॥ इत्युक्तं नन्दीश्वरद्वीपद्वारं दशमम् ॥ १० ॥ अथ गृहिक्रियाद्वारमेकादशम्—

**मन्नह जिणाण आणं मिच्छं परिहरह धरह सम्मत्तं । छव्विहआवस्सयंमि अ उज्जुत्ता होइ पइदिअहं ॥ ६७ ॥**
**पव्वेसु पोसहव्वयं दाणं सीलं तवो अ भावो अ । सज्झायं नमुक्कारो परोवयारो अ जयणा य ॥ ६८ ॥**
**जिणपूआ जिणथुणणं गुरुथुइ साहंमिआण वच्छल्लं । ववहारस्स य सुद्धी रहजत्ता तित्थजत्ता य ॥ ६९ ॥**
**संघोवरि बहुमाणो *धम्मिअमित्ती पभावणा तित्थे + । नवखित्ते धणववणं पुत्थयलिहणं विसेसेणं ॥ ७० ॥**
**परिगहमाणा ऽभिग्गहे इक्कारससड्ढपडिमफासणया । सव्वविरई मणोरह एमाई सड्ढकिच्चाइं ॥ ७१ ॥**

स्पष्टम् ॥ ६७–६८–६९–७०–७१ ॥ अथ चतुर्दशगुणस्थानद्वारं द्वादशमाह—

---

* "पुत्थयलिहणं' इति प्रत्यन्तरे । + इतः परं "सामाइयमुभयकालंमि" इति पुस्तकान्तरे ॥

अह चउदससु गुणेसुं कालपमाणं भणामि दुविहंपि १।न मरइ मरइ २ व जेसुं सह परभवु जेहिँ ३ नो जेहिं

तत्रापि प्रतिद्वाराणि चत्वारि। तद्यथा—अथ चतुर्दशगुणस्थानकेषु "दुविहंपि" इति द्विविधमपि जघन्यमुत्कृष्टं च स्थितिकालप्रमाणम् १। तथा येषु गुणस्थानकेषु वर्तमानो जीवो म्रियते न म्रियते वेति तत्स्वरूपम् २। तथा यैर्गुणस्थानैः सह जीवः परभवगामी स्यात्, यैश्च न स्यात् ३। तथा गुणस्थानकानामल्पबहुत्वम् ४। एतद्गुणस्थानप्रतिद्वारचतुष्कं भणिष्यामि ॥ ७२ ॥ तत्र प्रथमं प्रतिद्वारं व्याचिख्यासुर्मिथ्यात्वस्थितिकालभेदानाह—

मिच्छं अणाइऽनिहणं अभव्वे भव्वे वि सिवगमाजुग्गे ।सिवगइ अणाइसंतं साईसंतंपि तं एवं ॥ ७३ ॥

अनाद्यनन्तः १, अनादिसान्तः २, साद्यनन्तः ३ सादिसान्तः ४ एतेषु चतुर्षु भेदेषु मिथ्यात्वमनाद्यनिधनमित्यनाद्यनन्तं अभव्ये भवति। भव्येऽपि शिवगमायोग्ये मुक्तिगमनानर्हे। एतावता भव्याभव्येऽप्यनाद्यनन्तमिति प्रथमो भङ्गः१। तथा मोक्षगमने च योग्यस्य भव्यस्यानादिसान्तं आदिरहितमन्तमहितमित्यर्थः। यथा कश्चिज्जीवः सम्यक्त्वं प्राप्यावान्त्वैव मोक्षं याति, मरुदेवीभगवतीवदिति द्वितीयो भङ्गः २। कस्यचिन्मिथ्यात्वं सादिसान्तमपि, यथा यः सम्यक्त्वं लब्ध्वा पुनर्मिथ्यात्वे याति, पुनरपि सम्यक्त्वं प्राप्य मोक्षं गच्छति. श्रीमहावीरादिवदिति चतुर्थो भङ्गः ३। साद्यनन्ताभिधस्तृतीयो भङ्गो मिथ्यात्वे नास्ति ॥ ७३ ॥ तत्र सादिसान्ताभिधस्तृतीयो भङ्गो मिथ्यात्वे कियत्कालं तिष्ठतीत्याह—

लहु अंतमुहू गुरुअं देसूणमवड्ढपुग्गलपरट्टं । सासाणं लहु समओ आवलिछक्कं च उक्कोसं ॥ ७४ ॥

लघु इति सर्वथा जघन्यं तदान्तर्मुहूर्तं तिष्ठति। गुरुकमुत्कृष्टं देशोनमपार्धपुद्गलपरावर्तं यावन्मिथ्यात्वं तिष्ठति १।

तथा सास्वादनं नाम द्वितीयं गुणस्थानं जघन्यं समयः, उत्कृष्टं त्वावलिकाषट्कं यावत्तिष्ठति नाधिकम् २ ॥ ७४ ॥

**अजहन्नमणुक्कोसं अंतमुहू मीसगं अह चउत्थं । समहिअतित्तीसयरे उक्कोसं अंतमुहु लहुअं ॥ ७५ ॥**

तृतीयं मिश्रगुणस्थानं अजघन्योत्कृष्टमसंख्यातसमयात्मकमेकमन्तर्मुहूर्तं तिष्ठति ३ । अथ चतुर्थं गुणस्थानमविरताख्यमुत्कृष्टं समधिकत्रयस्त्रिंशत्सागरोपमस्थितिकम् । भावनात्र मनुष्यायुरधिकमर्वार्थसिद्धविमानस्थित्यपेक्षयाऽवधार्यम्(र्या) । यत्तु क्षायोपशमिकस्य सम्यक्त्वस्य "साहिअतित्तीसायर खइअं दुगुणं खउवसम्मं" इत्यत्र षट्षष्टिसागराधिकस्थितिरुक्ता, तत् सति सम्यक्त्वेऽपि देशविरत्यादिगुणस्थानान्तरसंक्रमणेन भाव्यम् । चतुर्थगुणस्थानकस्य जघन्या स्थितिरन्तर्मुहूर्तप्रमाणा ४ ॥ ७५ ॥

**देसूणपुव्वकोडी गुरुअं लहुअं च अंतमुहु देसं । छट्ठाइगारसंता लहु समया अंतमुहु गुरुआ ॥ ७६ ॥**

तथा पञ्चमदेशविरतिगुणस्थानकस्योत्कृष्टा स्थितिरष्टाभिर्वर्षैर्न्यूना पूर्वकोटिः । कश्चित्पूर्वकोट्यायुरष्टवर्षानन्तरं देशविरतिं प्रतिपद्यते । जघन्या चान्तर्मुहूर्तमाना ५ । तथा षष्ठाद्यानि एकादशान्तानि प्रमत्ता ६ प्रमत्त ७ निवृत्त्य ८ निवृत्ति ९ सूक्ष्मसंपरायो १० पशान्तमोहनामकानि ११ जघन्यतः समयस्थितिकानि । स च समयो भवपरावृत्त्या लभ्यते । यदेतेषामेकसमयं श्रेण्यारोहावरोहयोः प्रतिपद्यानन्तरं मरणसंभवात् । उत्कृष्टतश्चैतान्यन्तर्मुहूर्तप्रमाणानि ॥ ७६ ॥

**अंतमुहुत्तं एगं अलहुक्कोसं अजोगिखीणेसु । देसूणपुव्वकोडी गुरुअं लहु अंतमुहु जोगी ॥ ७७ ॥**

जघन्योत्कृष्टमन्तर्मुहूर्तमेकमयोगि १४ क्षीणमोहयोः १२ स्थितिः । तथा सयोगिकेवलिगुणस्थानं १३ उत्कृष्टतो नवभि

वर्षैर्न्यूना पूर्वकोटिः जघन्यतश्चान्तर्मुहूर्तम् ॥ ७७ ॥ अथ द्वितीयं प्रतिद्वारमाह—

**मीसे खीणसजोगी न मरंत मरंतेगारसगुणेसु। तह मिच्छसाणअविरइ सहपरभवगा न सेसट्ठा ॥७८॥**

मिश्रे तृतीये गुणस्थाने, द्वादशे क्षीणमोहे, त्रयोदशे सयोगिनि च वर्तमानो जीवो न म्रियते। अपरेष्वेकादशसु मिथ्यात्व १ सास्वादना २ ऽविरति ३ देशविरति ४ प्रमत्ता ५ ऽप्रमत्त ६ निवृत्त्य ७ ऽनिवृत्ति ८ सूक्ष्मसंपरायो ९ पशान्तमोहा १० योगिकेवलिगुणस्थानकेषु वर्तमानो जीवो म्रियते। अथ गाथान्त्यार्धेन तृतीयं द्वारमाह—"तह" इति तथा मिथ्यात्वसास्वादनाविरतिगुणस्थानत्रयेण सह जीवाः परभवगामिनो भवन्ति जीवेन सहितानि परभवं गच्छन्तीत्यर्थः। उक्तव्यतिरेकशेषगुणस्थानस्था जीवा न परभवगामिनः मिश्रदेशविरतिप्रमत्ताप्रमत्तनिवृत्त्यनिवृत्तिसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहसयोग्ययोगिगुणस्थानकानि लात्वा परभवं न व्रजन्तीत्यर्थः ॥ ७८ ॥ अथ चतुर्थमल्पबहुत्वाख्यं द्वारमाह—

**उवसंतिजिणा थोवा संखिज्जगुणा उ खीणमोहिजिणा।सुहुम निअट्टिअनिअट्टि तिन्नि वि तुल्ला विसेसहिआ**

गुणस्थानस्थाने तद्वर्तिन एव ग्राह्याः, आधाराधेयोपचारात्। सर्वस्तोका उपशान्तिजिना उपशान्तमोहवर्तिनः, उत्कर्षत एकसमयप्रतिपद्यमानकाश्चतुष्पञ्चाशतो लभ्यमानत्वात्। तेभ्यः क्षीणमोहाः संख्येयगुणाः तेषां प्रतिपद्यमानकानामेकसमयेऽष्टोत्तरशतसंख्यत्वात्। एतदुत्कृष्टपदापेक्षं, अन्यथा विपर्ययोऽपि, यथा—सर्वस्तोकाः क्षीणमोहाः, तेभ्य उपशान्तमोहाः संख्येयगुणा इत्यपि। तेभ्यः सूक्ष्मानिवृत्त्यपूर्वकरणास्त्रयोऽपि विशेषाधिकाः। स्वस्थाने मिथस्तुल्याः ॥ ७९ ॥

**जोगि अपमत्त इयरे संखगुणा देस सासणा मिस्सा। अविरय अजोगि मिच्छा चउर असंखा दुवे णंता८०॥**

एतेभ्यः सयोगिकेवलिनः संख्येयगुणाः, कोटीपृथक्त्वेन तेषां प्राप्यमाणत्वात् । तेभ्योऽप्रमत्ताः संख्येयगुणाः, कोटीसहस्रपृथक्त्वेन प्राप्यमाणत्वात् । तेभ्य इतरे प्रमत्ताः संख्येयगुणाः, प्रमादवतां बहूनां बहुकालं च लभ्यमानत्वात् । तेभ्यो देशविरताः सास्वादनाः मिश्रा अविरताश्च प्रत्येकमसंख्येयगुणाः, देशविरतिभाजां तिरश्चामसंख्येयत्वात् । सास्वादनास्तु-कदाचिन्न भवन्त्येव । यदि च स्युस्तदा जघन्यत एको द्वौ वा उत्कर्षतो देशविरतेभ्योऽसंख्येयगुणाः । तेभ्यो मिश्रा असंख्येयगुणाः, सास्वादनस्य षडावलिकारूपाद्धाया आन्तर्मौहूर्तिकमिश्राद्धायाः प्रभूतत्वात् । तेभ्योऽविरता असंख्येयगुणाः-तेषां चतुर्गतिकानामपि भावात् । "अजोगि" इति अविरतेभ्योऽयोगिनो भवस्थाभवस्थभेदभिन्ना अनन्तगुणाः, सिद्धाना, मानन्त्यात् । तेभ्यो मिथ्यादृष्टयोऽनन्तगुणाः, तत्रानन्तवनस्पतिकायप्रक्षेपात्, तेषां मिथ्यादृष्टित्वात् । गतं चतुर्थं प्रतिद्वारं, तेन कथनेन द्वादशं गुणस्थानद्वारं व्याख्यातम् ॥ ८० ॥ अथोपसंहारमाह—

**चउदसगुणसोवाणे इअ दुहरोहे कमेण रुहिऊणं । नरसुरमहिंदवंछियसिवपासाए सया वसह ॥ ८१ ॥**

इत्यमुना प्रकारेण अहो भव्याश्चतुर्दशगुणस्थानरूपसोपानानि गुरुकर्मभिर्दुरारोहाणि अनुक्रमेणारुह्य नरसुरमहेन्द्रैर्वाञ्छिते समीहिते शिवप्रासादे मोक्षमन्दिरे सदा वसत निवासं कुरुत । अथवा नरसुरैः श्रीमहेन्द्रसिंहसूरिभिश्च वाञ्छिते । एतेन ग्रन्थकर्त्रा स्वं नामापि सूचितम् ॥ ८१ ॥

• श्रीतपगणगगनाङ्गणसूरिश्रीविजयदेवसूरीणाम् । विनियोगाद्वृत्तिरियं विनिर्मिता विनयकुशलेन ॥ १ ॥

---

श्रीआत्मानन्द-ग्रन्थ-रत्नमाला-एकोनविंशं रत्नम् ( १९ )

श्रीसमयसुन्दरगणिविरचितस्वोपज्ञावचूरिसहितं

# अल्पबहुत्वगर्भितं श्रीमहावीरस्तवनम् ।

तथा

## सावचूरिकं महादण्डकस्तोत्रापरपर्यायाल्पबहुत्वविचारस्तवनम् ।

श्रीमतीसाध्वीज्ञानश्रीसदुपदिष्ट-श्रीअणहिलपुरपत्तनवास्तव्य-श्राविका-चंचलबाई-

तथा-श्रीमालिज्ञातीय-मोहनलालात्मज-मणिलालभार्या-बाई रुक्ष्माणी द्रव्यसाहाय्येन

प्रकाशयित्री-श्रीआत्मानन्दसभा-भावनगर ।

इदं पुस्तकं मुम्बय्यां **वल्लभदास-त्रिभुवनदास गांधी** सेक्रेटरी **जैन आत्मानन्दसभा भावनगर** इत्यनेन

**निर्णयसागर**मुद्रालये कोलभाटवीथ्यां २३, तमे गृहे रा. य. शेडगे द्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४०. आत्मसंवत् १८. विक्रमसंवत् १९७०.

## ॥ प्रस्तावना ॥

इदमल्पबहुत्वगर्भितं त्रयोदशगाथात्मकं श्रीमन्महावीरस्वामिविज्ञप्तिरूपस्तवनं जैनागमपारावारपारीणपूज्यपादश्रीमच्छ्यामाचार्याचार्यपुङ्गवसङ्कलितप्रज्ञापनोपाङ्गतृतीयपदप्रथमद्वारात्समुद्धृत्य संदृब्धमिति पीठिकावलोकनेन स्फुटमवगम्यते । अस्य प्रणेतारोऽष्टलक्षीकल्पलतादिभूरितरग्रन्थग्रथनपटुतरमतिविभवाः श्रीबृहत्खरतरगच्छाधीशश्रीमज्जिनचन्द्रसूरिशिष्यसकलचन्द्रगणिशिष्यवाचनाचार्यश्रीसमयसुन्दरगणयः, इत्यस्यावसानगाथातदवचूरिनिरीक्षणेन प्रकटमेव प्रतिभाति । एभिरेव वाचंयमचूडामणिभिरेतत्करणे प्रयोजनमप्यस्य प्रान्ते प्रदर्शितमेव । एतेषां सत्तासमयस्तु जिनशासनेऽस्मिन् विक्रमार्कीयसप्तदशशताब्द्यां सुप्रसिद्ध एव, इत्यतस्तत्तद्ग्रन्थप्रशस्तिगतानि प्रमाणान्यपि नोपन्यस्तानि ।

अस्मिन्नल्पबहुत्वविचारगर्भितवीरस्तुतौ सिद्धान्तस्वापतेयसारैः स्तुतिकारैः प्रथमतो नवसु गाथासु सामान्येन सप्तदशभेदभिन्नानां जीवानां पूर्वादिदिशः समाश्रित्याल्पबहुत्ववर्णनम्, दशमैकादशगाथयोस्तु पुद्गलानां षट्सु दिक्ष्वल्पबहुत्वनिरूपणम्, द्वादशत्रयोदशगाथयोः पुनः श्रीमन्महावीरजिनविज्ञप्त्यादिकरणं इत्येते विषयाः सप्रपञ्चं प्रपञ्चिताः सन्ति ।

एतदल्पबहुत्वगर्भितश्रीमहावीरस्तवनपुस्तकगवेषणपरायणेन मया भूयो भूयः प्रायतिषि परं केवलं पत्तनस्थतपगच्छचित्कोषसत्कं श्रेष्ठि–लेहेरचन्द्र–हालाभाई–द्वारा नातिशुद्धमेकं पुस्तकं समुपलब्धम्, एतदाधारेणैव संशोधितं च ।

द्वितीयस्यास्य महादण्डकस्तोत्रापरपर्यायाल्पबहुत्वविचारस्तवनस्य अवचूर्याश्च के परोपकृतिकर्मकर्मठाः व्रतिनेतारः प्रणेतारः? इत्येतद्विषयनिर्णयस्तु कर्तुं न पार्यते, अत्र क्वापि तेषामभिधेयादिकस्यानुपलम्भात्। परं "संव० १४८६ सोमवारे" इति लिखितपुस्तकादर्शदर्शनेन नार्वाचीनमिति निश्चीयते।

संशोधितेऽप्यत्र निबन्धे मतिमान्द्यादक्षरयोजकदोषाद्वा यत्र क्वचनाशुद्धिः कृता जाता वा भवेत् तत्र संशोधनीयं विपश्चिदपश्चिमैरिति प्रार्थयते प्रकल्पिताञ्जलिः—

**प्रवर्तकश्रीमत्कान्तिविजयपादपाथोजपरागः**

**चतुरविजयो मुनिः।**

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिभ्यो नमः ॥

श्रीसमयसुन्दरोपाध्यायविरचितस्वोपज्ञावचूरिसहितं

# अल्पबहुत्वगर्भितं श्रीमहावीरस्तवनम् ।

श्रीप्रज्ञापनातृतीयपदप्रथमद्वारं हृदि निधाय सामान्यजीवादिसप्तदशभेदभिन्नानां जीवानां दिश आश्रित्य स्वोपज्ञाल्पबहुत्वस्तवस्य वृत्तिर्विधीयते । तत्रादौ येन भगवता इदं जीवानामल्पबहुत्वं प्ररूपितं तं श्रीवर्द्धमानं स्तुवन्नाह—

**जेण परूवियमेयं दिसाणुवाएण अप्पबहुठाणं । जीवाण बायराण य थुणामि तं वद्धमाणजिणं ॥१॥**

अहं तं वर्द्धमानजिनं श्रीवीरतीर्थङ्करं स्तवीमि । तं कं? येन भगवता एतद्वक्ष्यमाणं जीवानामल्पबहुत्वस्थानं प्ररूपितम् । केन प्रकारेण? "दिसाणुवाएण" दिशामनुपातो दिगनुसरणं तेन दिशोऽधिकृत्य च । तात्पर्यार्थः—इह दिशः प्रथमे आचाराख्येऽङ्गेऽनेकप्रकारा व्यावर्णितास्तत्रेह क्षेत्रदिशः प्रतिपत्तव्याः, तासां नियतत्वादितरासां च प्रायोऽनवस्थितत्वादनुपयोगित्वाच्च क्षेत्रदिशां च प्रभवस्तिर्यग्लोकमध्यगतादष्टप्रदेशकाद्रुचकाद्विज्ञातव्याः । किंविशिष्टानां जीवानां? बादराणां नतु सूक्ष्माणां, सूक्ष्माणां सर्वलोकापन्नानां प्रायः सर्वत्रापि समत्वात् । बादरेष्वपि मध्ये सर्वबहवो वनस्पतिकायिका अनन्तसं-

ख्याततया तेषां प्राप्यमाणत्वात् । ततो यत्र ते बहवस्तत्र बहुत्वं जीवानां, यत्र स्वल्पे तत्राल्पत्वम् । वनस्पतयश्च तत्र बहवो यत्र प्रभूता आपः, "जत्थ जलं तत्थ वणं" इति वचनात् । तत्रावश्यं पनकसेवालादीनां भावात् । ते च पनकसेवालादयो बादरनामकर्मोदये वर्तमाना अपि अत्यन्तसूक्ष्मावगाहनत्वादतिप्रभूतपिण्डाभावाच्च सर्वत्र सन्तोऽपि न चक्षुषा ग्राह्याः । यदुक्तमनुयोगद्वारेषु—"तेणं वालग्गा सुहुमपणगजीवस्स सरीरोगाहणाहिंतो असंखेज्जगुणा" इति । ततो यत्रापि नैते दृश्यन्ते, तत्रापि ते सन्तीति प्रतिपत्तव्या इति । उदकं च प्रभूतं समुद्रेषु द्वीपादिगुणविष्कम्भत्वात् । तेष्वपि च समुद्रेषु प्रत्येकं प्राचीप्रतीचीदिशोर्यथाक्रमं चन्द्रसूर्यद्वीपा यावति च प्रदेशे चन्द्रसूर्यद्वीपा अवगाढास्तत्रोदकाभावः, उदकाभावाच्च वनस्पतिकायिकाभावः । इयं वक्तव्यताऽग्रे सोपयोगिनी ज्ञेया। चशब्दात् पुद्गलानामल्पबहुत्वमपि प्ररूपितम् । इति प्रथमगाथार्थः ॥ १ ॥ अथ सामान्यजीवादिसप्तजीवभेदानां पश्चिमदिश आश्रित्याल्पबहुत्वं गाथयाह—

**सामन्नेणं जीवा[1] आउ[2] वणे[3] विगल तिरियँपंचिंदी[6]। पच्छिम थोवा अहिया पुवदिसिं दाहिणुत्तरयो ॥ २ ॥**

सामान्येन पृथिव्यादिव्यपदेशं विना सर्वस्तोका जीवाः "पच्छिम" इति प्राकृतत्वेन विभक्तिलोपात् पश्चिमायां दिशि । एवमग्रेऽपि अर्थवशाद्विभक्तिव्यत्ययश्च ज्ञेयः । कथं पश्चिमायां सर्वस्तोकाः ? उच्यते, यतो हि प्रतीच्यां दिशि लवणसमुद्राधिपसुस्थितनामदेवावासभूतो गौतमद्वीपो लवणसमुद्रेभ्योऽधिको वर्तते, तत्र च उदकाभावाद्वनस्पतिकायिकानामभावात्सर्वस्तोका जीवाः पश्चिमायां दिशि । तेभ्यः "अहिया" इति विशेषाधिकाः सामान्यजीवाः पूर्वदिशि । तत्र हि गौतमद्वीपो न विद्यते, ततस्तावता विशेषेणातिरिच्यन्त इति । तेभ्योऽपि दक्षिणस्यां दिशि सामान्यजीवा विशेषाधिकाः,

यतस्तत्र चन्द्रसूर्यद्वीपा न विद्यन्ते, तदभावात्तत्र उदकं प्रभूतं, तत्प्राभूत्याच्च वनस्पतिकायिका अपि प्रभूता इति विशेषाधिकाः। एवमिदमधिकपदमग्रेऽपि योज्यम्। तेभ्योऽप्युदीच्यां दिशि सामान्यजीवा विशेषाधिकाः। किं कारणं ? इति चेदुच्यते, उदीच्यां हि दिशि संख्येययोजनेषु द्वीपेषु मध्ये कस्मिंश्चिद्द्वीपे आयामविष्कम्भाभ्यां संख्येययोजनकोटीकोटीप्रमाणं मानसं नाम सरः समस्ति ततो दक्षिणदिगपक्षेया अस्यां प्रभूतमुदकम्, उदकबाहुल्याच्च प्रभूता वनस्पतयः,। प्रभूता द्वीन्द्रियाः शंखादयः। प्रभूतास्तटलग्नशंखादिकलेवराश्रितास्त्रीन्द्रियाः पिपीलिकादयः। प्रभूताः पद्मादिषु चतुरिन्द्रिया भ्रमरादयः। प्रभूताः पञ्चेन्द्रिया मत्स्यादय इति विशेषाधिकाः। इति सामान्यजीवानां दिगनुपातेनाल्पबहुत्वमुक्तम्। एवं पश्चिमादिदिगनुपातेनाबादिषट्कस्य ज्ञेयम्। तथाहि—सर्वस्तोका अप्कायिकाः पश्चिमायां दिशि, गौतमद्वीपस्थाने तेषामभावात्। तेभ्योऽप्कायिकाः पूर्वस्यां दिशि विशेषाधिकाः, तत्र गौतमद्वीपाभावात्। तेभ्योऽपि विशेषाधिका अप्कायिका दक्षिणस्यां दिशि, चन्द्रसूर्यद्वीपाभावात्। तेभ्यो विशेषाधिका अप्कायिका उत्तरस्यां दिशि, तत्र मानससरःसद्भावात्। तथा यत्र प्रभूता आपस्तत्र प्रभूताः पनकादयोऽनन्तकायिका वनस्पतयः। प्रभूताः शंखादयो द्वीन्द्रियाः। प्रभूताः पिण्डीभूताः सेवालाद्याश्रिताः कुन्थ्वादयस्त्रीन्द्रियाः। प्रभूताः पद्माद्याश्रिता भ्रमरादयश्चतुरिन्द्रियाः। प्रभूता मत्स्यादयः पञ्चेन्द्रियाः। इति हेतोः "वण" इति वनस्पतिकायिकाः १। "विगल" इति विकला द्वित्रिचतुरिन्द्रियाः ४ तिर्यक्पञ्चेन्द्रियाश्च ५। एते पञ्चापि जीवाः सर्वस्तोकाः पश्चिमायां दिशि। ततः पूर्वस्यां दिशि विशेषाधिकाः। ततो दक्षिणस्यां दिशि विशेषाधिकाः। ततोऽपि उत्तरस्यां दिशि विशेषाधिकाः। इति अप्कायिकवद्भावनीयाः। इति द्वितीयगाथार्थः ॥ २ ॥

अथ मनुष्यसिद्धतैजसकायिकानामल्पबहुत्वमग्रेतनगाथयाह—

**मणुयां सिद्धां तेऊं सवत्थोवा य दाहिणुत्तरयो। पुविं संखा पच्छिम अहिया कहिया तुमे नाह! ॥३॥**

हे नाथ! "तुमे" त्वया "मनुजाः" मानवा दक्षिणोत्तरयोर्दिशोः सर्वस्तोकाः कथिताः। कथम्? दक्षिणस्यामुत्तरस्यां च दिशि पञ्चानां भरतक्षेत्राणां पञ्चानामैरावतक्षेत्राणामल्पत्वात्। तेभ्यः "पुविं संखा" इति पूर्वस्यां दिशि संख्येयगुणाः, क्षेत्रस्य संख्येयगुणत्वात्। तेभ्योऽपि पश्चिमायां दिशि विशेषाधिकाः, स्वभावत एवाधोलौकिकग्रामेषु मनुष्यबाहुल्यभावात् ८। एवं च पुनः हे नाथ! त्वया सिद्धा दक्षिणोत्तरयोर्दिशोः सर्वस्तोकाः कथिताः। कथम्? इति चेदुच्यते, इह मनुष्या एव सिध्यन्ति, नान्ये। मनुष्या अपि सिध्यन्तो येषु आकाशप्रदेशेषु इह च चरमसमयेऽवगाढास्तेष्वेवाकाशप्रदेशेषु ऊर्ध्वमपि गच्छन्ति, तेष्वेव चोपर्यवतिष्ठन्ते न मनागपि वक्रं गच्छन्ति सिध्यन्ति वा। तत्र दक्षिणस्यां दिशि पञ्चसु भरतेषु, उत्तरस्यां दिशि पञ्चस्वैरावतेषु मनुष्या अल्पाः क्षेत्रस्याल्पत्वात् सुषमसुषमादौ च सिद्ध्यभावादिति तत्क्षेत्रसिद्धाः सर्वस्तोकाः। तेभ्यः पूर्वस्यां दिशि संख्येयगुणाः, पूर्वविदेहानां भरतैरावतक्षेत्रेभ्यः संख्येयगुणतया तद्गतमनुष्याणामपि संख्येयगुणत्वात्, तेषां सर्वकालं सिद्धिभावात्। तेभ्यः पश्चिमायां दिशि विशेषाधिकाः, अधोलौकिकग्रामेषु मनुष्यबाहुल्यात् ९। तथा "तेऊ" इति तेजस्कायिकाः, उक्तिः पूर्ववत्। सर्वस्तोका दक्षिणोत्तरयोर्दिशोः, यतो मनुष्यक्षेत्रे एव बादरास्तेजस्कायिकाः, नान्यत्र। तत्रापि यत्र बहवो मनुष्यास्तत्र ते बहवो बाहुल्येन पाकारम्भसंभवात्। यत्र त्वल्पे तत्र स्तोकाः। तत्र दक्षिणस्यां दिशि पञ्चसु भरतेषु, उत्तरस्यां दिशि पञ्चस्वैरावतेषु क्षेत्रस्याल्पत्वात् स्तोका मनुष्याः, तेषां

स्तोकत्वेन तेजस्कायिका अपि स्तोका, अल्पपाकारम्भसंभवात् । ततः सर्वस्तोका दक्षिणोत्तरयोर्दिशि तेजस्कायिकाः । स्वस्थाने तु प्रायः समानाः । तेभ्यः पूर्वस्यां दिशि संख्येयगुणाः, क्षेत्रस्य संख्येयगुणत्वात् । ततोऽपि पश्चिमायां दिशि विशेषाधिकाः, अधोलौकिकग्रामेषु मनुष्यबाहुल्यात् १० ॥ ३ ॥ अथ वायुकायिकानां साधिकपदद्वयेन अल्पबाहुल्यमाह—

**वाऊ थोवा पुर्व्विं तत्तो अहिया य पच्छिमुत्तरयो । दाहिण ११ नारय थोवा पुव्वुत्तरपच्छिमासु समा ॥ ४ ॥ दाहिण असंख १२**

इह यत्र शुषिरं तत्र वायुर्यत्र च घनं तत्र वाय्वभावः, ततः पूर्वस्यां दिशि प्रभूतं घनमिति सर्वस्तोका वायुकायिकाः त्वया कथिता इति पूर्ववदुक्तिः । ततः पश्चिमायां दिशि विशेषाधिकाः, अधोलौकिकग्रामसंभवात् । ततोऽपि उत्तरस्यां दिशि विशेषाधिकाः, भवननरकावासबाहुल्येन शुषिरबाहुल्यात् । ततोऽपि दक्षिणस्यां दिशि विशेषाधिकाः, उत्तरदिगपेक्षया दक्षिणस्यां दिशि भवनानां नरकावासानां चातिप्रभूतत्वात् ११ । अथ साधिकपदद्वयेन नारकाणामल्पबहुत्वमाह—“नारय” इति हे देव ! नारकाः सर्वस्तोकास्त्वया पूर्वोत्तरपश्चिमादिक्षु कथिताः । कथम् ? पुष्पावकीर्णनरकावासानां तत्राल्पत्वात् बहूनां प्रायः संख्येययोजनविस्तृतत्वाच्च । किंविशिष्टा नारकाः ? समाः स्वस्थाने तुल्याः । तथा तेभ्यो दक्षिणस्यां दिशि असंख्येयगुणाः, पुष्पावकीर्णनरकावासानां तत्र बाहुल्यात् तेषां च प्रायोऽसंख्येययोजनविस्तृतत्वात् कृष्णपाक्षिकाणां तस्यां दिशि प्राचुर्येणोत्पादाच्च । तथाहि—द्विविधा जन्तवः, शुक्लपाक्षिकाः कृष्णपाक्षिकाश्च । तेषां लक्षणमिदं—किंचिदूनपुद्गलपरावर्तार्धमात्रं संसारस्ते शुक्लपाक्षिकाः । अधिकतरसंसारभाजिनस्तु कृष्णपाक्षिकाः । उक्तं च—“जेसिम-

बहुो पुग्गलपरियट्टो सेसओ य संसारो । ते सुक्कपक्खिया खलु अहिए पुण कण्हपक्खीओ १ ॥" अत एव च स्तोकाः शुक्लपाक्षिकाः, अल्पसंसारिणां स्तोकत्वात् । बहवः कृष्णपाक्षिकाः, प्रभूतसंसारिणामतिप्रचुरत्वात् । कृष्णपाक्षिकाश्च प्राचुर्येण दक्षिणस्यां दिशि समुत्पद्यन्ते, न शेषासु दिक्षु; तथास्वाभाव्यात् । तच्च तथास्वाभाव्यं पूर्वाचार्यैरेवं युक्तिभिरुपबृंह्यते । तद्यथा—कृष्णपाक्षिका दीर्घतरसंसारभाजिन उच्यन्ते; दीर्घतरसंसारभाजिनश्च बहुपापोदयाद्भवन्ति; बहुपापोदयाच्च क्रूरकर्माणश्च प्रायस्तथास्वाभाव्यात् । तद्भवसिद्धिका अपि दक्षिणस्यां दिशि समुत्पद्यन्ते न शेषासु सर्वासु दिक्षु । यत उक्तम्—"पायमिह कूरकम्मा भवसिद्धीयावि दाहिणल्लेसु । नेरइतिरियमणुया सुराइठाणेसु गच्छंति १ ॥" ततो दक्षिणस्यां दिशि बहूनां कृष्णपाक्षिकाणामुत्पादसंभवात् पूर्वोक्तकारणद्वयाच्च संभवन्ति। पूर्वोत्तरपश्चिमदिग्विभाविभ्यो दाक्षिणात्या असंख्येयगुणाः । इति नारकाणां सामान्येनाल्पबहुत्वमुक्तम् । अथ प्रसङ्गात्सोपयोगित्वेन सप्तापि पृथिवीरधिकृत्य दिग्विभागेन नारकाणामल्पबहुत्वं प्रोच्यते । तथाहि—सप्तमपृथिव्यां पूर्वोत्तरपश्चिमदिग्विभाविभ्यो नारकेभ्यो ये सप्तमपृथिव्यामेव दाक्षिणात्यास्तेऽसंख्यातगुणाः । तेभ्यः षष्ठपृथिव्यां तमःप्रभाभिधानायां पूर्वोत्तरपश्चिमदिग्विभाविनोऽसंख्येयगुणाः । कथम् ? इति चेदुच्यते, इह सर्वोत्कृष्टपापकारिणः संज्ञिपञ्चेन्द्रियतिर्यङ्मनुष्याः सप्तमनरकपृथिव्यामुत्पद्यन्ते; किंचिद्धीनहीनतरपापकर्मकारिणश्च षष्ठ्यादिषु पृथिवीषु । सर्वोत्कृष्टपापकर्मकारिणश्च सर्वस्तोका बहवश्च यथोत्तरं किंचिद्धीनहीनतरादिपापकर्मकारिणः । ततो युक्तमसंख्येयगुणत्वं सप्तमपृथिवीदाक्षिणात्यनारकापेक्षया षष्ठपृथिव्यां पूर्वोत्तरपश्चिमनारकाणाम् । एवमुत्तरोत्तरपृथिवीरप्यधिकृत्य भावयितव्यम् । तेभ्योऽपि तस्यामेव षष्ठपृथिव्यां दक्षिणस्यां दिशि

नारका असंख्येयगुणाः, युक्तिरत्र प्रागेवोक्ता । तेभ्योऽपि पञ्चमपृथिव्यां धूमप्रभाभिधानायां पूर्वोत्तरपश्चिमदिग्विभाविनोऽसंख्येयगुणाः । तेभ्योऽपि तस्यामेव पञ्चमपृथिव्यां दाक्षिणात्या असंख्येयगुणाः । एवं सर्वास्वपि क्रमेण वाच्यम् १२ ॥ ४ ॥ अथ किंचिन्न्यूनगाथया जिनस्तुतिपूर्वं पृथिवीकायिकानामल्पबहुत्वमाह—

**पुढवी दाहिण थोवा कमेण अहियाओ । उत्तरपुव्वावरदिसि तुज्झ नमो जेण निद्दिट्ठा १३ ॥ ५ ॥**

हे वीर ! इति शेषः तस्मै तुभ्यं नमः । तस्मै कस्मै ? येन त्वया "पुढवी" इति पृथिवीकायिका दक्षिणस्यां दिशि सर्वस्तोकाः, तत उत्तरादिदिक्षु च क्रमेणाधिका निर्दिष्टाः केवलज्ञानेन विलोक्य गणधराणामग्रे वाचा प्रकाशिताः । कथं दक्षिणस्यां दिशि सर्वस्तोकाः ? उच्यन्ते, इह यत्र घनं तत्र बहवः पृथिवीकायिकाः, यत्र शुषिरं तत्र स्तोकाः, दक्षिणस्यां दिशि बहूनि भवनपतीनां भवनानि बहवो नरकावासाः, ततः शुषिरं प्राभूत्यसंभवात् सर्वस्तोका दक्षिणस्यां दिशि पृथिवीकायिकाः । तेभ्य उत्तरस्यां दिशि विशेषाधिकाः, यत्रोत्तरस्यां दिशि दक्षिणदिगपेक्षया स्तोकानि भवनानि स्तोका नरकावासाः, ततो घनप्राभूत्यसंभवात् बहवः पृथिवीकायिका इति विशेषाधिकाः । तेभ्योऽपि पूर्वस्यां दिशि विशेषाधिकाः, रविशशिद्वीपानां तत्र भावात् । तेभ्योऽपि पश्चिमायां दिशि विशेषाधिकाः । किंकारणम् ? इति तदुच्यते, यावन्तो रविशशिद्वीपाः पूर्वस्यां दिशि तावन्तो द्वीपाः पश्चिमायामपि, तत एवैतावता साम्यम्; परं लवणसमुद्रे गौतमद्वीपः पश्चिमायामधिकोऽस्ति तेन विशेषाधिकाः । अत्रापर आह—ननु यथा पश्चिमायां दिशि गौतमद्वीपोऽभ्यधिकोऽस्ति, तथा तस्यां पश्चिमायां दिशि अधोलौकिकग्रामा अपि योजनसहस्रावगाढाः सन्ति, ततः खातधूलिपूरितन्यायेन ते तुल्या एव पृथिवीका-

यिकाः प्राप्नुवन्ति न विशेषाधिकाः । नैतदेवं यतोऽधोलौकिकग्रामावगाहो योजनसहस्रं, गौतमद्वीपस्य पुनः षट्सप्तत्यधिकयोजनसहस्रमुच्चैस्त्वं विष्कम्भस्तस्य द्वादशयोजनसहस्राणि, यच्च मेरोरारभ्याधोलौकिकग्रामेभ्योऽर्वाग् हीनत्वं हीनतरत्वं, तत्पूर्वस्यामपि दिशि प्रभूतगर्त्तादिसंभवात् समानम् । ततो यद्यधोलौकिकग्रामच्छिद्रेषु बुद्ध्या गौतमद्वीपः प्रक्षिप्यते तथापि समधिक एव प्राप्यते न तु तुल्य इति, तेन समधिकेन विशेषाधिकाः पश्चिमायां दिशि पृथिवी कायिकाः १३ ॥ ५ ॥

अथ भवनपतीनां दिगनुपातेन पदत्रयेणाल्पबहुत्वमाह—

**भवणवइ पुव्वपच्छिम थोवा तुल्ला य उत्तर असंखा । दाहिण तओ असंखा १४**

"भवणवइ" इति भवनपतिदेवाः सर्वस्तोकाः "पुव्वपच्छिम" इति पूर्वस्यां पश्चिमायां च दिशि, कथम्? तत्र भवनानामल्पत्वात् । तेभ्यः "उत्तर" इति उत्तरस्यां दिशि "असंखा" असंख्यातगुणाः, स्वस्थानतया तत्र भवनानां बाहुल्यात् । ततस्तेभ्योऽपि दक्षिणस्यां दिशि असंख्येयगुणाः, तत्र भवनानामतीवबाहुल्यात् । तथाहि—निकाये निकाये चत्वारि चत्वारि भवनशतसहस्राण्यतिरिच्यन्ते, कृष्णपाक्षिकाश्च बहवस्तत्रोत्पद्यन्ते ततो भवन्त्यसंख्येयगुणाः १४ ॥

अथ व्यन्तराणां दिगनुपातेन साधिकपदद्वयेनाल्पबहुत्वमाह—

**विंतर थोवा य पुव्वदिसि ॥ ६ ॥ पच्छिम उत्तर दाहिण अहिया १५**

"विंतर" इति हे वीर ! व्यन्तराः पूर्वदिशि त्वया सर्वस्तोका निर्दिष्टा उक्तिर्विशेषोक्त्यभावे एवमेव सर्वत्र कार्या । कथं पूर्वस्यां दिशि सर्वस्तोकाः ? इत्याह—यत्र शुषिरं तत्र व्यन्तराः प्रचरन्ति, यत्र घनं तत्र न, ततः पूर्वस्यां दिशि घनत्वात्

स्तोका व्यन्तराः । च पुनस्तेभ्यः पश्चिमदिशि विशेषाधिकाः, अधोलौकिकग्रामेषु शुषिरं संभवति । तेभ्योऽपि उत्तरस्यां दिशि विशेषाधिकाः स्वस्थानतथा नगरावासबाहुल्यात् । तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, अतिप्रभूतनगरावासबाहुल्यात् ॥१५॥ अथ ज्योतिष्कानां दिगनुपातेन किंचिन्न्यूनपदत्रयेणाल्पबहुत्वमाह—

**थोवा य जोइसा तुल्ला । पुव्वावरदिसि दाहिण उत्तर अहिया कमा भणिया १६ ॥ ७ ॥**

"थोवा" इति हे वीर ! त्वया ज्योतिष्काः "पुव्वावरदिसि" इति पूर्वस्यां दिशि पश्चिमायां दिशि च सर्वस्तोकाः परस्परं तुल्याश्च भणिता निर्दिष्टाः, चन्द्रादित्यद्वीपेषु उद्यानकल्पेषु कतिपयानामेव तेषां भावात् । ततस्तेभ्योऽपि क्रमात् दक्षिणस्यां दिशि विशेषाधिकाः, विमानबाहुल्यात् कृष्णपाक्षिकाणां दक्षिणदिग्भावित्वाच्च । तेभ्योऽप्युत्तरस्यां दिशि विशेषाधिकाः, यतो मानसे सरसि बहवो ज्योतिष्काः क्रीडास्थानमिति क्रीडनव्यावृत्त्या नित्यमासते मानससरसि च ये मत्स्यादयो जलचरास्ते आसन्नविमानदर्शनतः समुत्पन्नजातिस्मरणा किञ्चित् व्रतं पतिपद्य अशनादिः च कृत्वा कृतनिदानास्तत्रोत्पद्यन्ते, ततो भवन्त्यौत्तरा दक्षिणेभ्यो विशेषाधिकाः १६ ॥ ७ ॥ अथ वैमानिकानां विभागेन दिगनुपातेनाल्पबहुत्वमाह—

**पढमचउकप्पदेवा सव्वत्थोवा य पुव्वपच्छिमओ । उत्तरअसंख दाहिण अहिया तुह मयविऊ बिंति ॥८॥**
**बंभाइकप्पचउगे पुव्वुत्तरपच्छिमासु थोव समा । दाहिण संखा तत्तो उवरिमदेवा य सम सव्वे १७॥९॥**

हे वीर ! तव मतविदः सिद्धान्तिकाः प्रथमचतुष्ककल्पदेवाः सौधर्मेशानसनत्कुमारमाहेन्द्रकल्पभाविनः सुराः पूर्वस्यां पश्चिमायां च दिशि सर्वस्तोकाः, चशब्दात्परस्परं तुल्याश्चेति ब्रुवन्ति । एवमुक्तिरग्रेऽपि सर्वत्र लापनीया । कथम् ? इति

चेदुच्यते, यानि आवलिकाप्रविष्टविमानानि तानि चतसृष्वपि दिक्षु तुल्यानि; यानि पुनः पुष्पावकीर्णानि तानि प्रभूतानि असंख्येययोजनविस्तृतानि तानि च दक्षिणस्यामुत्तरस्यां च दिशि नान्यत्र, ततः सर्वस्तोकाः पूर्वस्यां दिशि पश्चिमायां च दिशि । तेभ्य उत्तरस्यां दिशि असंख्येयगुणाः, पुष्पावकीर्णविमानानां बाहुल्यात् असंख्येययोजनविस्तृतत्वाच्च । तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, कृष्णपाक्षिकाणां प्राचुर्येण तत्र गमनात् ॥ ८ ॥ तथा ब्रह्मलोकादिदेवलोकचतुष्के देवाः पूर्वोत्तरपश्चिमासु दिक्षु सर्वस्तोकाः परस्परं तुल्याश्च, यतो बहवः कृष्णपाक्षिकास्तिर्यग्योनयो न दक्षिणस्यां दिशि समुत्पद्यन्ते, शुक्लपाक्षिकाश्च स्तोका इति पूर्वोत्तरपश्चिमासु देवाः सर्वस्तोकाः । तेभ्यो दक्षिणस्यां दिशि असंख्येयगुणाः, कृष्णपाक्षिकाणां बहूनां तत्रोत्पादात् । ततः "उवरिमदेवा" उपरितनदेवा आनतादिसर्वार्थसिद्धिपर्यन्ता देवास्ते मनुष्या एवोत्पद्यन्ते, तेन प्रतिकल्पं प्रतिग्रैवेयकं प्रत्यनुत्तरविमानं चतसृषु दिक्षु प्रायो बहुसमा वेदितव्याः । तथा चाह—"तेण परं बहुसमोववन्नगा समणाउसो" १७ ॥९॥ सप्तदशभेदभिन्नानामपि जीवानां दिगनुपातेन सहेतुकमल्पबहुत्वं प्ररूपितम् । अथ पुद्गलानां दिगनुपातेन श्रीमहावीरेणाल्पबहुत्वमुक्तं तथाह—

**थोवा पुग्गल उड्ढं अहिय अहे तह असंख तुल्ला य । उत्तरपुरच्छिमेणं दाहिणपच्चच्छिमेण तओ ॥१०॥**

**दाहिणपुरच्छिमेणं उत्तरपच्चच्छिमेण अहिय समा । पुव्विं असंख अहिया पच्छिम तह दाहिणुत्तरयो ॥११॥**

दिगनुसारेण चिन्त्यमानाः पुद्गलाः सर्वस्तोकाः "उड्ढं" इति ऊर्ध्वदिशि । इह रत्नप्रभासमभूमितलमेरुमध्येऽष्टप्रादेशिको रुचकस्तस्माद्विनिर्गताश्चतुःप्रदेशा ऊर्ध्वा दिग् यावल्लोकान्तस्ततस्तत्र सर्वस्तोकाः पुद्गलाः । तथा "अहे" इति अधोदिशि

तेभ्यो "अहिया" इति विशेषाधिकाः । अधोदिगपि रुचकादेवं भवति, चतुःप्रदेशा यावल्लोकान्तस्तत्र तस्या विशेषाधिकत्वात्तत्र पुद्गला विशेषाधिकाः । ततस्तेभ्य उत्तरपूर्वस्यां दक्षिणपश्चिमायां च द्वयोरपि दिशोरसंख्येयगुणाः । च पुनः स्वस्थाने परस्परं तुल्याश्च, यतस्ते द्वेऽपि दिशौ रुचकाद्विनिर्गते मुक्तावलिसंस्थिते तिर्यग्लोकान्तमध्ये लोकान्तमूर्ध्वलोकान्तं च पर्यवसिते तेन क्षेत्रस्यासंख्येयगुणत्वात् तत्र पुद्गला असंख्येयगुणाः । क्षेत्रं तु स्वस्थाने सममिति पुद्गला अपि स्वस्थाने तुल्याः ॥ १० ॥ तेभ्यो दक्षिणपूर्वस्यां उत्तरपश्चिमायां च प्रत्येकं विशेषाधिकाः स्वस्थाने परस्परं तुल्याश्च । कथं विशेषाधिकाः ? इति चेदुच्यते, इह सौमनसगन्धमादनेषु सप्त सप्त कूटानि, विद्युत्प्रभामाल्यवतोर्नवनव, तेषु च कूटेषु धूमिकाऽवश्यायादिसूक्ष्मपुद्गलाः प्रभूताः संभवन्ति, ततो विशेषाधिकाः । स्वस्थाने तु क्षेत्रस्य पर्वतादेश्च समानत्वात्तुल्याः । तेभ्यः पूर्वस्यां दिशि असंख्येयगुणाः, क्षेत्रस्यासंख्येयगुणत्वात् । तेभ्यः पश्चिमायां विशेषाधिकाः, अधोलौकिकग्रामेषु शुषिरभावतो बहूनां पुद्गलानामवस्थानभावात् । तथा तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, बहुभवनशुषिरभावात् । तेभ्योऽपि उत्तरस्यां दिशि विशेषाधिकाः, यत्रोत्तरस्यामायामविष्कम्भाभ्यां संख्येययोजनकोटीप्रमाणं मानसं सरः समस्ति, तत्र ये जलचराः पनकसेवालादयश्च सत्त्वास्तेऽतिबहव इति तेषां ये तैजसकार्मणपुद्गलास्तैरधिकाः प्राप्यन्ते इति पूर्वोक्तेभ्यो विशेषाधिकाः ॥ ११ ॥ अथ जीवानां पुद्गलानां चाल्पबहुत्वमुक्त्वा विज्ञप्तिमाह—

**अप्पबहुत्तसरूवं इय दिट्ठं केवलेण नाह ! तुमं । अह तह कुणसु पसायं अहमवि पासेमि जह सक्खं ॥१२॥**

हे नाथ ! इदं पूर्वोक्तमल्पबहुत्वस्वरूपं त्वया केवलज्ञानेन दृष्टं नान्येन हरिहरादिदेवेन । अथ तथा मम प्रसादं कुरु,

यथाऽहमपि पूर्वोक्तमल्पबहुत्वं साक्षात्पश्यामि ॥ १२ ॥ अथ प्रार्थनां कुर्वन् स्तवनकर्ता स्वनामगर्भितामन्तिमगाथामाह—

**इय चउदिसासु भमिओ तुह आणा वज्जिओ य वीर ! अहं । गणिसमयसुंदरेहिं थुणिओ संपइ सिवं देसु १३**

॥ इत्यल्पबहुत्वविचारगर्भितं श्रीमहावीरस्तवनं संपूर्णम् ॥

हे वीर ! इति पूर्वोक्तप्रकारासु चतसृषु दिक्षु अहं तवाज्ञारहितो भ्रान्तः । संप्रति शिवं देहि । किंविशिष्टस्त्वम् ? "गणिसमयसुंदरेहिं थुणिओ" गणय आचार्याः समयसुन्दराः सिद्धान्तविचारविशारदाः, ततो गणयश्च समयसुन्दराश्च गणिसमयसुन्दराः, तैः स्तुतः । पक्षे समयसुन्दरेति कर्तुर्नाम ॥ १३ ॥

इति श्रीअणहिलपत्तनवास्तव्यसिद्धान्तसूक्ष्मविचाररसिकचोपडागोत्रीयपरीक्षकदेवजीसमभ्यर्थनया श्रीबृहत्खरतरगच्छाधीश्वरयुगप्रधानश्री५जिनचन्द्रसूरिसूरीश्वरशिष्यमुख्यपण्डितसकलचन्द्रगणिशिष्यवाचनाचार्यश्रीसमयसुन्दरगणिविरचितमल्पबहुत्वविचारगर्भितं श्रीमहावीरदेवबृहत्स्तवनं संपूर्णम् ॥

## समाप्तमिदं सावचूरिकमल्पबहुत्वविचारगर्भितं श्रीमहावीरस्तवनम् ।

॥ अर्हम् ॥

# ॥ महादण्डकस्तोत्रापरपर्यायाल्पबहुत्वविचारस्तवनम् ॥

( अवचूर्या समलङ्कृतम् )

**भीमे भवंमि भमिओ जिणिंदआणाइवज्जिओ जाइं । जिअअप्पबहुट्ठाणाइं विन्नविस्सामि ताइं अहं ॥१॥**

**गब्भयमणुया थोवा १ संखगुणा थी २ असंखगुण दुन्नि । बायरपज्जग्गि ३ अणुत्तरा सुरा ४ सत्त संख इमे२॥**

भीमे० ॥ १ ॥ स्तोका गर्भजमनुष्याः, संख्येयकोटाकोटीप्रमाणत्वात् १ । मनुष्यस्त्रियः संख्येयगुणाः, सप्तविंशतिगुणत्वात् सप्तविंशत्यधिकत्वाच्च । उक्तं च—"तिगुणा तिरूवअहिया सगवीसगुणा उ सत्तवीसहिया । बत्तीसगुणा बत्तीसअहिअ तिरिनरसुरत्थि कमा १ ॥" २ । बादराग्नयः पर्याप्ता असंख्येयगुणाः, कतिपयवर्गन्यूनावलिकाघनसमयप्रमाणत्वात् । इदमुक्तं भवति—असंख्येया आवलिकावर्गास्तावन्त एव ग्राह्या यावद्भिरावलिकाया घनो न पूर्यते, असत्कल्पनया आवलिकायां दश १० समयाः कल्प्यन्ते तद्वर्गे १०० एते चासंख्यातवर्गाः कल्पनया दशापि भवन्ति, परं तावन्तो न कल्प्यन्ते, घनस्य संपूर्णस्य संभवात् । तथा ह्यावलिकायां दश समयास्तेषां च घनः सहस्रं दशभिरपि तद्वर्गैः सहस्रं

---

१ "बायरपजग्गि ३ अणुत्तरसुरा य ४ कम सत्त संख इमे" इत्येवंरूपेण क्वचित् । २ "सप्तविंशत्यधिकसप्तविंशतिगुणत्वात्" इत्यपि क्वचित् । ३ इतोर्वाक्—"तावता" इत्यधिकं क्वचित् । ४ क्वचित् "संपूर्णतासंभवात्" इत्यपि ॥

संपद्यते इति घनसंपूर्णता। तस्मादष्टौ नव वावलिकागर्भा वर्गाः कल्प्यन्ते। तथा च सति ८००।९०० प्रमाणा वा सद्भावतस्त्वसंख्येया बादरपर्याप्ता अग्निकायिकाः सिद्धाः स्युः ३। अनुत्तरोपपातिनोऽसंख्येयाः, प्रमाणाङ्गुलश्रेण्यसंख्येयभागप्रदेशराशिप्रमाणत्वात् क्षेत्रपल्योपमासंख्येयभागवर्तिनभःप्रदेशराशितुल्या इत्यर्थः ४॥ २॥

**उवरिम ५ मज्झिम ६ हिट्ठिम ७ अचुया ८ रण ९ पाणया १० णय ११ सुराय।**
**चउदस असंख माघवइ १२ मघा १३ सहसार १४ महसुक्का १५॥ ३॥**

उपरितनग्रैवेयकत्रिकदेवाः संख्येयगुणाः, बृहत्तराङ्गुलश्रेणिसंख्येयभागप्रदेशराशिप्रमाणत्वात्। यतोऽनुत्तरसुराणां पञ्च, उपरितनग्रैवेयकत्रिके शतं विमानानां, प्रतिविमानं चासंख्येया देवा यथा चाधोऽधोविमानानि तथा तथा देवा अपि प्राचुर्येण लभ्यन्त इति। एवमुत्तरत्रापि भावना यावदानतः ५। मध्यमग्रैवेयकदेवाः संख्येयगुणाः ६। अधस्तनग्रैवेयकदेवाः संख्येयगुणाः ७। अच्युतदेवाः संख्येयगुणाः ८। आरणदेवाः संख्येयगुणाः ९। यद्यपि आरणाच्युतौ समश्रेणीकौ समविमानसंख्याकौ च; तथापि कृष्णपाक्षिकास्तथास्वाभाव्यात्प्राचुर्येण दक्षिणस्यामुत्पद्यन्ते नोत्तरस्याम्। बहवश्च कृष्णपाक्षिकाः स्तोकाः शुक्लपाक्षिका इति। येषां किंचिदूनपुद्गलपरावर्तार्धमात्रसंसारस्ते शुक्लपाक्षिकाः, अन्ये तु कृष्णपाक्षिकाः। तथास्वाभाव्यं च पूर्वाचार्यैरेवमवर्ण्यत—कृष्णपाक्षिका दीर्घसंसारिणः; ते च बहुपापोदयाद्भवन्ति, ते च क्रूरकर्माणः, प्रायस्तथास्वाभाव्यात्। भवसिद्धिका अपि दक्षिणस्यामुत्पद्यन्ते, न शेषासु दिक्षु। उक्तं च—"पायमिह कूरकम्मा भवसिद्धी-

१ "-रेवं वर्ण्यते" इत्यपि क्वचित्॥

आवि दाहिणल्लेसु । नेरइयतिरियमणुया सुराइठाणेसु गच्छंति १ ॥ ” प्राणतदेवाः संख्येयगुणाः १० । आनतदेवाः संख्येयगुणाः ११ । सप्तमपृथिवीनारका असंख्येयगुणाः, घनीकृतलोकैकप्रादेशिकीश्रेण्यसंख्येयभागवर्तिनभःप्रदेशराशितुल्याः; परं श्रेण्यसंख्येयभागोऽसंख्येयभेदभिन्नस्तेन यथोत्तरमसंख्येयगुणाः १२ । षष्ठ्यामसंख्येयगुणाः १३ । सहस्रारेऽसंख्येयगुणाः १४ शुक्रेऽसंख्येयगुणाः, यतः सहस्रारे ६ शुक्रे ४० सहस्राणि विमानानामधोऽधोविमानेषु देवानां बहुबहुतरत्वाच्च १५॥३॥

**रिट्ठा १६ लंतक १७ अंजण १८ बंभय १९ वालुय २० महिंद २१ सणकुमरा २२ ।**
**सक्करपह २३ मुच्छिमनर २४ ईसाणसुरा य २५ अह तिन्नि[1] ॥ ४ ॥**

ततः पञ्चम्यां नरकपृथिव्यामसंख्येयगुणाः १६ । ततो लान्तकदेवा असंख्येयगुणाः १७ । ततश्चतुर्थ्यां नैरयिका असंख्येयगुणाः १८ । ततो ब्रह्मदेवलोके देवा असंख्येयगुणाः १९ । ततस्तृतीयस्यां नरकपृथिव्यां नैरयिका असंख्येयगुणाः २० । ततो माहेन्द्रदेवा असंख्येयगुणाः २१ । ततः सनत्कुमारदेवा असंख्येयगुणाः २२ । ततो द्वितीयस्यां नारका असंख्येयगुणाः २३ । ततः संमूर्च्छिममनुष्या असंख्येयगुणाः २४ । तत ईशानदेवा असंख्येयगुणाः २५ । अङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि द्वितीयवर्गमूले तृतीयवर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतलोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाण ईशानदेवदेवीसमुदायः । तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पा ईशानदेवाः । इदमुक्तं भवति—प्रतरस्याङ्गुलप्रमाणं यत् क्षेत्रं तत्र सद्भावतोऽसंख्याताः प्रदेशाः, ते च २५६ परिकल्प्यन्ते ।

---

१ “अह संखा” इत्यपि ॥

अस्य च राशेः प्रथमं द्वितीयं तृतीयं च वर्गमूलं गृह्यते, तानि च क्रमात् १६ । ४ । २ प्रमाणानि परिकल्प्यन्ते । द्वितीयं ४ तृतीयेन २ गुणितं ८ प्रदेशा एतावतीषु प्रतरश्रेणिषु यावन्त आकाशप्रदेशास्तावन्त्य ईशानदेवदेव्यः । प्रस्तुतसूत्रे सामान्येनेशानादिव्यन्तरपर्यन्ता असंख्येयश्रेणिसमा उक्ताः । स्वस्वस्थाने किञ्चिद्विशेषोऽपि दर्शयिष्यते ॥ ४ ॥

**ईसाणदेवि २६ सोहंमजुअल २७।२८ संखा असंख भवणवई २९ ।**
**तद्देवी संखगुणा ३० असंख रयणपह ३१ खगपुरिसा ३२ ॥ ५ ॥**

ईशानदेव्यः संख्येयगुणाः २६ । सौधर्मदेवाः संख्येयगुणाः । माहेन्द्रापेक्षया सनत्कुमारदेवा असंख्येयगुणा उक्ताः, इहापि दक्षिणस्यां कृष्णपाक्षिकोत्पत्यादिपूर्वोक्तयुक्तेः समानत्वेऽप्यत्र संख्येयगुणत्वं, वचनप्रामाण्यात् २७ । सौधर्मदेव्यः संख्येयगुणाः २८ । भवनवासिनो देवा असंख्येयगुणाः यतोऽङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनि प्रथमवर्गमूले द्वितीयवर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु लोकश्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणो भवनपतिदेवदेवीवर्गः; तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पाश्च देवाः २९ । संख्येयगुणाभवनपतिदेव्यः ३० । ततो रत्नप्रभानारका असंख्येयगुणाः, अङ्गुलमात्रक्षेत्रप्रदेशराशेः प्रथमवर्गमूले द्वितीयवर्गमूलेन गुणिते यावान् प्रदेशराशिस्तावत्प्रमाणासु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात् ३१ । ततः खगपञ्चेन्द्रियतिर्यग्पुरुषा असंख्येयगुणाः, प्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिनभःप्रदेशराशिप्रमाणत्वात् ॥ ३२ ॥ ५ ॥

---

१ "सोहमसुर २७ देवि २८ तओ" इत्येवंरूपेण क्वचित् ॥

संखा खयरी ३३ थल ३४ । ३५ जलयर ३६ । ३७ वंतर ३८ । ३९ जोइसाण ४०।४१ चउ जुअलं ।
कीवा नह ४२ थल ४३ जलयर ४४ पजत्त चउरिंदिया ४५ तेर ॥ ६ ॥

ततः खगपञ्चेन्द्रियस्त्रियः संख्येयगुणाः, त्रिगुणत्वात् ३३ । स्थलचरपञ्चेन्द्रियतिर्यग्पुरुषाः संख्येयगुणाः, बृहत्तरप्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगतनभःप्रदेशराशिप्रमाणत्वात् ३४ । तेषां स्त्रियः संख्येयगुणाः, त्रिगुणत्वात् ३५ । जलचरपञ्चेन्द्रियपुरुषाः संख्येयगुणाः, बृहत्तरप्रतरासंख्येयश्रेणिप्रदेशप्रमाणत्वात् ३६ । तेषां स्त्रियः संख्येयगुणाः, त्रिगुणत्वात् ३७ । ततो व्यन्तरदेवाः संख्येयगुणाः,यतः संख्येययोजनप्रमाणानि सूचिरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति, तावान् व्यन्तरदेवदेवीगणः; तद्गतकिंचिदूनद्वात्रिंशत्तमभागकल्पा व्यन्तरपुरुषाः ३८ । व्यन्तर्यः संख्येयगुणाः ३९ । ज्योतिष्कदेवाः संख्येयगुणाः, ते हि सामान्यतः २५६ अङ्गुलप्रमाणसूचीखण्डतुल्या यावन्त्य एकस्मिन् प्रतरे श्रेणयो भवन्ति तावत्प्रमाणाः, तद्गतकिंचिदूनद्वात्रिंशत्तमभागकल्पा ज्योतिर्देवाः ४० । ततो ज्योतिर्देव्यः संख्येयगुणाः ४१ । ततः खगपञ्चेन्द्रियतिर्यग्षण्ढाः संख्येयगुणाः ४२ । स्थलचरा नपुंसकाः संख्येयगुणाः ४३ । ततो जलचरा नपुंसकाः संख्येयगुणाः ४४ । ततः पर्याप्तचतुरिन्द्रिया संख्येयगुणाः ४५ ॥ ६ ॥

पज्ज पण ४६ बिय ४७ तिइंदिय ४८ अहिआ अस्संखऽपज्ज पंचिंदी ४९ ।
अहिया अपज्ज चउ ५० तिय ५१ बिइंदि ५२ बारस असंखइमे ॥ ७ ॥

ततः पञ्चेन्द्रियाः पर्याप्ताः संज्ञ्यसंज्ञिभेदेन विशेषाधिकाः ४६ । पर्याप्ता द्वीन्द्रिया विशेषाधिकाः ४७ । पर्याप्तास्त्रीन्द्रिया

विशेषाधिकाः । यद्यपि पर्याप्तचतुरिन्द्रियादित्रीन्द्रियपर्यन्तानामङ्गुलासंख्येयभागमात्राणि सूचिखण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणत्वेऽपि अङ्गुलसंख्येयभागस्य संख्येयभेदत्वात् इत्थं विशेषाधिकत्वं न विरुद्धम् ४८ । अपर्याप्ताः पञ्चेन्द्रिया असंज्ञिनोऽसंख्येयगुणाः, अङ्गुलासंख्येयभागमात्राणि सूचीरूपाणि खण्डानि यावन्त्येकस्मिन् प्रतरे भवति तावत्प्रमाणत्वात् ४९ । अपर्याप्ताश्चतुरिन्द्रिया विशेषाधिकाः ५० । ततोऽपर्याप्तास्त्रीन्द्रिया विशेषाधिकाः ५१ । ततो द्वीन्द्रिया अपर्याप्ता विशेषाधिकाः । अपर्याप्तपञ्चेन्द्रियादीनां चतुर्णां समानसंख्याप्रकारत्वेऽप्यङ्गुलासंख्येयभागस्य विचित्रत्वाद् इत्थं विशेषाधिकत्वमदुष्टम् ५२ ॥ ७ ॥

**बायरपज्जपरित्ता ५३ निगोअ ५४ भू ५५ दग ५६ समीर ५७ तह अपजा ।**
**थूलग्गि ५८ परित्त ५९ निगोअ ६० पुढवि ६१ जल ६२ पवण ६३ सुहुमग्गी ६४ ॥ ८ ॥**

प्रत्येकबादरवनस्पतयः पर्याप्ता असंख्येयगुणाः, द्वीन्द्रियादिवदेषामपि वक्ष्यमाणबादरपर्याप्तनिगोदपृथिव्यप्कायिकानामपि च एकप्रतरगताङ्गुलासंख्येयभागमात्रसूचीरूपखण्डप्रमाणत्वस्यान्यत्राविशेषेणोक्तावप्यङ्गुलासंख्येयभागस्यासंख्येयभेदत्वादसंख्येयगुणत्वाभिधानेऽपि न दोषः ५३ । बादरनिगोदाः अनन्तकायिकशरीररूपाः पर्याप्ता असंख्येयगुणाः ५४ ततो बादरपृथिवीकायिकाः पर्याप्ता असंख्येयगुणाः ५५ । बादराप्कायिकाः पर्याप्ता असंख्येयगुणाः ५६ । ततो बादरवायुकायिकाः पर्याप्ता असंख्येयगुणाः, घनीकृतलोकासंख्येयभागवर्त्यसंख्येयप्रतरगतनभःप्रदेशराशिप्रमाणत्वात् लोके सप्तरज्वायामविष्कम्भा एकप्रदेशप्रमाणपिण्डाः सर्वात्मना त्वसंख्येयनभःप्रदेशप्रमाणा उपर्युपरिव्यवस्थितप्रभूतमण्डका इवासंख्येयाः

प्रतराः सन्ति ५७। ततो बादराग्नयोऽपर्याप्ता असंख्येयगुणाः, असंख्येयलोकाकाशप्रदेशराशिप्रमाणत्वात् ५८। ततः प्रत्येकबादरवनस्पतयोऽपर्याप्ता असंख्येयगुणाः ५९। ततो बादरनिगोदा अपर्याप्ता असंख्येयगुणाः ६० । बादरपृथिव्योऽपर्याप्ता असंख्येयगुणाः ६१। बादरा अप्कायिका अपर्याप्ता असंख्येयगुणाः ६२। बादरवायवोऽपर्याप्ता असंख्येयगुणाः ६३ । सूक्ष्माग्नयोऽपर्याप्ता असंख्येयगुणाः ६४ ॥ ८ ॥

सुहुमा अपज्जभू ६५ वारि ६६ वाउ ६७ अहिआ पजग्गि ६८ संखगुणा ।
भू ६९ जल ७० निल ७१ अहिअ निगोअ अपज्ज ७२ असंख पज संखा ७३ ॥ ९ ॥
अभविय ७४ परिवडिया ७५ सिद्ध ७६ पज्जवायरवणा ७७ अणंतगुणा ।
बायरपज्जत्तहिया ७८ अपज्जबायरवण ७९ असंखा ॥ १० ॥

सूक्ष्मपृथिव्योऽपर्याप्ता विशेषाधिकाः ६५ । सूक्ष्माप्कायिका अपर्याप्ता विशेषाधिकाः ६६ । सूक्ष्मवायवोऽपर्याप्ता विशेषाधिकाः ६७ । सूक्ष्माग्नयः पर्याप्ताः संख्ययगुणाः ६८ । सूक्ष्मपृथिवीकायिकाः पर्याप्ता विशेषाधिकाः ६९ । सूक्ष्माप्कायिकाः पर्याप्ता विशेषाधिकाः ७०। सूक्ष्मवायवः पर्याप्ता विशेषाधिकाः ७१। सूक्ष्मनिगोदा अपर्याप्ता असंख्येयगुणाः ७२। सूक्ष्मनिगोदाः पर्याप्ताः संख्येयगुणाः, यद्यपि पर्याप्ताग्निकायिकादिपर्याप्तसूक्ष्मनिगोदपर्यन्ता अविशेषेणान्यत्रासंख्येयलोकाकाशप्रदेशराशितुल्याः उक्ताः, तथापि लोकासंख्येयत्वस्यासंख्येयभेदभिन्नत्वादित्थमल्पबहुत्वमुपपन्नम् ७३ ॥ ९ ॥ अभवसि-

ङ्किका अनन्तगुणाः, जघन्ययुक्तानन्तकमानत्वात् ७४ । प्रतिपतितसम्यग्दृष्टयोऽनन्तगुणाः, मध्यमयुक्तानन्तकमानत्वात् ७५ । सिद्धा अनन्त गुणाः ७६ । बादरपर्याप्ता वनस्पतयोऽनन्तगुणाः ७७ । सामान्यतो बादरपर्याप्ता अधिकाः, बादरपर्याप्तपृथिव्यादीनां तत्र क्षेपात् ७८ । ततो बादरापर्याप्तवनस्पतयोऽसंख्येयगुणाः, एकैकबादरनिगोदपर्याप्तनिश्रया असंख्येयानां बादरापर्याप्तनिगोदानां संभवात् ७९ ॥ १० ॥

**बायर अपज्ज ८० बायर ८१ अहिया अस्संख सुहुम अपज वणा ८२ ।**
**सुहुम अपजत्त अहिया ८३ संखा सुहुमवणपजत्ता ८४ ॥ ११ ॥**
**अहिआ पजसुहुमा ८५ सुहुम ८६ भविय ८७ णंत ८८ वणि ८९ गिंदि ९० तिरि ९१ मिच्छा ९२ ।**
**अविरय ९३ कसाय ९४ छउमा ९५ सजोगि ९६ संसारि ९७ सव्वजिया ९८ ॥ १२ ॥**

ततः सामान्यतो बादरापर्याप्ता विशेषाधिकाः, बादरापर्याप्तपृथिव्यादीनां तत्र प्रक्षेपात् ८० । ततः सामान्यतो बादरा विशेषाधिकाः, पर्याप्तानां तत्र प्रक्षेपात् ८१ । ततः सूक्ष्मवनस्पतयोऽपर्याप्ता असंख्येयगुणाः ८२ । ततः सामान्यतः सूक्ष्मापर्याप्ता विशेषाधिकाः, सूक्ष्मापर्याप्तपृथिव्यादीनां तत्र प्रक्षेपात् ८३ । ततः सूक्ष्मवनस्पतयः पर्याप्ताः संख्येयगुणाः, सूक्ष्मेषु अपर्याप्तेभ्यः पर्याप्तानां स्वभावत एव संख्येयगुणत्वात् ८४ ॥ ११ ॥ ततः सामान्यतः सूक्ष्माः पर्याप्ता विशेषाधिकाः, पर्याप्तसूक्ष्मपृथिव्यादीनामपि तत्र प्रक्षेपात् ८५ । ततः सामान्यतः सूक्ष्मा विशेषाधिकाः, अपर्याप्तानामपि तत्र

१ "इतोऽग्रे—"मध्यमयुक्तानन्तकमानत्वात्" इत्यधिकं क्वचित् ॥

प्रक्षेपात् ८६ । ततो भवसिद्धिका विशेषाधिकाः, जघन्ययुक्तानन्तकमात्राभव्यपरिहारेण सर्वजीवानां भव्यत्वात् ८७ । ततः सामान्यतो । निगोदजीवा विशेषाधिकाः, प्रत्येकानां सर्वेषामपि मिलितानामसंख्येयलोकाकाशप्रदेशराशिप्रमाणत्वेनाल्पत्वात् शेषाणां भव्यानामभव्यानां च बादरसूक्ष्मनिगोदेष्वेवातिप्राचुर्येण लभ्यमानत्वात् ८८ ततः सामान्यतो वनस्पतयो विशेषाधिकाः, यतः प्रत्येकवनस्पतीनामपि तत्र प्रक्षेपात् ८९ । ततः सामान्यत एकेन्द्रिया विशेषाधिकाः, बादरसूक्ष्मपृथिव्यादीनामपि तत्र प्रक्षेपात् ९० । ततः सामान्यतस्तिर्यञ्चो विशेषाधिकाः, द्वीन्द्रियादीनामपि तत्र प्रक्षेपात् ९१ । ततो मिथ्यादृष्टयो विशेषाधिकाः, कतिपयाविरतसम्यग्दृष्ट्यादिव्यतिरेकेण सर्वजीवानां मिथ्यादृष्टित्वात् ९२ । ततोऽविरता विशेषाधिकाः, अविरतसम्यग्दृष्टीनामपि तत्र क्षेपात् ९३ । ततः सकषायिणो विशेषाधिकाः, देशविरतादीनामपि तत्र क्षेपात् ९४ । ततः छद्मस्था विशेषाधिकाः, उपशान्तमोहादीनामपि तत्र क्षेपात् ९५ । ततः सयोगिनो विशेषाधिकाः सयोगिकेवलिनामपि तत्र प्रक्षेपात् ९६। ततो भवस्था विशेषाधिकाः, अयोगिकेवलिनामपि तत्र प्रक्षेपात् ९७। सर्वजीवा विशेषाधिकाः, सिद्धानामपि तत्र प्रक्षेपात् ९८ ॥ १२ ॥

**गुणतीसअंकतुल्ला मणुआ तेसि नरअट्ठवीसंसे । इगरूवूण जहन्ना सेसा इत्थी उ गब्भभवा ॥ १३ ॥**

पर्याप्तस्थूलवणादिसर्वजीवान्ताः सर्वेमध्यमानन्तके वर्तन्ते । "जहन्नपए संखिज्जा" इति जघन्यपदं नाम यत्र सर्वस्तोका मनुष्याः प्राप्यन्ते किमत्र संमूर्छिमानां ग्रहणमुत गर्भव्युत्क्रान्तिकानाम् ? गर्भजानां सदावस्थायितया तेषामेव ग्रहणं संमूर्छिमविरहे सर्वस्तोकतया प्राप्यमाणत्वात् । उत्कृष्टपदे तूभयेषामपि ग्रहणम् । एकं रूपं संस्थापयित्वा षण्णवतिवारान् द्विगुणद्विगुणीक्रियते, कृते चैकोनत्रिंशदङ्करूपा मनुष्यसंख्या जघन्यपदे समेति "इगरूवूणजहन्ना"इति ॥ १३ ॥

किंचूणावलिघणसमयरासितुल्ला उ बायरपजग्गी । णुत्तरसुराइ अट्ठ उ खित्तपलोवम असंखंसे ॥१४॥

आवलिकासमय १० वर्गस्य १०० कतिपयसमयन्यूनैरावलिकासमय ८ गुणितस्य ८० यावान् समयराशिस्तावत्प्रमाणा बादरपर्याप्ताग्निजीवाः । उक्तं च—"आवलिआ वग्गोणावलिआइ गुणिओ हि बायरा तेऊ" ॥ १४ ॥

माघवयाई तेरस कमसो सेढी असंखभागेणं । सतरस ईसाणाई असंखसेढिप्पएससमा ॥ १५ ॥

सप्तरज्ज्वेकप्रादेशिकश्रेण्यसंख्येयभागप्रदेशराशितुल्या अङ्गुलमात्रक्षेत्रप्रदेशराशेः कल्पनया २५६ रूपस्य संबन्धेन द्वितीयवर्गमूले तृतीयवर्गमूलेन गुणिते यावान् प्रदेशराशिस्तावन्मितश्रेणिप्रदेशप्रमाणाः १ । १५ ॥

तिगुणा तिरूवअहिआ सगवीसगुणा उ सत्तवीसहिया । बत्तीसगुणा बत्तीस अहिअ तिरिनरसुरत्थि कमा

षट्पञ्चाशदधिकशतद्वयाङ्गुलप्रमाणैकप्रादेशिकश्रेणिमात्राणि खण्डानि यावन्ति एकस्मिन् प्रतरे भवन्ति, येषां द्वात्रिंशत्तमो भागस्तावत्प्रमाणा देवपुरुषाः । तेभ्यो द्वात्रिंशत्तमे भागे प्रसारिते यावान् प्रदेशराशिः स्यात् तावत्प्रमाणाः सुरस्त्रियः १६

कीवखयराइसत्तसु अंगुलसंखं सपयरसेढिहरे । अपजपणिंदादट्ठसु अंगुलअस्संखभागो अ ॥ १७ ॥

एकस्मिन् प्रतरे यावन्त्यङ्गुलप्रमाणसंख्येयभागमात्राणि सूचीखण्डानि भवन्ति तावत्प्रमाणाङ्गुलासंख्येयभागमात्राणि सूचीरूपखण्डानि यावन्त्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणाः ॥ १७ ॥

१ चतुर्दशगाथातः समारभ्याग्रेतना सर्वाप्यवचूरिः एकस्मिन्नेव पुस्तके समुपलभ्यते, परं सोपयोगिनीति मूल आहता ॥

अस्संखपयरतुल्ला बायरपजत्तवाउकाया य । बायरअपज्जजलणाइ सोल अस्संखलोगसमा ॥ १८ ॥
अभवियचउत्थणंते पंचमि सम्माइ परिवडिय सिद्धा। सेसा अट्ठमणंते पजथूलवणाइ बावीसं ॥ १९ ॥
इय महदंडमसइं भमिओणुत्तरपयत्थसिद्धि विणा । संपइ तुह आणठिओ सामि अणुत्तरपयं देसु ॥२०॥

॥ समाप्तमिदं महादण्डकस्तोत्रापरपर्यायाल्पबहुत्वविचारस्तवनम् ॥

समाप्तमिदं सावचूरिकमल्पबहुत्वविचारगर्भितं महादण्डकस्तोत्रम् ।

समाप्तमिदं सावचूरिकमल्पबहुत्वविचारगर्भितं
महादण्डकस्तोत्रम् ।

श्रीआत्मानन्द-ग्रन्थमाला-षड्विंशं रत्नम् ( २६ )

"श्रीमद्विजयलक्ष्मीसूरिविरचितम्"

# । श्रीपर्युषणापर्वाष्टाह्निकाव्याख्यानम् ।

पूज्यपादजैनाचार्यश्रीमद्विजयानन्दसूरिप्रशिष्यमुनिमहाराजश्रीहंसविजयशिष्यमुनिश्रीदोलतविजयोपदिष्टजामनगरवास्तव्य "शाह० सोमचंदहर्षचंद" द्रव्यसाहाय्येन प्रकाशयित्री भावनगरस्था

"श्रीजैनआत्मानन्दसभा"

इदं पुस्तकं मुम्बय्यां **वल्लभदास-त्रिभुवनदास-गांधी,** सेक्रेटरी-**श्रीजैन-आत्मानंदसभा-भावनगर** इत्यनेन **निर्णयसागर**मुद्रणालये कोलभाटवीथ्यां २३, तमे गृहे रामचद्र येसु शेडगे द्वारा मुद्रयित्वा प्रकाशितम् ।

( प्रति ५०० ) ( मूल्य भेट )

**वीरनिर्वाणात् २४४०.** आत्मसंवत् १९. **विक्रमसंवत् १९७१.** **श्रावणशुक्ला पंचमी.**

॥ श्रीवीतरागाय नमः ॥

# ॥ परमगुरुश्रीमद्विजयानन्दसूरिपादपद्मेभ्यो नमः ॥

## ॥ श्रीमद्विजयलक्ष्मीसूरिविरचितं पर्युषणाष्टाह्निकाव्याख्यानम् ॥

अथ सामायिकप्रमुखशिक्षाव्रतभृद्भिः नूनं षडष्टाह्निकपर्वाण्यासेव्यानीत्याह ॥ "अष्टाह्निकाः षडेवोक्ताः, स्याद्वाद्यभयदोत्तमैः ॥ तत्स्वरूपं समाकर्ण्य, ह्यासेव्याः परमार्हतैः ॥ १ ॥" स्पष्टः । नवरं अष्टाह्निकाः षट् ताश्चेमाः । एका चैत्रमाससत्का ॥ १ ॥ द्वितीया आषाढमासोद्भवा ॥ २ ॥ तृतीया पर्युषणवासरजा ॥ ३ ॥ चतुर्थी आश्विनमासजाता ॥ ४ ॥ पंचमी कार्तिकमासप्रसृता ॥ ५ ॥ षष्ठी फाल्गुनमाससंबंधिनी ॥ ६ ॥

अत्राष्टाह्निकासु उत्तराध्ययनबृहद्वृत्तौ द्वे शाश्वत्यावभिधीयेते । यदाहुः—

"दो सासय जत्ताओ, तत्थेगा होइ चित्तमासंमि ॥ अट्ठाईआई महिमा, बीआ पुण अस्सिणे मासे ॥ १ ॥ एआओ दोवि सासय-जत्ताओ करंति सव्वदेवावि । नंदीसरंमि खयरा, नरा य निअएसु ठाणेसु ॥ २ ॥ तह चउमासिअतिअगं, पज्जोसवणा य तहय इअ छक्कं ॥ जिण जम्म दिक्ख केवल-निव्वाणाइसु असासइआ ॥ ३ ॥"

जीवाभिगमे चोक्तं ॥ "तत्थणं बहवे भवणवइ-वाणमंतर-जोइस-वेमाणिआ देवा तिहिं चउम्मासिएहिं पज्जोसवणाए अ अट्ठाहिआओ महामहिमाओ करिंतीति" । अत्र चैत्राश्विनाष्टाह्निकयोः श्रीपालमयणादिवत् श्रीसिद्धचक्रयंत्राराधनं, बाह्यतो यंत्रस्वरूपं निर्द्धार्य मनसा ललाटादिदशस्थानेषु यंत्राकृतिं संस्थाप्य ध्यानं चिंत्यं भावतः । सामान्यतः सर्वासु अष्टाह्निकासु अमार्युद्घोषणं विस्तारतः जिनमंदिरेषु अष्टाह्निकमहोत्सवः कार्यः । खंडन-दलन-पेषण-भूमिखनन-वस्त्रधावन-स्त्रीसेवनादिकं करणकारणादिना निषेध्यं । पर्युषणाष्टाह्निका तु वक्ष्यमाणपंचसाधनैः साध्येति । तत्राद्यं सर्वत्राऽमारिप्रवर्त्तनं विधेयं ॥ १ ॥ द्वितीयं कृत्यं साधर्मिकवात्सल्यं ॥ २ ॥ तृतीयं परस्परक्षामणं ॥ ३ ॥ चतुर्थमष्टमतप आराध्यं ॥ ४ ॥ पंचमं चैत्यपरिपाटिककरणं ॥ ५ ॥ तत्राद्यवर्णनमग्रे वक्ष्ये । साधर्मिकार्चनं सर्वेषां कियतां वा यथाशक्ति कार्यं, साम्यधर्माणो हि प्रायेण दुष्प्रापाः । यतः—"सर्वैः सर्वे मिथः सर्व-संबंधा लब्धपूर्विणः । साधर्मिकादिसंबंध-लब्धारस्तु मिताः क्वचित् ॥ १ ॥" तेषां संगमो हि महते पुण्याय किं पुनस्तदनुरूपा सेवा! यतः । "एगत्थ सव्वधम्मा, साहम्मिअवच्छलं तु एगत्थ । बुद्धितुलाए तुलिया, दोवि अ तुलाइं

भणिआइं ॥ १ ॥" अत्र भरत-नरदेव-दंडवीर्य-कुमारपालादिभूभृतामवदाताः स्वयं अभ्यूह्याः । तथा पर्युषणाया परस्परं क्षामणं कार्यं । चंडप्रद्योतं प्रति श्रीमदुदायनभूपवदिति । अथ द्वयोर्मध्ये यद्येकः क्षमयति नाऽपरस्तदा य उपशाम्यति तस्याराधकत्वं नान्यस्य तस्मादात्मनोपशमितव्यम् । क्वचिच्च द्वयोरप्याराधकत्वं । तथाहि । अन्यदा कौशांब्यां सूर्याचंद्रमसौ स्वविमानेन श्रीवीरं वंदितुं समागच्छतः स्म, चंदना च दक्षाऽस्तसमयं विज्ञाय स्वस्थानं गता, मृगावती च सूर्यचंद्रगमनात्तमसि विस्तृते रात्रिं विज्ञाय भीता उपाश्रयमागत्येर्यापथिकीं प्रतिक्रम्य निद्राणां चंदनां प्रवर्त्तिनीं क्षम्यतां ममापराध इत्युक्तवती । चंदनापि भद्रे ! कुलीनायास्तवेदृशं न युक्तमित्युवाच । साप्यूचे भूयो नेदृशं करिष्ये इति पादयोः पतिता । तावता प्रवर्त्तिन्या निद्रागात्, तया च तथैव क्षामणेन केवलं प्राप्तं ! सर्प-समीपात् करापसारणव्यतिकरेण बोधिता यथा जातं विज्ञपिता प्रवर्त्तिन्यपि कथं महत्तमसि सर्पोऽज्ञायीति पृच्छंती तस्याः केवलं ज्ञात्वा मृगावतीं क्षमयंती केवलमाप । तेनेदृशं मिथ्यादुष्कृतं देयं, न पुनः कुंभकारक्षुल्लकज्ञातेन, तथाहि । कश्चित् क्षुल्लको भांडानि काणीकुर्वन् कुंभकृता निषिद्धो मिथ्यादुष्कृतं दत्ते, न पुनस्ततो निवर्त्तते, ततः सोऽपि कर्करैः क्षुल्लककर्णमोटनं कुर्वन् पुनः पुनः क्षुल्लेन पीड्येहमित्युक्तोऽपि मुधा मिथ्यादुष्कृतं ददौ इति ॥

तथा पर्युषणायामवश्यमष्टमतपो विधेयं । यतः—पाक्षिकतपस्तु एकोपवासमितं, चातुर्मासिकोचितं तपस्तु षष्ठ-मितं, वार्षिकपर्वणि तु अष्टमतपोऽभिहितं जिनैः । अष्टमतपोविधानाक्षमैः तत्तपःपूर्त्यर्थं षडाचाम्लानि विधेयानि,

तदशक्तौ सत्यां च नव निर्विकृतिकानि वा, द्वादश ( १२ ) एकाशनानि वा, चतुर्विंशति ( २४ ) द्व्यशनानि, अथवा षट् ( ६ ) सहस्रमितः स्वाध्यायो विधेयः, षष्टि ( ६० ) जपमालिकाः ( नवकारावलिकाः ) गुण्याः । अनया रीत्यापि तपःपूर्त्तिः कार्या, अन्यथा जिनाज्ञोलंघनदोषः स्यात् ।

अत्र प्रसंगात् 'नवकारसी' आदितपःफलानि दर्श्यंते "एकशतवर्षाणि यावन्नारकजीवोऽकामनिर्जरया यावंति कर्माणि क्षिपति तावन्मितकर्म्माणि पापजनितानि 'नवकारसी' प्रत्याख्यानेनाऽपनयति, 'पौरुषी' प्रत्याख्यानेन एकसहस्रवर्षदुरितं अपनयति । सार्द्धपौरुषीप्रत्याख्यानेन तु दशसहस्रवर्षमितं, एवं पुरिमार्द्धेन एकलक्षवर्षमितं, अचित्तजलसत्कैकाशनेन दशलक्षवर्षमितं पातकं हंति, निर्विकृतितपसा एककोटीवर्षमितं, 'एकलठाणुं' प्रत्याख्यानेन दश कोटीवर्षमितं । एकलदत्तेन शत ( १०० ) कोटीवर्षमितं, एकसहस्रकोटीवर्षमितं कर्म आचाम्लतपसा, दशसहस्रकोटीवर्षमितमुपवासतपसा, एकलक्षकोटीवर्षमितं षष्ठतपसा, दशलक्षकोटीवर्षमितमष्टमाख्यतपसा दुरितं हंति, तदनु सर्वत्रैकैकोपवासवृद्ध्या क्रमेण दशगुणोऽङ्कः प्रवर्द्धनीयः" ।

अष्टमपतसा नागकेतुरत्रैव भवे प्रत्यक्षं फलं प्रापेति । सर्वमपि तपः गतशल्यं कार्यं, स शल्यं तु दुष्करमपि तपो निरर्थकम्, तथाहि—इतोऽशीतितमचतुर्विंशतौ नृपस्य बहुसुतस्योपयाचितशतैर्जाता बहुमान्या पुत्री, स्वयंवरमंडपे वृतवरा, दुष्कर्मतश्चतुरिकांतमृतपतिका, सुशीला, सतीषु प्राप्तरेखा, सुश्राद्धधर्मनिष्ठाऽन्यदाऽन्त्यार्हद्दीक्षिता लक्ष्मणार्या कदाचिद्घट-

कयुग्मसुरतं वीक्ष्य दध्यौ । अर्हता किमेतन्नानुमतं ! अवेदोऽसौ वा न वेत्ति सवेददुःखमित्यादि ! क्षणान्तरे जात-पश्चात्तापया तया ध्यातं, कथमालोचयिष्यामीति प्रोद्भूतत्रपापि सशल्यत्वे सर्वथा न शुद्धिरित्यालोचितुं स्वं प्रोत्साह्य यावद्याति तावदचिंतिते कंटके भग्नेऽपशकुनेन क्षुब्धा य ईदृग् दुर्ध्यायति तस्य किं प्रायश्चित्तमिति परव्यपदेशेन पंचाशद्वर्षं यावत् तीव्रं तपस्तेपे ॥ उक्तंच ॥ 'छट्टट्ठम दसम दुवालसेहिं. निव्विगइएहिं दस वरिसे । तहय खवण-एहिं दुन्नि अ, दो चेव य भुज्जिएहिं च ॥ १ ॥ मासक्खमणेहिं सोलस, वीसं वासाइं अंबिलेहिं च । लक्खण अज्जा एवं, कुणइ तवं वरिस पन्नासं ॥ २ ॥'' एवं दुस्तपो विधानेऽपि सा न शुद्धा, प्रत्युतार्त्तध्यानान्मृता, दासाद्यसंख्य-भवेष्वनुभूततीव्रतरदुःखा, श्रीपद्मनाभतीर्थकृत्तीर्थे सेत्स्यति, तदुक्तं-''ससल्लो जइवि कट्ठुग्गं घोरं वीरं तवं चरे । दिव्वं वास सहस्सं तु, तओ तं तस्स निप्फलं ॥ १ ॥'' इति ।

तथा वार्षिकप्रतिक्रमणे अष्टाधिकसहस्र ( १००८ ) श्वासोच्छ्वासमितः कायोत्सर्गः ज्ञेयः, प्रतिचतुर्विंशतिस्तवं च 'चंदेसु निम्मलयरा' इति यावता पंचविंशति (२५) श्वासोच्छ्वासाः गुण्याः, चत्वारिंशत् (४०) लोगस्सध्यानैकनम-स्काराधिके ( १००८ ) 'पाय समा ऊसासा' इत्यत्र ज्ञेयं । चातुर्मासिकप्रतिक्रमणे पंचशत ( ५०० ) श्वासो० । पाक्षिकप्रतिक्रमणे त्रिशत ( ३०० ) श्वा० । अत्रैककश्वासोच्छ्वासमध्ये कियत्परिमितं देवायुर्बध्नाति तदुच्यते । ''द्वि-लक्षपंचचत्वारिंशत्सहस्रचतुश्शताष्टमितपल्योपमानि ( २४५४०८ ) एकपल्योपमस्य नव भागाः क्रियंते तन्म-

ध्यगताश्चत्वारो भागाः ग्राह्याः । यतः–"लक्खदुग सहस्स पणचत्त–चउसया अट्ठ चेव पलियाइं । किंचूणा चउ भागा, सुराउबंधो इगुस्सासे ॥ १ ॥" समस्तनमस्काराष्ट ( ८ ) श्वासोच्छ्वासमध्ये एकोनविंशतिलक्षत्रिषष्टिसहस्रद्विशतस-सषष्टिमितपल्योपमानि ( १९६३२६७ ) सुरायूंषि बद्ध्यंते । तथैकोद्योतकरपंचविंशति ( २५ ) श्वासोच्छ्वासमध्ये एकषष्टि ( ६१ ) लक्षं पंचत्रिंशत् ( ३५ ) सहस्रं द्विशतं ( २१० ) चोपरि दशेति संख्यायाः पल्यानि, देवलोकेषु येषां देवानां आयुः एतावत्पल्यमितं स्यात् तत्रोत्पद्यते ॥

तथा पर्युषणापर्वणि चैत्यपरिपाटी कार्या, चैत्यार्चादिभिः शासनोन्नतिर्विधेया । यथैकदा वज्रस्वामी दुर्भिक्षे प्रसृते संघं पट्टे संस्थाप्य सुभिक्षां पुरीं नीतवान् , तत्र बौद्धराज्ञा जिनचैत्येषु पुष्पनिषेधः कृतः, तदनु पर्युषणायां श्राद्धैर्वि-ज्ञप्तो व्योमविद्यया माहेश्वरीपुर्यां पितृमित्रमारामिकं पुष्पप्रगुणीकरणार्थमादिश्य स्वयं हिमवदद्रौ श्रीदेवीगृहे गतः, ततश्च श्रियादत्तं महापद्मं हुताशनवनाद्विंशतिलक्षपुष्पाणि च लात्वा जृंभकामरविकुर्वितविमानस्थः समहोत्सवमागत्य श्रीजैनशासनं प्रभावयन् नृपमपि श्रावकं चक्रे इति ।

तथाऽष्टाह्निकपर्वसु अमारिप्रवर्त्तनं कार्यं श्रीकुमारपालसंप्रतिनृपादीनामिव । संप्रतिकालेऽपि श्रीहीरगुरूपदेशाद्-कब्बरशाहिना स्वकीयाखिलदेशेषु षाण्मासिकामारिप्रवर्त्तनं कृतं । तथाहि समासतः, एकदा स्वप्रधानादिभ्यः श्रीहीर-सूरिवर्णनं श्रुत्वा श्रीअकब्बरेण स्वनामांकितं आज्ञापत्रं (फुरमानं) प्रेष्यातिबहुमानेनाकारितास्ततः सूरयोपि गंधारतः संवत्

( १६३९ ) ज्येष्ठबहुलत्रयोदशीदिने तत्र संप्राप्ताः श्रीशाहिना समं मिलिताः । शाहिना सादरं पृष्टः सूरिः तथा धर्मोपदेशं ददे यथा आगराद्रंगतोऽजमेरपुरं यावदध्वनि प्रतिकोशं कूपकोपेतमनारादीन्विधाय स्वकीयाखेटकलाकुशलताप्रकटनकृते प्रतिमनारं शतशो हरिणविषाणारोपणविधानादिना प्राग् हिंसाकरणरनिरपि सः भूपो दयामतिः संजातः । ततः श्रीशाहिरवदत् यत् श्रीमंतो मयादर्शनोत्कंठितेन दूरदेशादाकारिता अस्मदीयं च न किमपि गृह्णते तेनास्मत्सकाशात् श्रीमद्भिरुचितं याच्यम् । ततो विचार्य सूरिभिस्तदीयाखिलदेशेषु पर्युषणापर्वसत्काष्टाह्निकायाममारिप्रवर्त्तनं,बंदीजनमोचनं चाऽयाचि । ततस्तद्गुणचमत्कृतमनसा श्रीशाहिनाऽस्मदीयान्यपि चत्वारि दिनानि समधिकानि भवंतु, इति कथयित्वा स्ववशीकृतदेशेषु ( गुर्जर ) श्रावणबहुलदशमीतःप्रारभ्य भाद्रपदशुक्लषष्ठीयावदऽमारिप्रवर्तनाय द्वादशदिनामारि सत्कानि स्वनामांकितानि षडाज्ञापत्राणि (फुरमानानि) त्वरितमेव श्रीगुरुभ्यः समर्पितानि। प्रथमं श्रीगुर्जरदेशीयं, द्वितीयं मालवदेशसत्कं, तृतीयं अजमेरदेशीयं, चतुर्थं दिल्लीफतेपुरसत्कं, पंचमं लवपुर (लाहोर) मुलतानदेशसत्कं, श्रीगुरुपार्श्वे रक्षणाय षष्ठं देशपंचकसंबंधि साधारणं चेति। तेन तत्तद्देशेष्वऽमारिपटहो विस्तृतः। तथा श्रीगुरूणां पार्श्वादुत्थाय तदैवाऽनेकगव्यूतमिते डाबरनाम्नि महासरसि गत्वा साधुसमक्षं स्वहस्तेन नानाजातीयानां देशांतरीयजनप्राभृतीकृतानां पक्षिणां मोचनं चक्रे । तथा कारागारस्थबहुजनानां बंधनभंजनमप्यकारि । ततः श्रीसूरिणा शाहिप्रार्थनया श्रीजंबूद्वीपप्रज्ञप्तिवृत्तिविधायकवाचकश्रीशांतिचंद्राः स्वपरशास्त्रज्ञाः पश्चिमाधीशवरुणसुरदत्तवरास्तत्र धर्मश्रा-

वणार्थं निहिताः । तैश्च स्वोपज्ञकृपारसकोशाख्यशास्त्रजलेन सिक्ता सती वृद्धिमती कृपालता श्रीशाहिहृदये बभूव। तथै-कदा शाहिपुर आमलकप्रमाणे द्वे मुक्ताफले केनचिदिभ्येन प्राभृतीकृते तं सन्मान्य स्वकोशाधिपं वालव्यजनकारकं द्वादशहजारीमुनसफविरुदविभ्रतं च प्रति ते फले रक्षणाय प्रदत्ते। सोऽपि स्वगृहे गत्वा स्वभार्यां ददौ, सापि स्नानो-त्सुका स्ववस्त्रे बध्वा स्नानं चकार। तदनु सुरत्राणसत्के ते ज्ञात्वा खेटस्थले मुमोच, क्रमादामयार्दिता सा पंचत्वं प्राप॥

अथान्यदा नृपेण ते मार्गिते, सः स्माह हे स्वामिन्! मद्गृहात्समानयामि, ततस्तेन स्वमंदिरं सर्वत्रान्वेषितं परं क्वापि ते अप्राप्य चिंतार्दितः निस्तेजा व्याघुट्य आयाति नृपाभ्यर्णे। तदांतराले पुण्योदयेन वाचकेन्द्रा मिलिताः, तैश्चिंतास्वरूपं पृष्टं, जीवितमुक्तस्पृहेण तेन यथाजातं विज्ञप्तं। तदा ते प्राहुः त्वं गृहे गत्वा पूर्वं यत्र यस्यै दत्ते तत्रैव तस्याः समीपे मार्गणीये, सोऽपि गृहे गतः तथैव स्नानोद्यतां तां वीक्ष्य ते मार्गिते, तयापि स्वपटीयांचलग्रंथीमुन्मु-द्र्य दत्ते, सोऽपि प्राप्ताश्चर्यः शाहिपार्श्वे समेतः तत्पुरः ते संस्थाप्य चामरवीजनोद्यतोऽभूत्, परं तदाश्चर्यमग्नः भूयो भूयः स्तिमितजडत्वं प्राप्नोति, तदा शाहिना पृष्टः, किमद्य चित्रलिखित इव त्वं भवसि? इति निर्बंधेन पृष्टः सर्वं जातं स्माह। तदा शाहिनोदितं, किमत्र चित्रं? स तु द्वितीयो विश्वेशोस्ति!

अथ प्रगे धर्मश्रावणार्थं सभामध्ये वाचकेंद्रः कांचनपादपीठमुपरि समेत्य स्थितः, ततो भूपः प्रणम्येति व्यजिज्ञ-पत्, हेपूज्य! कमप्याश्चर्यमस्मान् दर्शय, सोऽप्याह कल्ये गुलाबपुष्पारामे त्वयागंतव्यं, प्रगे शाहिस्तत्र गतो, वाच-

केन्द्रोऽपि तत्रागात्, द्वौ परस्परं धर्मगोष्टीं यावत्तनुतां तावत् 'शाहिनौबत' गर्जारवो जातः, सहसा तदाकर्ण्य चकितः स्वसेवकान् पप्रच्छ, अस्मदाज्ञां विना कस्यापि ढकारवो द्वादशगव्यूतिमध्ये न जायते पश्यत यूयं, ततस्ते विलोक्य साधिपं प्राहुः, हे साधिप ! युष्मत्पिता 'हिमायुँ' सचमूः त्वां मिलनाय समेति ! इति कथनानंतरमेव समेत्य च पुत्रं परिरभ्य स्थितः, सर्वेषामकबरसैनिकानां मेवामिष्टान्नभृतरजतपात्राणि ददौ, शाहिं प्रति महत् सन्मानं दत्वा यथागतस्तथा ययौ, क्षणेनादृश्योऽभूत्! शाहिः साश्चर्यं दध्यौ च नेदं तांत्रिकं ! यतः अस्मदादिसमर्पितवस्तूनीमानि प्रत्यक्षं दृश्यंते, अतः नूनमिदं चेष्टितं गुरुणा निर्मितं ! ततः गुरुं नत्वा स्तुतिं चकार ।

अथैकदा शाहिः अटकदेशेशजयनार्थं द्वात्रिंशत् ( ३२ ) कोशमितं प्रयाणमकरोत्, तदा शाहिना स्वभक्तस्वांतिकसमागतजनान्वेषणं नामग्राहपूर्वं कारितं, तन्मध्ये वाचकचंद्रस्यापि नाम श्रुत्वा दध्यौ, अहो ! वाहनोपानहादिविमुक्ता अमी महद्दुःखं प्राप्ता अभविष्यन् ! ततस्तदाकारणाय स्वोपजीविन् प्राहिणोत्, ते तं प्राहुः त्वां शाहिः आकारयति । तदा च वाचकेंद्रावस्था ईदृशी जातास्ति—"शोफयुक्तचरणत्वात् पदमात्रमप्यग्रे चलनाक्षमाः टौप्परकस्थितप्रासुकजलेन वस्त्रांचलमार्द्रीकृतं स्वोरसि स्थापितमस्ति, द्वौ शिष्यौ वैयावृत्यं कुर्वतः"—सेवकैः एतत्स्वरूपं नृपाय निवेदितं, तदा शाहिः सुखासनमप्रेषयत् । तदा सः एकां काष्ठवलिकामानाय्य तदुपरि आरुरोह, द्वौ शिष्यौ काष्ठप्रांतौ स्कंधे न्यस्य चलितौ, शाहिना तथावस्थं तमागच्छंतं वीक्ष्य दध्यौ, अहो! गुरुवाक्यभक्ता धन्याः इमे ये मद-

नुयायिन' संति ! अन्यथा मदभ्यर्णे न काप्येषां प्राप्तिः ! अहो क्षमानां क्षमा ! ततः शाहिः अभिमुखीभूय तत्पादयुग्मं चक्षुर्भ्यां पस्पर्श, प्राह च, स्वामिन् ! अतः परं मत्कृते महत्प्रयाणं युष्माभिर्न विधेयं, शनैः शनैः पश्चात् समेतव्यं । ततः शाहिः क्रमेणाटकदेशाधिपपुरं परिवेष्ट्य स्थितः, द्वादश वर्षाणि जातानि परं तद्वप्रः न स्वायत्तोभूत्।

एकदा शाहिपुरः म्लेच्छाः भूपं स्माहुः, त्वं प्रत्यहं कापुरुषश्वेतपटसंगं करोषि तेनायं च दुर्गः दुर्ग्रहोऽनुमीयते ! तद्वृत्तं भूपेन तस्मै ज्ञापितं, गुरुः प्राह यद्दिवसे दुर्गग्रहणेच्छा तव स्यात् तत्समये गृह्यते, परंत्वत्सैन्यं सर्वं स्कन्धावारे एव स्थाप्यं आवां द्वावेव व्रजावः, पुरांतर्बहिश्च कस्यापि केनापि हिंसा न विधेया ! ततः पटहोद्घोषेण हिंसां सर्वत्र निवार्य प्रभाते द्वावेव दुर्गसमीपमियतुस्तदा सर्वे निंदका ऊचुः, असौ कापुरुषः अकबरं शत्रुहस्ते समर्पिष्यति ! ततः वाचकेन एकया फूत्कृत्या सर्वा वप्रखातिका रजःपूर्णीकृता, द्वितीयया शत्रुसैन्यं स्थंभितं, तृतीयया च गोपुराणि फुल्लिकानीव स्फूटितानि, ततः शाहिः सोत्साहं साश्चर्यं पुरे स्वाज्ञामखंडां चकारेति च गुरुं प्राह । हे पूज्य ! मम किंचित् सानुग्रहं विधाय समादिशतु । तदा वाचकेंद्रेण चतुर्दश ( १४ ) कोटिद्रव्यस्थानकं प्रतिवर्षं 'जीजीया' करमोचनं राज्ञो याचितं, सपादसेरचटकजिह्वाभक्षणं त्वया न कार्यं, सुवर्णटंकैकशत्रुंजयकरमोचनं याचितम्, षाण्मासिकामारिप्रवर्त्तनं च याचितम् । तथाहि—श्रीमत् शाहिजन्मसंबंधिमासः, श्रीपर्युषणापर्वसत्कानि द्वादश ( १२ ) दिनानि, सर्वे रविवाराः, सर्वाः

संक्रांतितिथयः, नवकरोजसत्को मासः, सर्वे ईदवासराः, सर्वे मिहरवासराः, सोफीआनवासराश्चेति षाण्मासिकामारिसत्कफुरमानानि च श्रीशाहिपार्श्वात्समानीय श्रीगुरूणां प्राभृतीकृतानि वाचकेन्द्रेणेति ।

"अष्टाह्निकापर्वसु शासनोन्नतिं, नानाविधां धर्मविवृद्धिहेतवे ।
पूर्वोक्तयुक्त्या विदधत्त भावुकाः, सौभाग्यलक्ष्म्यंचितपुण्यसंस्पृहाः ॥ १ ॥

॥ इति पर्युषणाष्टाह्निकासत्कप्रथमाह्नो व्याख्यानम् ॥

---

## ॥ अथाष्टाह्निकपर्वद्वितीयदिनव्याख्यानम् ॥

॥ अथाष्टाह्निकपर्वाराधकैः वर्षकृत्यानि विधेयानीत्याह ॥

"संघार्चादिसुकृत्यानि, प्रतिवर्षं विवेकिना । यथाविधि विधेयानि, एकादशमितानिवै ॥ १ ॥"

स्पष्टः—नवरं—एकादश सुकृत्यानि पूर्वसूरिप्रणीतगाथाभिः प्रदर्श्यंते ।

"पइवरिसं संघच्चण ( १ ), साहम्मिअंभत्ति ( २ ) तह्य जत्त तिगं ( ३ ) जिणगिहि ण्हवणं ( ४ ) जिणधण

वुड्ढि ( ५ ) महपूअ ( ६ ) धम्मजागरिआ ( ७ ) ॥ १ ॥ सुअपूआ ( ८ ) उज्जवणं ( ९ ) तहे व तित्थस्स पभावणा ( १० ) सोहि ( १ ) ॥" व्याख्या—

प्रतिवर्षं जघन्यतोऽपि एकैकवारं संघार्चनं, चतुर्विधश्रीसंघपूजा, तत्र साधुसाध्वीभ्यो निर्दोषाहारपुस्तकादिकं दत्ते, श्रावकश्राविकाभ्यो यथाशक्ति परिधापनादिकं विधत्ते, संघार्चा त्रिधा, उत्कृष्टा, मध्यमा, जघन्या च, सर्वादरेणसंघपरिधापनेउत्कृष्टा, सूत्रमात्रादिना जघन्या, शेषा मध्यमा, तत्राधिकं व्ययितुमशक्तो गुरुभ्यः सूत्रमुखवस्त्रिकादिकं द्वित्रिश्राद्धश्राद्धीभ्यः पूगादिकं च दत्वा प्रतिवर्षं संघार्चाकृत्यं भक्त्या सत्यापयति, निर्द्धनस्य एतावदपि महाफलं पूणीयाश्राद्धस्येव—यतः—

"संपत्तौ नियमः शक्तौ, सहनं यौवने व्रतम् । दारिद्र्ये दानमप्यल्पं, महालाभाय जायते ॥ १ ॥" इति ॥ १ ॥

तथा साधर्मिकाणां निमंत्रणं, विशिष्टासनवसनादिदानं, आपन्निमग्नानां स्वधनव्ययेनाप्युद्धरणं—उक्तं च—

"न कयं दीणुद्धरणं, न कयं साहम्मिआण वच्छल्लं । हिअयंमि वीयराओ, न धारिओ हारिओ जम्मो ! ॥ १ ॥"

श्राविकास्वपि वात्सल्यं श्रावकवदन्यूनाधिकं विस्तार्यम् , ता अपि रत्नत्रयीवत्यः सुशीलाः सधवा विधवा वा साधर्मिकत्वेन ध्येयाः, अत्र शिष्यप्रश्नः—हेस्वामिन् ! स्त्रियो लोके लोकोत्तरे च दोषान्विताः प्रसिद्धाः, यतः—

"अनृतं साहसं माया, मूर्खत्वमतिलोभता । अशौचं निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥" अत्र सुकु-

मालिका–सुरीकांता–कपिला–अभया–नूपुरपंडिता–नागश्री प्रमुखाणामवदाता स्वयमभ्यूह्याः । आगमेऽपि–"अण-
ताओ पावरासिओ, जया उदयमागया । तया इत्थित्तणं पत्तं, सम्मं जाणाहि गोयमा ! ॥ १ ॥" अत्र रज्जार्या-
दीनामुदंताः, सर्वत्र तासां निंदा दृश्यते, अतः तासु दानसन्मानवात्सल्यं कथं युक्तम् ?

गुरुराह । नायमेकांतो यद्वनिता एव दोषबहुलाः, पुरुषा अपि केचित् 'अक्खाइराठोड'सदृशाः महाक्रूराशयाः
नास्तिका देवगुरुवंचकाश्च भूयांसोपि दृश्यंते, एवं स्त्रीणामपि कासांचित् दोषबहुलत्वमुपलभ्यते, तथापि कासांचित्
गुणबहुलत्वमप्यस्ति, अत्र सुलसा–रेवती–कलावती–मदनरेखादयः श्राविकाः श्रीतीर्थनाथैरपि अनेकधा स्तुताः !
अतस्तासां जननीनामिव भगिनीनामिव स्वपुत्रीणामिव वात्सल्यं युक्तियुक्तमेवेत्यलम् ॥ २ ॥

तथा प्रतिवर्षं जघन्यतोप्येकैका यात्रा कार्या, यात्रात्रिकं–यतः—

"अष्टाह्निकाभिधामेकां, रथयात्रामथापराम् । तृतीयां तीर्थयात्रां चे–त्याहुर्यात्रा त्रिधा बुधाः ॥ १ ॥"

तत्र सर्वासु अष्टाह्निकासु सर्वचैत्यपूजादिमहामहो विधेयः ( १ ) रथयात्रा तु कुमारपालभूपालेनैवं कृता–यतः—

"चित्तस्स अट्ठमीदिणे, चउत्थपहरे महाविभूईए । सहरिसमिलंतनायर–जणकयमंगलजयसद्दो ॥ १ ॥
सोवण्णजिणवररहो, णीहरइ चलंतसुरगिरिसमाणो । कणगोरुदंडधयछत्त–चमररार्इहिं दिप्पंतो ॥ २ ॥
ण्हविय विलित्त कुसुमेहिं, पूइअे तत्थ पासजिणपडिमं । कुमरविहारदुवारे, महाजणो ठवइ रिद्धीए ॥ ३ ॥

तूररवभरियभुवणो, सरसणचंतचारुतरुणीगणा । सामंतमंतिसहिओ, वचइ णिवमदिरंमि रहो ॥ ४ ॥
राया रहत्थपडिमं, पट्टंसुअकणयभूसणाइहिं । सयमेव अचिउं कारवेइ विविहाइं णट्टाइं ॥ ५ ॥
तत्थ गमिऊण रयणीं, णीहरिउं सीहबार वाहिंमि । ठाई एवंचिअ धय—तंडवंमि पडमंडवंमि रहो ॥ ६ ॥
तत्थ पहाए राया, रहजिणपडिमाइ विरइउं पूअं । चउविहसंघसमक्खं, सयमेवारत्तिअं कुणइ ॥ ७ ॥
तत्तो णयरंमि रहो, परिसक्कइ कुंजरेहिं जुत्तेहिं । ठाणे ठाणे पडमंडवेसु विउलेसु दिट्ठंतो ॥ ८ ॥'' इत्यादि ॥

अथ तीर्थानि—श्रीशत्रुंजय—श्रीरैवतादीनि, तथा तीर्थकृज्जन्मदीक्षाज्ञाननिर्वाणविहारभूमयोऽपि प्रभूतभव्यसत्वशुभभावसंपादकत्वेन भवोदधितारणात्तीर्थानि कथ्यंते, तेषु दर्शनादिविशुद्ध्यर्थं विधिवत् यात्रा करणम् , यथा—श्रीसिद्धसेनार्कप्रतिबोधितविक्रमार्कस्य श्रीशत्रुंजययात्रासंघे एकोनसप्तत्यधिकशतं ( १६९ ) सौवर्णाः देवालयाः, पंचशती ( ५०० ) दंतचंदनादिमयाः, श्रीसिद्धसेनाद्याः पंचसहस्राः ( ५००० ) सूरयः, चतुर्दश ( १४ ) भूपाः मुकुटबद्धाः, सप्ततिलक्षाणि (७००००००) श्राद्धकुटुंबानि, एका कोटिर्दश लक्षाणि नव सहस्री च (११००९०००) शकटानि, अष्टादश लक्षाणि ( १८००००० ) तुरंगमाः, षट्सप्ततिशतानि ( ७६०० ) गजाः, एवं करभवृषभा दयोऽपि ज्ञेयाः॥

श्रीकुमारपालस्य स्वर्णरत्नादिमयाश्चतुस्सप्तत्यधिकाष्टादशशती ( १८७४ ) देवालयाः ॥ आभूसंघपतेस्तु सप्त शतानि ( ७०० ) तद्यात्रायां द्वादश कोटि ( १२०००००००० ) स्वर्णव्ययः ॥ साधु—पेथडस्यैकादशरूप्यटंकलक्ष-

व्ययः ( ११०००००० ) तीर्थदर्शने, संघे देवमंदिराणि द्वापंचाशत् ( ५२ ), मनुष्याः सप्त लक्षाः ( ७०००००० )॥ मंत्रिवस्तुपालस्य सार्द्धद्वादश ( १२ ॥ ) यात्राः प्रसिद्धा इति ॥ ३ ॥

तथा चैत्ये स्नात्रमहोऽपि विस्तरेण सर्वपर्वसु कर्त्तुमशक्तेनापि प्रतिवर्षमेकैकः कार्यः, श्रूयते हि सा० पेथडेन श्रीरैवतस्नात्रमहामहे षट्पंचाशद्धटीस्वर्णेनेन्द्रमाला परिदधे, श्रीशत्रुंजयरैवतयोश्चैक एव कांचनमयो ध्वजः प्रददे, तत्सुतेन सा० झांझणेन तु दुकूलमय इति ॥ ४ ॥

तथा देवद्रव्यवृद्ध्यर्थं प्रतिवर्षं मालोद्घट्टनं कार्यम्, तत्र च ऐन्द्री अन्या वा माला ग्राह्या, श्रीरैवते श्वेतांबरदिगंबरसंघयोः समं प्राप्तयोः तीर्थविवादे य इन्द्रमालां परिधत्ते तस्येदं तीर्थमिति वृद्धोक्तौ साधुपेथडेन षट्पंचाशद्धटीस्वर्णेनेन्द्रमाला परिदधे, चतुर्द्धटीस्वर्णं मार्गणेभ्यो ददे, तीर्थं स्वं चक्रे, इत्यादि शुभ विधिना देवद्रव्यस्य वृद्धिः कार्येति ।५।

तथा प्रतिवर्षं पर्वसु चैत्ये महापूजा विधेयेति ॥ ६ ॥

तथा रात्रिजागरणं तीर्थदर्शने च कल्याणकदिनेषु च गुरुनिर्वाणदिनादौ च कार्यं, श्रीवीतरागगुणगीतनृत्यादिमहैरिति।७।

तथा श्रुतज्ञानस्य भक्तिः प्रत्यहं कर्त्तुमशक्तेन प्रतिवर्षं प्रतिमासं च कार्येति ॥ ८ ॥

तथा नवपदसिद्धचक्रैकादशीपंचमीरोहिणीज्ञानदर्शनचारित्रादिविविधतत्तत्तपःसंबंधिषु उद्यापनेषु जघन्यतोऽपि एकैकमुद्यापनं वर्षे वर्षे यथाविधि कार्यम्—यतः—

"उद्यापनं यत्तपसः समर्थने, तच्चैत्यमौलौ कलशाधिरोपणम् । फलोपरोपोऽक्षतपात्रमस्तके, तांबूलदानं कृतभोजनोपरि १"

सर्वत्र शुक्लपंचम्यादिविविधतपसामपि तत्तदुपवासादिसंख्यानाणकवर्त्तुलिकानालिकेरमोदकादिनानाविधवस्तुढोकनादि यथाश्रुतसंप्रदायमुद्यापनानि विधेयानीति ॥ ९ ॥

तथा तीर्थप्रभावनादि जघन्यतोऽपि प्रतिवर्षमेकवारं कार्यम्, तत्र श्रीगुरुप्रवेशोत्सवः सर्वांगीणप्रौढाडंबरचतुर्विधश्रीसंघसंमुखगमनं श्रीगुर्वादिसंघसत्कारादिना यथाशक्ति कार्यः, श्रीवीरवंदनमहोत्सवे श्रीऔपपातिकसूत्रवर्णितकूणिकनृपवद्वा, प्रदेशिभूपवद्वा, उदायनक्ष्मापवद्वा, दशार्णभद्रमहीनाथवद्वा विधेयः । तथा साधु—पेथडेन श्रीधर्मघोषसूरीणां प्रवेशोत्सवे द्वासप्ततिसहस्र ( ७२००० ) टंकक व्ययश्चक्रे । न च संविग्नसाधूनां प्रवेशोत्सवोऽनुचित इति वाच्यम्, यतो व्यवहारभाष्ये प्रथमाधिकारे—"तिरिआ उब्भाम निओअ दरिसणं सण्णिसाहु मप्पाहे । दंडिअ भोइअ असई, सावगसंघो व सक्कारं ॥ १ ॥" तीरितायां समासप्रतिमायां उत् प्राबल्येन भ्रमंत्युद्भ्रमा भिक्षवः तेषां नियोगो व्यापारो यत्र स उद्भ्रामकनियोगो ग्रामः तत्रागत्य स्वात्मानं दर्शयति, ततः संयतं, संज्ञितं वा श्रावकं संदेशयति, यथा 'समापिता मया प्रतिमा ततोऽहमागतः' ततो दंडिको राजा, भोगिको ग्रामाध्यक्षः, तदभावे श्रावकवर्गः संघश्च सत्कारं प्रवेशोत्सवादिकं करोति शासनोन्नतेस्तीर्थकृत्त्वादिफलत्वादिति ॥ १० ॥

तथा गुरुयोगे जघन्यतोऽपि प्रतिवर्षं आलोचना गुरुभ्य आदेया, यतः—

"जंबुदीवे जे हुंति, पव्वया ते चेव हुंति हेमस्स । दिज्जंति सत्तखित्ते, न छुट्टए दिवसपच्छित्तं ॥ १ ॥
जंबुदीवे जे हुज्ज, वालुआ ते चेव हुंति रयणाइं । दिज्जंति सत्तखित्ते, न छुट्टए दिवसपच्छित्तं ॥ २ ॥"

आलोचनां विना बहुवासरोपार्जितपापहानिः कथं स्यात् ? विधिवदालोच्य गुरुदत्तं प्रायश्चितं विधत्ते तदा तद्भवेऽपि शुद्धयति, कथमन्यथा दृढप्रहारिप्रमुखानां तद्भवेऽपि सिद्धिरिति ॥ ११ ॥

"कृत्यान्यमूनि प्रतिवत्सरं हि ये, श्राद्धा वितन्वंति विवेकसंभृताः ।
तत्पुण्यपुष्ट्या कृतिनः कृतार्थिनः, ते द्यां लभंते प्रभुधर्मरागिणः ॥ १ ॥

॥ इति पर्युषणाष्टाह्निकासत्कद्वितीयाह्नो व्याख्यानम् ॥

# ॥ अथाष्टाह्निकपर्वतृतीयदिनव्याख्यानम् ॥

॥ अथ पर्वदिनेषु पौषधो न हेय इत्याह ॥ "ये पौषधोपवासेन, तिष्ठंति पर्ववासरे । अंतिम इव राजर्षि–र्धन्यास्ते गृहिणोऽपि हि ॥ १ ॥" स्पष्टः ॥ श्लोकसूचितसंबंधस्त्वयम्—

सिंधुसौवीरदेशे वीतभयादित्रिषष्ठ्यधिकत्रिशती ( ३६३ ) नगराधीश उदायननृपस्तस्य प्रभावती पट्टदेव्यस्ति, तयोरभीचिनाम्ना पुत्रस्तस्य 'केशी' इति नाम्ना भागिनेयोप्यस्ति ।

इतश्च चंपायामाजन्मस्त्रीलंपटः, कुमारनंदिस्वर्णकृत् यां यां सुरूपां कन्यां शृणोति तां स्वर्णपंचशतीं दत्वा गृह्णाति, एवं पंचशत ( ५०० ) स्त्रियो जाताः, ताभिः सहैकस्तंभसौधेऽरंसीत्, तस्य नागिलश्राद्धः मित्रमस्ति, एकदा पंचशैलाधिपव्यंतरदेव्यौ शक्राज्ञया नंदीश्वरे प्रास्थिषातां, तदानीं तत्पतिर्विद्युन्माली च्युतस्ततस्ते 'हासा' 'प्रहासा' नाम्न्यौ कामुकं तं स्वर्णकृतं दृष्ट्वा तत्रावातरतां, ते दृष्ट्वा परिरब्धुकामः स्वर्णकारः प्रोवाच, के युवाम् ? किमर्थमागते ? ते प्रोचतुः भवदर्थम् ! प्राप्तसंज्ञः स हेमकृत् प्रार्थनां चक्रे, ते ऊचतुः त्वं पंचशैले समागच्छेः, तत्रावयोः संगो भावीत्युक्त्वा ते उत्पतिते, सोपि स्वर्णकारः भूभुजे स्वर्णं दत्वा इति पटहमवादयत्, "यो मां पंचशैलद्वीपे नेता स द्रव्यकोटिं लप्स्यते" ! एकेन निर्यामकस्थविरेण पटहो धृतः, कोटिधनं चाददे, तेन यानपात्रं सज्जीकृत्य स्वर्णकृता साकं पोतस्थो वृद्धोऽब्धिवर्त्मनि सुदूरमागत्य तमित्यूचे, भोकुमार ! अब्धिकूले तच्छैलपादजातोऽयं वटो दृश्यते, यदा पोतोऽस्याधो याति तदाऽस्य शाखायां त्वं विलगेः, निश्यत्र भारंडाः समेष्यंति, तेषु सुप्तेषु कस्यचिदंघ्रौ पटेन स्वं बध्वा दृढमुष्टिना विलगेः, प्रातरुड्डीनास्ते त्वां पंचशैले नेष्यंति, यदि वटेऽविलग्नस्त्वं तदा एतद्यानपात्रमिव महावर्त्ते पतित्वा विनंक्ष्यसि ! तथाकृते सः पक्षिणा तत्र निन्ये, सः क्रमेण हासाप्रहासाभ्यां दृष्टः, तेनापि भोगार्थं प्रार्थिते, ताभ्यां प्रोचेऽनेनांगेनावयोः संगो न भवेत् ! किंतु अग्निप्रवेशादिना कृतनिदानेन त्वं पंचशैलेशो भव, स दध्यौ ! उभयतो भ्रष्टोऽहमिति चिंतार्त्तस्ताभ्यां स्वपुरे मुक्तस्ततः स देवांगनांगमोहितोऽग्निसाधनं प्रारेभे,

तदा नागिलश्राद्धेनोक्तम् , मित्र ! बालमरणं नार्हं तवेत्यादिना वार्यमाणोऽपि निदानेनाग्निशरणं कृत्वा पंचशैलशो जज्ञे, नागिलस्तद्वैराग्यात्प्रव्रज्याऽच्युते देवो जातः ॥

अन्यदा नंदीश्वरयात्रार्थं प्रस्थितानां देवानां पुरो गातुं तदाज्ञया हासाप्रहासे चलिते स्वपतिमूचतुः, स्वामिन् ! त्वं पटहं वादय, सोऽहंकारेण नोऽवादयत् , तदा दुष्कर्मणा पटहः कंठे ऽलगत् , तदानीं ताभ्यामुक्तं, भो प्राणेश ! कुलोचितं कुरु, मा त्वं लज्जस्व ! ततो विद्युन्माली देवो गायतीभ्यां ताभ्यां सह पटहं वादयन् त्रिदिवौकसां पुरतश्चचाल, तदानीं नागिलः स्वर्गी यात्रायां व्रजन् विद्युन्मालिनं निजपूर्वभवमित्रं अवधिना ददर्श, ततः स्वर्गिणा स भापितः, भद्र ! त्वं मां जानासि ? स जगौ तेजस्विन्नाहं जाने त्वं कोऽसि ? ततस्तेन श्राद्धरूपं कृत्वा स्वस्य तस्य पूर्वभवस्वरूपं येन धर्मेण प्राप्तभवस्वरूपं चोक्तम् , तच्छ्रुत्वा एवमवदत् , भोमित्र ! किमहं करोमि ? अच्युतसुरेणोक्तं मित्र ! गार्हस्थ्येन चित्रगृहे कायोत्सर्गेण स्थितस्य भावसाधोर्वीरविभोर्मूर्त्तिं त्वं कारय, तव बोधिबीजमुत्पत्स्यते, तदुक्तमुररीकृत्य गृहे प्रतिमास्थं श्रीवीरमपश्यत् , ततो देवो हिमवति शैले गत्वा गोशीर्षचंदनं छित्वा यथादृष्टां मूर्त्तिं सविभूषणां चक्रे, जातिचंदनस्यैकां पेटां कृत्वा कपिलकेवलिपार्श्वे प्रतिष्ठाप्य तस्यां चिक्षेप । तदानीं एकस्य सांयात्रिकस्यांबुधौ पोतस्योत्पातयोगतो भ्रमतः षण्मासी गता, देवस्तं ददर्श, तस्य पीडां संहृत्य प्रतिमागर्भं समुद्गकमर्प्पयित्वा प्राह, त्वं वीतभयपत्तने गत्वा इत्युद्घोषणां कुर्वीथाः "इयं परमात्मप्रतिमा गृह्यतां गृह्यताम्" ततः स प्रतिमानुभावतः तन्न-

गरे गत्वा तामुद्घोषणां चक्रे, तत्र द्विजतापसनृपादयोऽनेके समाजग्मुः, ते स्वेष्टदेवान् स्मृत्वा स्मृत्वा उद्घाटयंति परं नोद्घटते ! एवं मध्याह्ने राज्ञी भोजनाय चेटीं संप्रेष्य नृपमाह्वयत्, राज्ञापि तथ्ये प्रोक्ते प्रभावती तत्रैत्य देवाधिदेवोऽर्हन् नत्वन्ये ब्रह्मादय इति मत्वा संपुटं चंदनादिभिः संपूज्य प्रोचे—

"प्रातिहार्याष्टकोपेतः, प्रास्तरागादिदूषणः । देयान्मे दर्शनं देवा-धिदेवोऽर्हस्त्रिकालवित् ॥ १ ॥"

इत्युक्ते स्वयं संपुटात् जिनमूर्त्तिर्निर्गता, अथ सा तां चैत्यगृहे न्यस्य त्रिसंध्यमपूजयत् ॥

अन्यदा द्रव्यपूजानंतरं राज्ञी प्रीता जिनवरपुरो नृत्यति स्म, राजा च वीणामवादयत्, तदा नृपः शिरोहीनं नृत्यंत्याः प्रभावत्याः कबंधं ददर्श, तदनिष्टं वीक्ष्य क्षुभितनृपकरात् वीणाऽपतत्, तदा क्षुब्धा राज्ञी जगौ, हेप्राणेश ! किमेतज्जातम् ? नृपः स्त्रीकदाग्रहात् तथाख्यत्, सा प्राहानेनानिष्टेन ममायुरल्पमेव ज्ञायते ! ॥

पुनरन्यदा कृतस्नाना राज्ञी देवार्चार्हाणि श्वेतानि वासांसि दास्याहस्तेनानाययत्, परं भाविविघ्नवशात् राज्ञा रक्तान्युदैक्षत् ! अनर्हाणि वीक्ष्य कोपात् आदर्शेन तां जघान, ततस्तानि, श्वेतान्येव दृष्ट्वाऽचिंतयत् ! धिग् ! मया व्रतं खंडितम्, एतत्पापक्षयार्थं प्रव्रजामि, वस्त्रवर्णान्यप्रेक्षणेन ममायुरल्पमेव ! ततः स्वाम्याज्ञया व्रतोत्सुका जाता, तदा नृप एवं प्राह, देवि ! देवत्वाप्तया त्वयाऽहं धर्मे बोधनीयः, ! ततो राज्ञी सम्यक् चारित्रं प्रपद्यानशनं कृत्वा सौधर्मे कल्पे सुरोऽभूत्, ततस्तां मूर्त्तिं देवदत्ताख्या दासी कुब्जिकाऽपूजयत् ॥

अथ स सुरः तापसरूपधरः संसदि नृपं दिव्यफलामृतप्राभृतमकरोत् ! राजा तत्फलास्वादेन मोहितस्तं मुनिं जगौ, मुने ! एतत्फलोत्पत्तिस्थानं दर्शय, मुनिनोक्तं त्वं ममाश्रमे एहि, ततः स राजा तेन सह वेगेन गतः, स सुरो देवमायया तादृक्फलभरोपेतमारामं किंचिद्गत्वा विचक्रे, तं दृष्ट्वा नृपो दध्यौ ! अहं एषां भक्तोऽस्मि अतः फलादनेच्छां पूरयिष्यंतीति विचिंत्य राजा कपिवद्धावे, तावत्तैः क्रोधात्करे दंडं कृत्वा कुट्यमानस्तस्करवदनश्यत् ! नश्यताऽग्रे साधून् अवलोक्य तेषां शरणं कृतम् ! तैः साधुभिराश्वामितः क्ष्मापतिरचिंतयत्, अहो ! क्रूरैस्तापसैर्वंचितोऽहम् ! ततः प्रभावतीदेवः प्रत्यक्षीभूय प्रतिबोधाय कृतस्वरूपमुक्त्वा स्वर्गृहं जगाम, नृपोऽपि जिनधर्मैकमनाः स्वं सभास्थितमैक्षत ॥

इतश्च गांधारश्राद्धोनित्यार्हत्प्रतिमां वित्रंदिषुर्वैताढ्यमूले तपसा तस्थौ, तुष्टा शासनसुरी तदीप्सितमपूरयत्, प्रसन्ना कामदमष्टोत्तरगुटिकाशतं ददौ, एकां गुटिकामास्ये क्षिप्त्वा स दध्यौ, अहं वीतभयपत्तने देवाधिदेवमूर्त्तिं वंदितुं यामि, इति चिंतितमात्रेण मूर्त्यन्तिके देवेन नीतः, तां संपूज्य तत्र सुखेनास्थात् । अन्यदा स सुधीरासन्नां मृतिं मत्वा साधर्मिकाया देवदत्ताकुब्जायास्ता गुटिका दत्वा स्वयं दीक्षां ललौ ॥

सा रूपार्थिनी एकां गुटिकां मुखे क्षिप्त्वा क्षणेन दिव्याकारधरा जाता, अतो राज्ञा तस्याः 'सुवर्णगुलिका' इति नाम दत्तम्, पुनः सा एकां गुटिकामास्ये मुक्त्वा दध्यौ, "अनुरूपवराभावे मम रूपं वृथा ! अयं नृपस्तु मम पिते-

वातश्चंडप्रद्योतभूपो मम पतिरस्तु" तदा सा सुरी प्रद्योतपुरस्तद्रूपमवर्णयत्, नृपस्तस्याः प्रार्थनाकृते दूतमादिशत्, चरस्तत्र गत्वा तामर्थयामास, सा तं प्रत्याह नृपदर्शनानंतरमुभयोः समीहितं भविष्यति, सोऽपि गत्वा तथैव जगौ, तदा अनिलवेगगजारूढः निशि तत्रागात्, विपिने उभावपि मिलितौ, नृपेणोक्तं हे प्रिये ! त्वं मत्पुरीमेहि कुब्जाह जिनमूर्त्तिं विनाऽहं न जीवामि, अतोऽस्याः प्रतिकृतिस्त्वया समानेतव्या, तामिह मुक्त्वा एषा सहैव नीयते, ओमित्युक्त्वा अवंतीशः स्वनगरे गत्वा जात्यचंदनमयी वीरमूर्त्तिमकारयत्, ततोऽवंतीशेन पंचशतमुनियुतः प्रार्थितः कपिलर्षिर्वासनिक्षेपपूर्वं तां प्रत्यतिष्ठिपत्, ततो विधिना तां मूर्त्तिं संगृह्य करिराजारूढस्तत्रागत्य तां दास्यै समर्प्पयत्, सा चैत्यगृहे नूतनां प्रतिमां न्यस्य मूलमूर्त्तिं समादाय राज्ञा सह सौख्येनावंतीं प्राप ॥

इतश्च उदायननृपः प्रातर्देवायतनं ययौ, जिनं नत्वा सन्मुखं विलोकयति, तदा म्लानमालां मूर्त्तिं पश्यति, तथा-दृष्ट्वा दध्यौ "इयं मूर्त्तिः काप्यन्या म्लानमाल्यत्वात् सा न भवति, पुनः स्तंभलग्ना पांचालिका इव या देवदत्ता सापि न दृश्यते, ग्रीष्मे मबंबुवत् करिणो मदो नष्टश्च दृश्यते, तन्नूनमनिलवेगेनेह चंडप्रद्योतः समागात् इति ज्ञायते स द्वयं गृहीत्वा गतः" ॥

ततः कुपितो नृपो दशभिर्मुकुटबद्धनृपैः सह सबलोऽवंतीं प्राप, ततो द्वयोर्मिथः संगरोऽभूत्, तत उदायनेन शिलीमुखैः प्रद्योतः कुंजरात् पातयित्वा हस्तेन धृत्वा बद्धस्तस्य ललाटपट्टे "मम दासीपतिः" इत्यक्षरावलीं तप्तलोहश-

लाकया लिलेख, गुप्तिगृहे चाक्षिपत् , तत उदायनः प्रद्योतस्य गृहे जिनालये गतः, जिनवरं नत्वा स्तुत्वा उपादा-
तुमुपाक्रंस्त, सा स्थानतो न चचाल, नृपतिर्जगौ, हे नाथ! को मयाऽपराधः कृतो यतः परमेश्वरो मया सह नैषीत् ?
तदानीं तदधिष्टायकः प्राह, हे नृप ! तव पत्तनं पांशुवृष्ट्या स्थलं भावि ! अतो नाहं तत्र समेष्यामि, त्वं मा शोचीः,
ततः स नृपोऽवंतीदेशान्न्यवर्त्तत, मार्गस्यांतराले चतुर्मासकं समागतं, राजा तत्रैव शिबिरं न्यधात् , तत्र दशपुरं जातम् ॥

अन्यदा पर्युषणापर्वणि उदायने पौषधिके सूदः प्रद्योतमपृच्छत्, किमद्य नृप ! भोक्ष्यसे ? तच्छ्रुत्वाऽवंतीशः क्षो-
भादिति दध्यौ, अहो ! अद्य पृष्टं तत् किं कारणम् ? इति मत्वा सूदकारमपृच्छत् , हे सूद ! अद्य पृष्टस्य हेतुर्वद,
सूदेनोक्तम् , अद्य पर्युषणोत्सवो मम स्वामी उपोषितोऽस्ति अतस्त्वदर्थं रसवतीं करिष्यामि, नृपः स्माह त्वया पर्व-
दिनोक्तेन वरं कृतं, ममाप्युपवासोऽद्याऽस्तु ! सूदोऽपि उदायनायाख्यत् , स दध्यौ अहो अस्मिन् कारागारे सति
मम पर्युषणा साध्वी न स्यात् ! एवमवधार्य तं निष्कास्य क्षमयामास, तस्य भालांकगोपनं स्वर्णरत्नमणिपट्टबंधेन
विदधेऽवंतिदेशं च ददौ, वर्षारात्रे व्यतिक्रांते उदायनः स्वपुरीं प्राप, उदायनो मूलप्रतिमायै द्वादशग्रामसहस्रान्
पूजार्थं प्रददौ, ततः प्रभावतीदेवाज्ञया तां नूतनां मूर्त्तिमपूजयत् ॥

अन्यदा स्वपौषधागारे पौषधं जग्राह, मध्यरात्रे शुभध्यानस्थितस्येदृगध्यवसायोऽभूत् , "ते नृपादयो धन्या वंद्या
ये श्रीवीरजिनांतिके दीक्षां प्रपेदिरे, यदि स्वामी मां पुनाति तर्हि तत्पादमूले प्रव्रज्यामादाय कृती स्याम् !" भग-

वान् तन्मनोगतं विज्ञाय तत्राऽगात्, नृपः कूणिकवद्वंदनाय निर्गतः विधिना स्वामिदेशनां श्रुत्वा गृहे गतः सन् एवं दध्यौ, "अहो ! अहं नरकांतं राज्यमभीचये सूनवे न ददामि" इति मत्वा केशिनि भागिनेये राज्यश्रियं चक्रे, ततः केशिकृतमहामहो नृपः प्रव्रज्यामुपात्तवान्, व्रतवासरात्तीव्रतपोभिः स्वात्मानमशोषयत् ॥ एकदा नीरसाहारैर्मुनेर्व्याधिरुत्पन्नः स मुनिर्वैद्येन दृष्टः कथितश्च त्वद्देहं दधिभक्षणेन रक्ष्यम्, गतस्पृहोऽपि स मुनिर्दध्यर्थं गोष्ठे विचरति ॥

अन्यदा भुवि विहरन् मुनिर्वीतभये गतः, तदामात्यः केशिनृपं जगौ, "एपस्तव मातुलस्तपसा निर्विण्णस्तव राज्यं ग्रहीष्यति, त्वमस्य विश्वासं माकार्षीः !" केशिनोक्तमस्यैवास्ति राज्यं सुखेन गृह्णातु ! मंत्री प्राह, राज्यं पुण्यैर्लभ्यते तल्लब्धं कथं दीयते ? अतोराजन्नस्य मुनेर्विपं देयम् ! ! मंत्रिणा प्रेरितः केशी मातुलाय पशुपालकया सविषं दधि दापयामास, तद्विषं देवेन संहृत्योक्तं सविषं दधि मा भुंक्ष्व, दधिस्पृहां मा कृथाः, तेन भक्षणं परिहृतम्, रोगो वार्द्धितः, रोगहृते पुनर्दधि जग्राह, सा देवता त्रीन् वारान् विषं जहार, एकदा देवप्रमादेन राजर्षिमुनिः सविषं दधि अभोजयत्, विषवीचिभिरात्मनः शरीरं व्याप्तं ज्ञात्वाऽनशनं प्रपेदे, त्रिंशद्दिनानि अनशनं पालयित्वा उत्पन्नकेवलज्ञानो विपद्य शिवं गतः । ततः मन्युना देवेन एततपुरं पांशुवृष्ट्या पूरितम् ॥

इतश्च जनके गृहीतव्रते अभीचिसुतो दध्यौ, अहो ! मत्पितृणा मां त्यक्त्वा भागिनेयाय राज्यं दत्तम् ! धिक् पितुर्विवेकम् ! ततः केशिनः सेवां त्यक्त्वा पित्रापमानितः कूणिकासन्ने जगाम, वीरवाण्या वुद्धः श्राद्धधर्ममपालयत्

परमुदायने वैरं न तत्याज, प्रांते पाक्षिकानशनेन मृत्वा तदनालोच्य भवनपतिदेवो जातः, तत्रैकपल्यायुष्कतश्च्युत्वा महाविदेहे अभीचिजीवः शिवं गमिष्यति, श्रीवीरनिर्वाणतः षोडशशतनवषष्टि ( १६६९ ) वर्षाणि यदा यास्यंति तदा पांशुपूरात् तां मूर्त्तिं कुमरभूपः कर्षयिष्यति, पूर्ववच्च तां पूजयिष्यतीति ॥

"उत्सृज्य सावद्यमुदायनोऽसौ, श्रीपर्वघस्रेषु निरीहभक्त्या। जग्राह धर्मं शुभयोगसंयुतं तद्वद्विधेयो व्रतिभिर्गृहस्थैः ॥१॥"

श्रीपर्वपुण्यकृत्यानि, श्रीलक्ष्मीसूरिणा मुदा । श्रीप्रेमविजयाद्यर्थं, व्याख्यानाय स्तुतानि च ॥ १ ॥

॥ इति पर्युषणाष्टाह्निकासत्कतृतीयाह्नो व्याख्यानं समाप्तं, तत्समाप्तौ च

समाप्तमिदं पर्युषणाष्टाह्निकाव्याख्यानं श्रीविजयलक्ष्मीसूरिविरचितम् ॥

॥ सूरिं श्रीविजयानन्दं, विजयानन्दकारकम् । "आत्माराम" इति ख्यातं, वन्दे सद्गुणलब्धये ॥ १ ॥

## ॥ श्रीपर्युषणापर्वाष्टाह्निकाव्याख्यानं समाप्तम् ॥

॥ वल्लभविजयस्त्वेष, शिष्यशिष्यस्य शिष्यकः । नित्यं स्मरति यं भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

श्रीआत्मानन्द–ग्रन्थरत्नमाले चतुश्चत्वारिंशत्तमम् (४४) रत्नम्

पण्डितावतंसश्रीमच्छीलरत्नसूरिकृतः

# चतुर्विंशतिजिनस्तुतिसंग्रहः।

## ( चैत्यवन्दनचतुर्विंशतिका: )

**श्रीमद्वल्लभविजय-शिष्य-मुनिललितविजयोपदिष्टजलालपुरवास्तव्यश्राद्धवर्य्यशा० "उकाजीरामाजी" इत्यस्य द्रव्यसाहाय्येन**

**प्रकाशयित्री–भावनगरस्था–श्रीजैनआत्मानन्दसभा।**

इदं पुस्तकं **मुम्बय्यांवल्लभदास–त्रिभुवनदास गांधी** सेक्रेटरी **जैनआत्मानन्दसभा भावनगर** इत्यनेन **निर्णयसागरमुद्रणालये** कोलभाटवीथ्या २३, तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्।

**वीरसंवत्. २४४१** आत्मसंवत् २०. **विक्रमसंवत्. १९७१.**

# ॥ श्रीमच्छील-रत्नसूरिकृतस्तुतिसंग्रहः ॥

## ॥ अथ श्रीआदिनाथस्तुतिः[1] ॥

चिदानंदलीलारसास्वादलीनं,गुणैः सिद्धिभाजामनंतैरहीनं। मुदा सर्वदा श्रीयुगादीशदेवं,स्तुवे भद्रदायिक्रमाम्भोजसेवं॥१॥
गृहस्थो बभाषे कलाशिल्पसारं,क्रमात् केवली यश्च धर्मप्रकारं।स एव प्रभुः सर्वलोकोपकारी,न चान्यस्ततो ज्ञाननैर्मल्यधारी२
महाशुद्धसिद्धान्तमध्ये प्रसिद्धं,प्रतीतं पुराणेषु शोभासमृद्धं।गतं वेदवेदान्तशास्त्रेऽवदातं,यदीयं चरित्रं न च क्वापि मातं॥३॥
अनन्तं पुनन्तं जनं भक्तिमन्तं,हरन्तं दुरन्तं प्रमादं स्फुरन्तं। जिनं नाभिभूपालवंशावतंसं,श्रये तं शरण्यं शिवाम्भोजहंसं॥४॥
कलाकेलिसर्पप्रणाशे सुपर्णः, सुवर्णोपमानोल्लसद्देहवर्णः । वृषांकः सुखांकूरमेघःसुरम्यं,युगादीश्वरो मे प्रदत्तां सुसाम्यं॥५॥

## ॥ अथ श्रीअजितनाथजिनस्तुतिः[2] ॥

कुशलकाननपुष्टिबलांगकं, भवदवानलशान्तिबलाहकं। अजिततीर्थपतिं श्रितवत्सलं, भजत भव्यजना! विगतच्छलं ॥१॥
विमलकेवलबोधकलाधरं, भविकलोकचकोरकलाधरं । करिवरांकितपादपयोरुहं नम जिनं जितशत्रुतनूरुहं ॥ २ ॥

---

१ भुजङ्गप्रयातंवृत्तम्. २ द्रुतविलम्बितवृत्तम्

विजयिनी जननी ननु गर्भगे, व्यजनि यत्र बुधैः सदिदं जगे। मृगपतौ सबलेन्तरमाश्रिते, गिरिगुहा किल कैः परिभूयते?॥३॥
अपि गदायुधचक्रिपुरंदर–स्थिरपराक्रमभंगकरः स्मरः। सुकृतिभिः किल यस्य जगत्पतेर्झटिति नामबलादपि जीयते॥४॥
सततमक्षयमोक्षपदं श्रितः, स्फुरदनंतचतुष्टयशोभितः। अजिततीर्थकरो मम मंगलं, दिशतु शाश्वतसौख्यमलम्फलम्॥५॥

॥ अथ श्री संभवजिनस्तुतिः³ ॥

लोचनानंदविस्तारि चंद्राननं, मोहमातंगभेदाय पंचाननं। विश्वविख्यातनित्योदितप्राभवं, संभवं शंभवं स्तौमि भक्त्याभवं १
येन गर्भस्थितेनापि भूमंडले, शस्यवृद्ध्या सुभिक्षं विधायाखिले।केवलित्वे पुनर्बोधिबीजार्पणाद्धारी?वात्सल्यधीः सर्वसाधारणा
शोषितो येन संसारघोरार्णवश्चूर्णितश्च प्रमादाचलः सध्रुवः।मोहसेनापि सा दुर्जया निर्जिता, शक्तिमानं गुरूणां हि को वेदिता
देवदेवं दयावल्लरीमंडपं, दुष्कृतानोकहच्छेदकानेकपं। पापपंकापनोदाय चंडातपं, संस्तुवे तं तृतीयं तु तीर्थाधिपं ॥४॥
श्रीजितारिक्ष्मापालसेनांगजः, स्वर्णशैलद्युतिभ्राजिवाजिध्वजः।
तीर्थनाथस्तृतीयोऽस्तु रत्नत्रय–त्रायको मे त्रिलोकीशवंद्योदयः॥५॥

---

३ स्रग्विणीवृत्तम्.

## ॥ अथ श्रीअभिनंदनजिनस्तुतिः[४] ॥

गुणौघमंदारनिवासनंदनं, मिथ्यात्वपापोपशमाय चंदनम् । श्रीसंवरक्ष्मारमणस्य नंदनं, मुदा स्तुवे तीर्थकराभिनंदनं॥ १॥
यं संस्तुवानस्य दृशातरंगिनी, सहस्रचंद्रांशुरयात् प्रसर्पिनी । क्षेत्रे नदीमातृकतागते हरेर्वृद्धिं ययौ भक्तिलतामनोहरे ॥२॥
भजन् वनौका अपि यस्यनिश्चलं,पादांबुजं नित्यमहोमहाफलं।जिनेंद्रवाच्यं हरितामसंगतः,स्यान्निष्फलं नो गुरुसेवनं ततः ३
पराभवन् योगबलेन संवरद्विषं सुविस्तारितराजिसंवरः । ददातु देवो नवमं रसं वर–स्वजन्मसंतर्पितराजसंवरः ॥ ४ ॥
ध्यानं चतुर्थं समवाप्य विश्रुतं, योऽर्थं चतुर्थं भजतिस्म शाश्वतं।अरे चतुर्थे शुभितःशुभोदयश्चतुर्थतीर्थप्रभुरस्तु सश्रिये ॥५॥

## ॥ अथ श्रीसुमतिनाथस्तुतिः[५] ॥

मंगलावलिनदीमहार्णवं, मंगलाप्रवरकुक्षिसंभवम् । मेघभूपतिसुतं दयालता–मेघमश्चत जिनं जना रताः ॥ १ ॥
मातुरुत्तमतमाभवन्मतिर्गर्भगेऽपि ननु यत्र जाग्रति । अत्र किं कुतुकमस्य संस्मृतेरप्यदोपधिषणाप्रजायते ॥ २ ॥
अंगुलीदलविराजिकोमलम् , स्मेरमुत्तमगुणालिकोमलम् । यस्य शस्यपदपद्मयामलम् , संश्रयन्नलभते नयामलम् ॥ ३ ॥
पंचबाणबलभंजनक्षमम् , पंचभेदिविषयछिदागमम् । पंचसारसमितिप्रपंचकम् , पंचमं नमत तीर्थनायकम् ॥ ४ ॥
कर्णिकारकुसुमासमप्रभः, क्रौंचलक्षितपदो हताशुभः । तीर्थनाथसुमतिर्मनोधृतिं, यच्छतान्मम तथा चनिर्वृत्तिम् ॥५॥

---

४ उपजातिवृत्तम् अथवा विभावरीवृत्तम्. ५ रथोद्धतावृत्तम् अथवा श्येनी ॥

## ॥ अथ श्रीपद्मप्रभजिनस्तुतिः ॥[६]

प्रशस्तपद्माकरवत्सुवृत्तः, श्रीसद्मपद्माङ्कपदोऽतिवित्तः । पद्मप्रभःपातु विभुर्विभाव–विभावरीयान् कृतकर्म्मलावः ॥ १ ॥
सरोरुहंराजगणेन वन्द्य–मानं यदंह्रिश्रयणेन सद्यः । पराभवं राजभवं निरास्य, प्रमाणमेतन्महदाश्रयस्य ॥ २ ॥
मूर्त्तौ विभान्त्यत्र विभातसन्ध्याः, सद्धर्मकर्मप्रकृतावबन्ध्या । मूर्तिर्यदीयाऽवसरं विवेका–दित्योदयार्थं ददते प्रवेका॥३॥
धराधिराजो धर एव धन्यः, सीमासुसीमारमणोनचान्यः । कुले यदीये कमले मराल–लीलां ललौ यःसुषमाविशालः॥४॥
प्रवालबालारुणपद्मराग–रम्याङ्गकान्तिः परिमुक्तरागः । षडन्तरारिक्षयकारशक्तिं, षष्ठो जिनो यच्छतु मे सुयुक्तिं ॥ ५ ॥

## ॥ अथ श्रीसुपार्श्वनाथस्तुतिः ॥[७]

श्रीप्रतिष्ठनरनाथतनूजम्, सुप्रतिष्ठनरनिर्मितपूजम् । देवदेवमभिनौमि सुपार्श्वम्, देवताऽधिपतिसेवितपार्श्वम् ॥ १ ॥
स्वस्तिकारणमनोहरदृष्टिम्, स्वस्तिकाङ्कितपदं कृततुष्टिम् । यं जनस्य भजतो ननु पृथ्वी–सूनुमृद्धिरिह राजति पृथ्वी ॥२॥
दुःखदुर्गतिविरोधिविकारा–स्तावदेव भविनां स्युरपाराः । यस्य यावदतुलं त्वभिधानं, स्मर्यते न शुभसिद्धिविधानम् ॥३॥
दर्शनश्रुतलघूरुचरित्रा–रागताःशिवफला इतिनेत्राः। येन जल्पितुमिवोच्चपताका, उच्छ्रिताः प्रकटपञ्चफणाङ्काः ॥ ४ ॥
हारिवारिजरजःकरणरङ्गत् पिञ्जरांजगसुभगःशुभचंगः । श्रीसुपार्श्वभगवानघसंग–च्छेदकोऽस्तु गुणगौरवतुंगः ॥ ५ ॥



६ उपजातिवृत्तम्. ७ स्वागतावृत्तम्.

## ॥ अथ श्रीचंद्रप्रभुजिनस्तुति ॥

चंद्रोपलप्रवरचंद्रमयूखचंद्र–गौरांगसंगतगुणाश्रममुक्ततंद्र ! ।
चंद्रप्रभ ! त्रिभुवनाधिपते ! प्रसीद सौभाग्यसुंदरविभो ! कुशलावलीद ! ॥ १ ॥
श्रीखंडपांडुरमुदारतनुं भवंतं, व्याख्यानसद्मनि सुवागमृतं किरंतं ।
दृष्ट्वा जनेऽजनिजनेति ननुप्रतीतिर्गंगागिरेर्हिमवतःप्रसरीसरीति ॥ २ ॥
विश्वेशशीतरुचिरेपकलालयोपि, पीयूषपात्रमपिऋक्षगणाधिपोपि ।
त्वांसेवतेऽधिकसमृद्धिकृते नु नित्यं, राजा न तृप्यति ततःकियतेति सत्यं? ॥ ३ ॥
उद्दामसेनमहसेनवसुंधरेश–श्रीलक्ष्मणासुतविवेककरोपदेश ! ।
चंद्रांक ! भव्यजनचंद्रकिधूमयोने, सौम्यां दृशं मयि निधेहि शुभश्रियोने ! ॥ ४ ॥
अष्टांगयोगकुशलेष्टगुणोष्टसिद्धि–दाताष्टकर्मबलनिर्दलनप्रसिद्धिः ।
अष्टासु मे श्रवणमातृषु वत्सलत्वमासोष्टमो दिशतु विश्रुतसत्यसत्वः ॥ ५ ॥

---

८ वसन्ततिलकावृत्तम्.

## ॥ अथ श्रीसुविधिजिनस्तुतिः[9] ॥

गुणराजिमनोहररत्ननिधिं, वरशान्तरसोर्मिसुधाजलधिं। परिणामहितोदितपुण्यविधिं, प्रणमामि जिनेन्द्रमहं सुविधिं॥१॥

मुदितामलसाधुलसच्चरितम्, विदिताऽखिललोकमिहादुरितं।
सुखमिच्छसि चेच्चतुर ! त्वरितं, सुविधिं भज तत्सुखमाभरितं ॥ २ ॥

दधतं सततं सुमहानवमं, विगलन्मलजालमिहानवमम् । सदनं परमप्रशमं नवमं, जिनमञ्चत भव्यजना ! नवमं ॥ ३ ॥

पुरुहूतपरंपरया महितम्, समधामहितं सुषधाम हितम्। विदलन्तमघं भविनाम हितम्, सुविधिं स्मर भव्यकलामहितम्४

कमलोपमदक्षिणवामकरम्, क्रमसेवनसोदरसन्मकरम्। अवदातयशोजितसोमकरम्, सुविधिं श्रयतानघधामकरम्॥५॥

## ॥ अथ श्रीशीतलनाथस्तुतिः[10] ॥

अमृतमसमतृष्ण–तापनिर्वापहेतुं, हितमगदमदभ्रं रागरोगं विनेतुम् ।
कतकफलमशुद्धस्वान्तपानीयशुद्ध्यै, जिनपतिमहमीडे शीतलं पुण्यबुद्ध्यै ॥ १ ॥

दृढरथनृपनन्दानन्दनं नेत्रलीलां वुजविकसनभानुं बिभ्रतं योगिलीलां ।
भजत शुभजनाः । श्रीवत्ससश्रीकपादम्, जिनममुमकलङ्कम् सर्वदा निर्विषादम् ॥ २ ॥

---

९ तोटकवृत्तम्. १० मालिनीवृत्तम्.

विषमविषयकीलाघोरसंसारदावे, कथमहह !!! दुरंतक्लेशदायिस्वभावे ।
दधति रतिमधन्या मोहमूढापदेनं, तदुपशमकमार्स नो भजन्ते यदेनम् ॥ ३ ॥
कलुषशिरसि भेदे जाज्वलद्वज्ररूपम् , निविडजडिमनाशे चंडभानुस्वरूपम् ।
कथमिह भजमानाः सत्यशब्दार्थदाक्ष्यम् , यमभिदधति देवं साधवः शीतलाख्यम् ॥ ४ ॥
अपि दशसु दिशासु स्पष्टबोधप्रकाशम् , सदशभिधसुधाभुक्शाखिवत्पूरिताशम् ।
दशविधयतिधर्म्मोल्लासवृद्ध्यै त्रिकालम् , दशमजिनवरेन्द्रम् नौमि भावादनालम् ॥ ५ ॥

## ॥ अथ श्रीश्रेयांसनाथस्तुतिः[११] ॥

श्रेयोलक्ष्मीराजमानारविन्दम् , पादद्वन्द्वोपास्तिकृद्देववृन्दम् ।
साधुश्रेणिकौमुदीशुक्लपक्षम् , श्रीश्रेयांसं संश्रयेस्तारिपक्षम् ॥ १ ॥
निर्वाणश्रीकंठमाणिक्यहार !—क्लेशध्वान्तच्छेदसूर्यावतार ! ।
वाच्यातीतस्फीतवृत्तप्रतीत !, त्रायेयाऽहं नत्वया पापभीतः ॥ २ ॥
तृष्णालोलोल्लोलमालाकरालम् , मोहाम्भोधिं प्रोच्छलत्पङ्कजालम् ।

[११] शालिनीवृत्तम्.

उत्तीर्णास्ते ये मतं तेऽधिरूढाः, स्वामिन्! श्रीमन्! यानपात्रं ह्यमूढाः ॥ ३ ॥
दम्भोलोभोमोहमायाप्रमादाः, कामक्रोधभ्रान्तिमिथ्याविवादाः ।
देवासन्ना नैव तेस्युर्वराकाः, सिंहस्येव स्फूर्जतःफेरुपाकाः ॥ ४ ॥
माद्यन्मायासूर्यजाकामपाल !, श्रेयान् श्रेयःकल्पवृक्षालवाल ! ।
नेतश्चेत श्चोक्षभावेन युक्तम्, त्वत्सेवातो मेऽस्तु कालुष्यमुक्तम् ॥ ५ ॥

—⟶○⟵—

## ॥ अथ श्रीवासुपूज्यस्तुतिः[12] ॥

वसुपूज्यराजकुलकीर्त्तिकरं, हरिपूज्यपादमतुलर्द्धिभरं । प्रभुवासुपूज्यभगवंतमहं, प्रणमामि भव्यजनदत्तमहं ॥ १ ॥
भुवनावतंसभविनोकुशला, भगवन्! सुखैकरसिकाःसकलाः। ननु तन्निमित्तमतुलार्त्तिहरं, न भवंतमीश्वरंभजंति परं॥२॥
विषयाविपाकविषभोगसमा, निखिलाःकषायरिपवो विषमाः। परिहृत्य तानिति कृती रमते, परिणामहारिणि तवेश !मते३
भववासिना सुखकलाविरला,विपुलापि राज्यकमला तरला।भवतःप्रभोरभिलषामि नतः, स्थिर(मेक)मेव शिवसौख्यमतः४
तरुणांशुमालिसमकांतिकलः,कलिताखिलत्रिभुवनो विमलः । विभुवासुपूज्यत्तभुपूज्यपद,द्वितयःप्रसीदतु स मेंसुखसंपदः५

---

१२ प्रमिताक्षरावृत्तम्.

## ॥ अथ श्रीविमलनाथस्तुतिः[13] ॥

यशसा सकलेंदुमंडलं, जितवंतं विकलंकमुज्वलं । मदमेघघटामहाबलं, विमलं नौमि जिनं सुनिर्मलं ॥ १ ॥
भगवन् ! भववाससंकटं, विकटंनामविदन्नपिस्फुटं । निविडैर्ननु कर्मबंधनैः, स्थितवानस्मि सि तो हहा घनैः ॥ २ ॥
भुवनेश ! वनेऽथवाजने, नगरेसंवसथेऽथपत्तने । भवरागविपोर्मिविह्वलः, क्षणमात्रं न सुखं लभे किल ॥ ३ ॥
विमलोसि जिनाभिधानतः, परिणामादपि तादृशो मतः । अधुनापि तवाभिधापुनर्विमलं देव ? करोतु मे मनः ॥ ४ ॥
गिरिमंदरकांतिसुंदरः, प्रमदोदारनमत्पुरंदरः । विशदं दिशतु त्रयोदश, सुकृतोद्द्योतपदं जिनो यशः ॥ ५ ॥

## ॥ अथ श्रीअनंतजिनस्तुतिः[14] ॥

विवेककनकाचलोद्गतमरीचिकल्पद्रुमस्फुरच्छिवफलोल्लसत्सुखरसैकभोगोत्तमः ।
अनंतजिननायकःसकलसंपदां दायकः, प्रभुर्विजयतां नमज्जविकसंहतेस्त्रायकः ॥ १ ॥
कुबोधखरमारुतोपचितकोपदावानलप्रसर्पदशुभाशयप्रबलधूममालाकुलः ।
भवन्मतं सुधाःसरःशरणयामियावन्मतं, कुकर्मपिशुनःस मां नयति तावदेवेशतं ॥ २ ॥

---

१३ वैतालीयवृत्तम् १४ पृथ्वीवृत्तम्.

अनीतिवनवेष्टितो ऽशुभविकल्पकूटोन्नतःसदाकठिनतान्वितःसुकृतमार्गरोधोद्यतः ।
तदैवनतुभिद्यतेविषममानशैलस्ततस्तवशयदिशासनंकुलिशमाप्यतेभाग्यतः ॥ ३ ॥
कुबुद्धिविषवल्लरीघनमनःकुडंगस्थितिः प्रतारणमहाविषासुचपलातिगुप्तागतिः ।
विभोनिकृतिपन्नगीननुतदैवदूरंचरेद्भवद्वचनगारुडंयदिहृदिप्रकामंस्फुरेत् ॥ ४ ॥
भृतत्रिभुवनोदरप्रचुरपंकलोभार्णवः, प्रमापणघटोद्भवःसुकृतिलोकनेत्रोत्सवः ।
चतुर्दशजिनेश्वरःशिवफलंगुणस्थानकं, चतुर्दशमसौविभुर्दिशतुमेघपुत्रोऽधिकं ॥ ५ ॥

## ॥ अथ श्रीधर्मनाथस्तुतिः[१५] ॥

धर्मोद्यमारामलसद्वसंतं, भव्यांगिनां चित्तगृहे वसंतं । श्रीधर्मनामानमधीशमीडे, लीनं शिवे सर्वनिवृत्तपीडे ॥ १ ॥
चंद्रप्रदीपद्युपतीनुदीतान्, सर्वानतीत्योल्लसता प्रतीतान् । केनापि नित्यं स्वपरावभासि–ज्ञानप्रकाशेन विभो ! विभासि २
आदर्शमध्ये मित एवतावद्धीनोधिकोवाप्रतिभातिभावः । त्रैलोक्यदर्शी निखिलांस्त्वमेव, भावानृतान् पश्यसि देवदेव ! ३
कर्मांकुरात्यंतभिदे लवित्रं, शुद्ध्यै महातीर्थजलं पवित्रं । विचारयंस्ते विमलं चरित्रं, को नाम चित्ते नदधाति चित्रं ?॥४॥
श्रीभानुवंशाम्बुजचंडभानुः, प्रभानुगामी कृतमेरुसानुः । धर्मो जिनः पातु निरस्तमारिः, श्रीसुव्रताकुक्षिदरीमृगारिः ॥५॥



---

१५ उपजातिवृत्तम्.

## ॥ अथ श्रीशांतिनाथस्तुतिः[16] ॥

जगत्त्रयीजीवनजागरूक !, प्रभावशांते ! गतलोभलूक ! । जय प्रभो ! मन्मथदंदशूक !, सुपर्णसंक्रंदनशस्यशूक ! ॥ १ ॥
वसुंधरावल्लभविश्वसेन–कुलप्रदीपक्षितमोहसेन ! । नमोऽस्तु ते श्रीअचिरांगजात !, सुजातरूपद्युतिदेह ! तात ! ॥२॥
स्थितस्य गर्भेपि तव प्रभावः, स्वयंभुविक्लेशहरःस्वभावः । समुल्ललासावृतिमध्यगस्य, गंधो यथा जातिमणीवकस्य ॥ ३ ॥
त्वया यथारक्षि कपोतपोतः, संपन्नकष्टाद्व्यसनाब्धिपोत ! । तथैव मां रक्ष विभा ! प्रमाद–निषादबंधाद्विहितप्रसादः॥४॥
भवानभूःपंचमचक्रवर्त्ती, हरन् जनानां भुवि काममर्त्तीः । श्रुतस्तथा षोडश तीर्थनाथस्तनुष्व शांते ! समतां ममाथ ॥५॥

## ॥ अथ श्रीकुंथुनाथस्तुतिः[17] ॥

कल्याणकोटीकमलामहोत्पलं, कालत्रिकज्ञानलसत्कलाकलं । आनम्य सम्यक्कमनीयभावतः, कुंथुं कृतार्थी भविताहमादृतः
जीवप्रदेशाःसमयापराणवः,प्रत्यर्थमंतातिगपर्यवोद्भवः । निःशेषमेतत्प्रतिभाति ते स्थिरं, ज्ञाने तदस्मात्परमस्तिकिंकरं?॥२॥
उत्फुल्लनेत्राःसुरराजराजयः, प्रोल्लासिरोमांचविवृद्धमूर्त्तयः । त्वां पूजयेयुः सुरपादपस्रजांपुंजेन दूरेभगवन्! पराःप्रजाः ॥३॥
पापादपायो नपरःपरोभवेदेको ह्युपायस्तदपासने भवे । यत्तेपदांभोजविलोकनं हितं, तत्तात्त्विकैर्देव ! तदेव संश्रितं ॥ ४ ॥
बिंदारसस्येवसुवर्णसंचयः, स्यादेकवाक्यादपि ते महोदयः । तत्त्वां भजे कुंथुविभो ! निरंतरं संपूर्णमूलातिशयैर्मनोहरं ॥५॥

---

१६ उपजातिवृत्तम्. (उपेन्द्रवज्रा) १७ इन्द्रवंशावृत्तम्.

ततश्च्युत्वा स्थूलेष्वहमिह निगोदेषु गतवानथ प्रत्येकद्रुक्षितिजलमरुद्वह्निषु भवाः ।
मया संख्यातीता घनतरमपूर्यंत विकलेष्वथो संख्यातामे जनिमरणकोटीचमिमिलो (?) ॥ ३ ॥
ततो लेभे पंचेंद्रियचरिगतौदुःखनिचयान्, क्षुधातृष्णाशीतातपवधनबंधादिविषयान् ।
अथप्राप्तःसप्तस्वपि नरकपृथ्वीषुयदहं, महाकष्टं वाचा जिनप ! ननुतद्वक्तुमसहं ॥ ४ ॥
इति भ्रांत्वा भ्रांत्वा भुवनहित ! लक्षाःसुविततास्तनूभृद्योनीनां चतुरधिगताशीतिकलिताः ।
मया भाग्याभोगाद्विभुरथभवानापि भगवन् ! नमे ! नेतस्तन्मे भवभवहरोऽचिंत्यबलवन् ! ॥ ५ ॥

## ॥ अथ श्रीनेमिनाथस्तुतिः[२२] ॥

ब्रह्माद्वैतप्रवरपदवीबोधने चंडभासं, शोभासंपत्तिलयमखिलश्रीविलासैकवासं ।
श्रीमन्नेमिं समरससुधावारपारावतारं, विश्वाधारंस्तवनविषयीकर्तुमिच्छाम्युदारं ॥ १ ॥
श्रेयःश्रेणीकुलयदुकुलोत्तंसवित्तावदात ! प्रेंखच्छंखांकितनरपतिश्रीसमुद्रांगजात ! ।
श्रीशैवेय ! प्रवरकरुणावल्लिवृद्ध्यै वसंत ! श्रीमन्नेमे जयजयविभो ! पादपूतोज्जयंत ! ॥ २ ॥
आगत्यापि श्वशुरसदनं बंधुवर्गानुरोधादृष्ट्वाबद्धानशरणपशूनेव कारुण्यबाधात् ।

२२ मन्दाक्रान्तावृत्तम्.

तानामोच्य न्यवृतउदितात्त्वं स्वबीवाहकृत्यादेवंदेव ! प्रभवतिदयातावकीनैवसत्या ॥ ३ ॥
त्वय्येकस्मिन्नविजितवतिख्यातवीरावतारे, त्रैलोक्यस्याप्यविजयइवाभूज्जय:शंबरारेः ।
मत्तो हस्ती परवनचरांस्त्रासयन्नप्यरातेर्नश्यन् सिंहात्किमुबलवतांमुख्यतामत्र गाते ॥ ४ ॥
सौभाग्यश्रीसुभगभग वन्नुज्जयंताद्रिशृंग–प्राप्तप्रेंखद्व्रतनिरुपज्ञाननिर्वाणरंग ।
श्रीमन्नेमि ( मे ! ) दुरितगहनच्छेदनोदारनेमे ! बुद्धिं शुद्धां वितनु नितरां पावनेदर्शनेमि (?) ॥ ५ ॥

## ॥ अथ श्रीपार्श्वनाथस्तुतिः ॥ [२१]

विघ्नव्रातविवर्त्तकर्त्तनजगद्विख्यातवीरव्रतः, स्वस्तिश्रेणिसमृद्धिपूरणविधौ कल्पद्रुमो विश्रुतः ।
पुण्यप्रौढिपदप्रभावपटुताप्रत्यक्षपूषाप्रियं, श्रीपार्श्वः परमोदयं जिनपतिः पुष्णातु शास्यश्रियं ॥ १ ॥
श्रीवामारमणाश्वसेननृपतिश्रेष्ठान्वयश्रीकर ! प्रेंखत्पावनकायकांतिविजितप्रत्यग्रधाराधर ! ।
पुण्यप्राप्यपदप्रसादपरमश्रीमूलतासाधन–श्लाघ्यश्रीधरणेंद्रवंद्यचरण ! त्रायस्व मां पाप्मनः ॥ २ ॥
स्वावासात्सहसा समेत्य च भवान् कारुण्यतस्तात्त्विकादुद्दध्रे विषमाज्ज्वलंतमुरगं दीनं यथापावकात् ।
तां कारुण्यदशां विधाय भगवन् ! मामप्यनन्याश्रयं, विश्वव्यापिकषायभीषणदवादाकर्ष देव ! स्वयं ॥३॥

---

२१ शार्दूलविक्रीडितम्.

किल कर्म पुमांस्तवरुच्यरवैरसदस्य सदस्य सदस्यति वै । वनवज्जलदस्य जलैःसुचिरं, समता समता समतापभरं ॥ ६ ॥
तव भक्तिरिहापि तमांसिगतेर्द्धिपराजपराज पराजयते । अत एव बुधैर्भवतोत्रकृतां जपराय पराय परायणता ॥ ७ ॥
भवते हरतिस्तवनाम्निममा, भवमा भवमा भवमालिसमा । शममुत्र भजेयभवचरणभ्रमरोहमरोहमरोहगुण ! ॥ ८ ॥
*इति चारुचंपककनककेतुककायकांतिकलाजुषः, सीमंधरस्य श्रीजिनस्य प्रणत सुकृतश्रीपुषः ।
यमकाष्टकं यः प्रातरशठः पापठीति स पापतः, शीघ्रं विमुक्तः श्रयति परमानंदमुन्नतिशोभितः ॥ ९ ॥

## ॥ अथ वीतरागाऽष्टकम् ॥

तुभ्यं नमः समयधर्म्मनिवेदकाय ! तुभ्यं नमस्त्रिभुवनेश्वरशेखराय !
तुभ्यं नमः सुरनरामरसेविताय ! तुभ्यं नमो जिन ! जनार्चितपङ्कजाय ! ॥ १ ॥
तुभ्यं नमो विलसिते हरिचन्दनाय ! तुभ्यं नमो वरकुलाम्बरभास्कराय !
तुभ्यं नमः प्रणतदेवनराधिपाय ! तुभ्यं नमःप्रवररूपमनोहराय ! ॥ २ ॥
तुभ्यं नमो हरिणनायकनायकाय ! तुभ्यं नमो यतिपतिप्रतिपालकाय !
तुभ्यं नमो विकचनीरजलोचनाय ! तुभ्यं नमः स्तनितनादविराजिताय ! ॥ ३ ॥

* हरिगीतवृत्तम्.

तुभ्यं नमः कुशलमार्गविधायकाय ! तुभ्यं नमो विकटकष्टनिषेधकाय ! ।
तुभ्यं नमो दुरितरोगचिकित्सकाय ! तुभ्यं नमस्त्रिजगतो हृदि भूषणाय ! ॥ ४ ॥
तुभ्यं नमो दलितमोहतमोभराय ! तुभ्यं नमः कनकसन्निभभूघनाय ! ।
तुभ्यं नमोऽप्यखिलसद्गुणमन्दिराय ! तुभ्यं नमो मुखकलाधिकचन्द्रिकाय ! ॥ ५ ॥
तुभ्यं नमोऽतिशयराजिविभूषिताय ! तुभ्यं नमः कुमतितापसुभञ्जनाय !
तुभ्यं नमो सुखपयोधिवहित्रकाय[1] ! तुभ्यं नमो विगतकैतवमत्सराय ! ॥ ६ ॥
तुभ्यं नमो विदितभव्यजनाशयाय ! तुभ्यं नमो निखिलसंशयवारकाय !
तुभ्यं नमः प्रथितकीर्त्तियशोन्विताय ! तुभ्यं नमो जितहृषीकमुनीश्वराय ॥ ७ ॥
तुभ्यं नमः प्रमितपुद्गलनिर्मिताय ! तुभ्यं नमः सकलवाङ्मयपारगाय !
तुभ्यं नमो भविकचातकनीरदाय ! तुभ्यं नमश्चरणवैभवदायकाय ! ॥ ८ ॥

---

१ यानपात्राय.

कामं कामठवारिवाहपटलोपज्ञप्रसर्पत्पयः–पूरःप्लावयति स्म लेशमपि नो त्वा ध्यानगं निर्भयः ।
तर्त्किं कौतुकमत्र मोहजलधिर्लोकत्रयव्यापकः, सोऽपि क्षोभयति स्म नो जिनपते! त्वां संसृतेस्तारक !॥४॥
जीरापल्लि–फलर्द्धि–काशि–मथुरा–शंखेश्वर–श्रीपुर–त्रंबावत्यणहिल्लपत्तनमुखप्रख्याततीर्थेश्वर ! ।
चंचच्चित्रकमूलिकेव भगवन् ! पार्श्व त्वदीयाभिधा कुर्यान्मेगुणकोशमक्षयमसावाराध्यमाना त्रिधा ॥ ५ ॥

## ॥ अथ श्रीमहावीरदेवस्तुतिः ॥[२४]

श्रेयोमूलानुकूलागमशुचिवचसां जन्मभूःपावनानां, मिथ्यात्वप्राणपोपप्रदकुमतगिरां छेदकर्त्ताघनानां ।
त्रैलोक्यत्राणलीलानलसगुणलसद्धर्मसाम्राज्यहेतुर्नेता श्रीवर्द्धमानो मम नुतिविषयं भक्तिभाजः समेतु ॥ १ ॥
गर्वाखर्वाद्रिशृंगस्थिरदृढमनसां वादधीसादराणां, प्रौढानामैंद्रभूतिप्रमुखगणभृतां चातुरीसुंदराणां ।
गूढं संदेहजालं सुविषममभिनलीलया त्वं क्षणेन, छिंदानो ध्वांतराशिं लगयति किमु वा वत्सरंवासरेनः ? ॥२॥
ज्ञानं स्वार्थावभासि प्रमितिरभिमता तत्प्रमेयाश्च भावा, नित्यं चोत्पत्तिनाशध्रुवगुणसहसव्यक्तिसत्तास्वभावाः ।

---

२४ स्रग्धरावृत्तम्. ☞ नोट–विद्वद्वन्न ! सुज्ञमडल ! अनेक स्थलोंमें तलायशकरनेसेंभी शीलरत्नसूरिकृत–"**चैत्यवंदनचौवीसा**" की दूसरी प्रति उप. लब्ध नहीं हुई इसलिये केवल हमारे पासके एकही पुस्तकके आधारसें इसे मुद्रितकरायागया है, संभव है कि प्रथम सस्करणमें बहुत अशुद्धि रही होंगी आप विद्वान् महाशय सुधारकर वाचें और अगर शुद्धप्रति पास होवेतो उससें मिलान कर हमकों सूचना देनेकी कृपा करें द० ललितवि० १–८–१५–मुंबई.

नित्यानित्यं जगत्स्यात्सदसदथपराकर्तृकं कर्मवश्यं, धर्मःसम्यग्दयात्मा गदितुमिति भवानेव जानात्यवश्यं ॥३॥
तत्त्वालोकाय नेत्रं भवजलधितटाऽऽवासये यानपात्रं, चित्तोल्लासाय मित्रं कलुषतरु(भरो)च्छेदनायोग्रदात्रं ।
नानासत्तर्करत्नप्रकरगुरुनिधिःशासनं ते चिराय, त्रातर्जीयान्निमित्तं सकलसुकृतिनां पुण्यपुण्योदयाय ॥ ४ ॥
पुण्यद्धर्याभासमानः कनकगिरिगुरुप्रस्थशोभासमानः, स्फूर्जत्काकंपमानद्युतिरतिशयतःकल्पवृक्षोपमानः ।
नित्यं निर्लोभमानःपरमसुखकलासंपदा शोभमानः, स्वामी श्रीवर्द्धमानः प्रदिशतु कुशलं सद्गुणैर्वर्द्धमानः ॥ ५ ॥
॥ इति श्रीशीलरत्नसूरिकृताः सर्वजिनानां स्तुतयः संपूर्णाः ॥

---

## ॥ अथ श्रीशीलरत्नसूरिकृतं श्रीसीमंधरस्वामिनोऽष्टकम्* ॥

कल्याणलतासुवसंतर्तुम्, सुरभासुरभासुरभावनतं । सीमंधरजिनमतिमधुरगिरं, नम काममकाममकामहरं ॥ १ ॥
क्रियते स्तवतस्तव येन समासमतारसतारसतारसना । सफलां तमवैमि महीवलया–समहं समहं समहं कलया ॥ २ ॥
गुरुगर्वमसौ हरतात्तपन–च्छविदेह विदेह विदेहजनः । जिनपं सुखयन्ननुमोहकिरा, सितया सितया सितया स्वगिरा॥३॥
रसना हि परत्र कृते रमते, मम नाममनाममनागपिते । इतरत्र पिकी तु धृतिं प्रणते, सुरसालरसालरसालभते ॥ ४ ॥
त्वरते मम हृद्भजनाय भवत् पदयोरुदयोरुदयोरु नच । त्वमुपायमधीश तदासिकरं, वद भावदभावदभाग्यहरम् ॥ ५ ॥

---

* उपस्थितावृत्तम्.

## ॥ पुरुषादानीपार्श्वदेवनाममाला ॥

पासजिनराजसुणिआजशंखेश्वरा, परमपरमेश्वराविश्वव्याप्यो ।
भीडभांगीजराजादवांनीजई, थिरथई "शंखपुरी" तामथाप्यो ॥ १ ॥ पास० ॥
सारिकरिसारमनोहारिमहाराज तुं, मानमुझवीनतीमन्नमाची ।
अवरदेवातणीआसकुणकामनी, स्वामीनी सेवनाएकसाची ॥ २ ॥ पास० ॥
तूंहीअरिहन्तभगवन्तभवतारणो, वारणोविषमभयदुःखवाटे ।
तूंहीसुखकारणो सारणोकाजसहु, तूंही मनोहारणो साचमाटे ॥ ३ ॥ पास० ॥

अंतरीक अमीझरा पासपंचासरा भोयरापास भाभा भटेवा । विजयचिन्तामणि सोमचिंतामणिस्वामीसिप्रातणी करोसेवा
फलवृद्धिपास मनमोहना मगसिया तारसला नमुंनांहितोटा । सकवलेचाप्रभु आसगुल अर्जिया बंभणा थंभणा पासमोटा ॥५॥
गैबी गोडी प्रभुनीलकंठा नमुं हलधरा सांमला पासप्यारा । सुरसरा कंकणा पास दादा वली सूरजमंडणनमुंतरणतारा ॥६॥
जगतवल्लभ कलिकुंड चिंतामणि–लोढणासेरिसा स्वामिनमिये।नाकोडन्हावला कलियुगा रावणा पोसीनापास नमिदुःखदमियें
स्वामीमणिक नमुंननाथ सारोडिया–नकोडा जोरवाडी जगेशा । कापली दौलती प्रसमिया मुंजपुरा गाडरीया प्रभुगुणगिरेश
हमीरपुरपास प्रणमुंवली नवलखा भीडभंजन प्रभुभीडभागे । दुःखभंजन प्रभु डोकरीया नमुंपास जीरावला जगतजागे ॥९॥

उज्जंती उज्जेणिये सहसफणा साहेबा "महिमदावाद" कोको कडेरा।
नारिंगा चंचू चल्ला चवलेसरा तवली फलविहार नागेंद्रनेरा ॥ १० ॥

पासकल्याण गंगाणिया प्रणमिये पल्लविहार नागेंद्रनाथा। कुर्कटईश्वरा पासछत्राअहि कमठदेवेनम्या शक्रसाथा ॥ ११ ॥
तिमिरगोगो प्रभु दूधिया वल्लभा शंखल प्रीतकल्लोल बूढा। ढींगडमल्ला प्रभुपास झोटिंगजीजासमहिमानहींजगतगूढा ॥१२॥
चोरवाडी जिनराज उद्दामणि पास अज्झावरा नेवनंगा। कापडेरा वजेबो प्रभु छेछली सुखसागरतणाकरेसंगा ॥ १३ ॥
विज्जुला करकडुं मंडलीका वली मुहुरिया श्रीफलोधी अनिंदा। औआ कुलपाक कंसारिया डंबरा अनियला पासप्रणमुआनंदा।
नवसारी नवपल्लवा पासजी श्रीमहादेववरकाणवासी। परोकल टांकल नवखंडा नमुं भवतणीजायजेहथीउदासी ॥ १५ ॥
मनवंछित प्रभुपासजीनेनमुं वलीनमुं नाथ साचानगीना । दुःखदोहगतजीसाधुमारगभजीकर्मनाकेसरीथीनबीना ॥१६॥
अश्वनृपनन्द कुलचन्द प्रभु अलवरा बीबडा पास कल्याणराया। होवेकल्याणजसनामथीजय हुवेजननीवामानेधनजेहजाया
एकशतआठप्रभुपासनामैंथुण्यासुखसंपतिलह्योसर्ववार्ते । ऋद्धियशसंपदासुखशरीरेसदानाहीमनांमाहिरेकोईवाते ॥ १८ ॥
साचजाणीस्तव्योमनमाहरे गम्योपास हृदयेरम्योपरमप्रीते। समीहितसिद्धिनवनिद्धिपाम्योसहुमुझथकीजगतमांकोनजीते १९
काजसहुसारजे शत्रुसंहारजेपासशंखेसरामौजपाउं। नित्यपरभातिउठीनमुंनाथजी!, तुझविनाअवरकुंणकाजे ध्याउं? ॥ २० ॥
अठारएकासियेफालगुणमासिये, बीजकज्जलपखेछंदकरियो। गौतमगुरुतणाविजयखुशालने, उत्तमेंसंपदासुखवरियो ॥२१॥

श्रीआत्मानन्द-ग्रन्थरत्नमाला-त्रयोदशं रत्नम् (१३)

श्रीमद्रत्नसिंहसूरिविरचितवृत्तिसहिता

# परमाणुखण्डषट्त्रिंशिका-पुद्गलषट्त्रिंशिका-निगोदषट्त्रिंशिका।

पूज्यपादप्रवर्तकश्रीमत्कान्तिविजयान्तिषच्चतुरविजयोपदिष्टसुरतनगरनिवासि-
ओशवालज्ञातीय-श्रेष्ठि-प्रेमचन्द्रतनुजतिलकचन्द्र-द्रव्यसाहाय्येन
प्रकाशयित्री-श्रीआत्मानन्दसभा-भावनगर।

इदं पुस्तकं मुम्बय्यां **वल्लभदास-त्रिभुवनदास गांधी** सेक्रेटरी **जैन आत्मानन्दसभा भावनगर** इत्यनेन
**निर्णयसागर**मुद्रालये कोलभाटवीथ्यां २३, तमे गृहे रा. ये. शेडगे द्वारा मुद्रयित्वा प्रकाशितम्।

वीरसंवत् २४३९. आत्मसंवत् १७. विक्रमसंवत् १९६९.

# ॥ प्रस्तावना ॥

इह हि प्रथितप्रथिमप्रभावपरमपवित्रार्हत्प्रवचने द्रव्यानुयोगस्यातिगहनत्वेन तत्तत्त्वजिज्ञासूनां मन्दमतीनां भव्याङ्गिनां परोपकृतये परमागमावगतावितथपरमार्थपारदृश्वभिः पूर्वसूरिभिः पारगतप्रणीतपरमागमपरतन्त्राणि प्रणीतानि दृश्यन्तेऽनेकानि प्रकरणरत्नानि । तेष्वन्यतमप्रकरणरूपा एवैताः परमाणुखण्डषट्त्रिंशिका–पुद्गलषट्त्रिंशिका–निगोदषट्त्रिंशिका वरीवृत्यन्ते । तासु प्रथमा पञ्चदशगाथात्मकत्वेन खण्डरूपा पञ्चमाङ्गस्य पञ्चमशते सप्तमोद्देशके पुद्गलवचनप्रस्तावे—“एयस्सणं भंते ! दव्वट्ठाणाउयस्स खेत्तट्ठाणाउयस्स ओगाहणट्ठाणाउयस्स भावट्ठाणाउयस्स कयरे कयरे जाव विसेसाहिया वा ?” इत्यस्य सूत्रस्य, द्वितीया पुनः तस्यैवाङ्गस्य तस्मिन्नेव शतेऽष्टमोद्देशके पुद्गलप्रदेशनिरूपणप्रसङ्गे—“एयस्सणं भंते ! दव्वादेसेणं खेत्तादेसेणं कालादेसेणं भावादेसेणं सप्पएसाणं अप्पएसाण य कयरे कयरे जाव विसेसाहिया वा ?” इत्यस्य सूत्रस्य, तृतीया च तस्यैवाङ्गस्यैकादशे शते दशमोद्देशके निगोदस्वरूपनिरूपणावसरे—“लोगस्सणं भंते ! एगंमि आगासपएसे जहन्नपए जीवपएसाणं उक्कोसपए जीवपएसाणं सव्वजीवाणं कयरे कयरे जाव विसेसाहिया वा ?” इत्यस्य सूत्रस्य व्याख्याने सूत्रोक्तार्थविवरणरूपा वृद्धोक्ता गाथा नवाङ्गीवृत्तिकृद्भिश्चन्द्रकुलाम्बरपार्वणेन्दुश्रीमदभयदेवाचार्यैर्लिखिताः किञ्चिद्विवृताश्च, तासामेव किञ्चिद्विशेषविवरणरूपा वृत्ती रचितेयं प्रतिभाप्रागल्भ्यविस्मायितसूरसूरिभिः श्रीरत्नसिंहसूरिभिः ।

एते श्रीरत्नसिंहसूरयः कदा कतमं महीमण्डलं मण्डयामासुः ? इति जिज्ञासायां जातायाम्—श्रीजैनश्वेताम्बरमहासभा ( कॉन्फरेन्स ) मुद्रितजैनग्रन्थावलीनामपुस्तकेऽनेके रत्नसिंहनामान आचार्या दरीदृश्यन्ते, परमासां वृत्तिप्रान्ते वृत्तिविधायिभिः स्वसमयगच्छगुर्वादीनामभिधानस्या-

नुल्लिखितत्वात्तेषु कतमेऽस्या वृत्त्याः प्रणेतारः इति निर्णेतुं न शक्यते, किन्तु संवत् १५४६ लिखितपुस्तकादर्शदर्शनेन न तेऽर्वाचीना आचार्या इत्येतावन्मात्रमवगम्यते । मूलग्रन्थकारा अपि ये केचनाचार्या अभयदेवसूरितः पुरातना एव ।

यद्यपि आसां षट्त्रिंशिकानामणहिल्लपुरपाटकादिपुस्तकभाण्डागारेष्वनेके आदर्शा वरीवृत्यन्ते; तथाप्यस्माभिस्तु महता प्रयासेन सप्तैव पुस्तकान्यधिगतानि । तेष्वाद्यं न्यायाम्भोनिधितपागच्छाचार्यश्रीमद्विजयानन्दसूरिपुरन्दरशिष्योपाध्यायधारेयश्रीमद्वीरविजयपूज्यानाम्, द्वितीयं तृतीयं पुनः पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयमहर्षीणाम्, चतुर्थं पञ्चमं तु श्रीमद्विजयानन्दसूरिप्रशिष्यजैनशासनप्रभावकशान्तमूर्त्तिश्रीमद्हंस-विजयवार्चंयमानाम्, षष्ठं पुनः मुनिललामश्रीमन्मोहनलालमुनीनां सुरतनगरस्थज्ञानमन्दिरसत्कं शुद्धतमम्, सप्तमं च पत्तनसङ्घसंबन्धिभाण्डागार-सत्कम् । एतत्पुस्तकसप्तकाधारेण संशोधितेऽप्यत्र निबन्धे विषयस्यातिगहनत्वेन मतिमान्द्येन वा यत्र कचनाशुद्धिः कृता जाता वा भवेत्तत्र संशोधनीयं कृपयाऽनवगीतागमज्ञैरिति प्रार्थयते—

प्रकल्पिताञ्जलिः प्रवर्तकश्रीमत्कान्तिविजयपादसेवाहेवाकः

चतुरविजयो मुनिः

स्थितयः शेषास्तिस्रोऽपि प्रत्येकं क्रमेणाऽसंख्यगुणिताः कथं ज्ञेयाः? इति संक्षेपार्थः॥विस्तरार्थस्तु—स्थानायुरिति पदं क्षेत्रादीनां[1] प्रत्येकमभिसंबध्यते। तत्र क्षेत्रस्थानायुः, अवगाहनास्थानायुः, द्रव्यस्थानायुः, भावस्थानायुश्च। तत्र क्षेत्रस्थानायुः क्षेत्रे एकप्रदेशादौ स्थानं यत्पुद्गलानामवस्थानं तद्रूपमायुः क्षेत्रस्थानायुः, पुद्गलानामेकक्षेत्रेऽवस्थानमित्यर्थः १ अवगाहनाया नियतपरिमाणनभःप्रदेशव्यापित्वस्य पुद्गलानां स्थानमवस्थानं तद्रूपमायुरवगाहनास्थानायुः,पुद्गलानामेकयावगाहनयावस्थानकाल इत्यर्थः २ द्रव्यस्याणुत्वादिभावेन यदवस्थानं तद्रूपमायुर्द्रव्यस्थानायुः, पुद्गलानामेकस्कन्धपरिणामेनावस्थानकाल इत्यर्थः ३ भावस्य कृष्णत्वादिगुणकदम्बकस्य स्थानमवस्थानं तद्रूपमायुर्भावस्थानायुः, पुद्गलेषु विवक्षितकृष्णत्वादिगुणानामवस्थानकाल इत्यर्थः ४। ननु क्षेत्रस्यावगाहनायाश्च को भेदः ? उच्यते, क्षेत्रमवगाढमेव, अवगाहना तु विवक्षितात्क्षेत्रादन्यत्रापि पुद्गलानां तत्परिमाणक्षेत्रावगाहित्वमिति। अयमभिप्रायः—यदा विवक्षितक्षेत्रे कश्चित्पुद्गलस्कन्धोऽसत्कल्पनया नभःप्रदेशदशकावगाढो यावत्तिष्ठति, तावत्क्षेत्रस्थानायुरित्युच्यते। यदा तु विवक्षितक्षेत्रात्क्षेत्रान्तरेषु स एव पुद्गलस्कन्धो नभःप्रदेशदशकावगाढतयैव यावत्संचरति, तावदवगाहनास्थानायुरित्युच्यते। यस्तु स एव पुद्गलस्कन्धो विश्रसापरिणामेन पिण्डितरूत[2]न्यायेन घनीभवन्नभःप्रदेशपञ्चकेऽपिण्डितरूतन्यायेन स्फारीभवन्नभःप्रदेशपञ्चदशके वा यावत्तिष्ठति, तावद्द्रव्यस्थानायुरित्युच्यते। यदा तु स एव पुद्गलस्कन्धः स्वपरमाणुवियोजनेन अपरपरमाणुसंयोजनेन वा द्रव्यान्तरत्वमापन्नोऽपि[3] यावत्पूर्वपर्यायान् कृष्णत्वादीन्न मुञ्चति, तावद्भावस्थानायुरित्युच्यते। तेषां क्षेत्रावगाहनाद्रव्यभावस्थानायुषां परस्परेण

१ 'क्षेत्रादीनाम्' इति क्वचिन्नास्ति। २ 'रूत' इति पदं पुस्तकान्तरे नास्ति। ३ 'ऽपि' इति पद क्वचिन्नास्ति॥

यदल्पबहुत्वं तस्मिन् विचार्ये पुद्गलानां क्षेत्रावस्थानायुः सर्वस्तोकं, शेषाण्यवगाहनास्थानायुःप्रभृतीनि त्रीणि यथोत्तरमसंख्यगुणानीति कथमिति शिष्यप्रश्नः ॥ १ ॥ इमामेव गाथामुत्तरगाथाभिः प्रपञ्चयन्नाह—

**खित्तामुत्तत्ताओ, तेण समं बंधपच्चयाभावा । तो पोग्गलाण थोवो, खित्तावट्ठाणकालो उ ॥ २ ॥**

क्षेत्रस्याकाशस्यामूर्त्तत्वेन तेन क्षेत्रेण सह पुद्गलानां विशिष्टबन्धप्रत्ययस्य विशिष्टबन्धकारणस्य स्नेहादेरभावान्नैकत्र क्षेत्रेऽतिचिरं तिष्ठन्तीति शेषः । अयमभिप्रायः—विवक्षितक्षेत्रे विशिष्टपरिणामवन्तः पुद्गलाश्चिरावस्थानकारणाभावात् कियन्तमपि कालं स्थित्वा तमेव परिणाममत्यजन्तोऽपरापराणि क्षेत्राणि स्पृशन्तीति यस्मादेवं ततः पुद्गलानां क्षेत्रावस्थानकालः 'थोवो' इति सर्वस्तोक इत्यर्थः ॥ २ ॥ अथावहगानायुर्बहुत्वं भाव्यते—

**अन्नखित्तेगयस्सवि, तं चिअ माणं चिरंपि संचरइ । ओगाहणनासे पुण, खित्तन्नत्तं फुडं होइ ॥ ३ ॥**

अन्यक्षेत्रगतस्यापि पुद्गलस्कन्धस्य तदेव प्रमाणं सैवावगाहना चिरमपि संचरति अवतिष्ठते । अयमाशयः—विवक्षितक्षेत्रे यावत्सु आकाशप्रदेशेषु परमाणुस्कन्धोऽवस्थित आसीत् , तावत्प्रदेशव्यापितयाऽन्यक्षेत्रगतोऽपि लभ्यत इति । अवगाहनानाशे पुनः क्षेत्रान्यत्वं स्फुटं भवति; अवगाहनानाशश्च परमाणुस्कन्धस्य संकोचेन स्तोकप्रदेशाऽवस्थायितायां विकाशेनाधिकप्रदेशावस्थायितायां वा संभवतीति । इह पूर्वार्द्धेन क्षेत्राद्धाया अधिकाऽवगाहनाद्धा, उत्तरार्द्धेनावगाहनाद्धातो नाधिका क्षेत्राद्धेति भावितम् ॥ ३ ॥ कथमेतदेवं ? इत्युच्यते—

---

१ 'भावयन्नाह' इति क्वचित् । एवं 'भाव्यते' इत्यवतरणिकापदे सर्वत्र ज्ञेयम् । २ ' खित्त ' इत्यपि क्वचित् ॥

ओगाहणावबद्धा, खित्तद्धा अकिआवबद्धा य । न उ ओगाहणकालो, खित्तद्धामित्तसंबद्धो ॥ ४ ॥

अवगाहनायां नियतप्रदेशव्यापितायां, अक्रियायां चागमनरूपायामवबद्धा नियता नियन्त्रिता क्षेत्राद्धा एकक्षेत्रावस्थानकालो विवक्षितावगाहनासद्भाव एव अक्रियासद्भाव एव च क्षेत्राद्धाया भावात् । उक्तव्यतिरेके चाभावात् । अवगाहनाद्धा तु न क्षेत्रमात्रे नियता, क्षेत्राद्धाया अभावेऽप्यवगाहनाद्धाया अभावादिति ॥ ४ ॥ अथ निगमनम्[1]—

जम्हा तत्थन्नत्थ य, सच्चिअ ओगाहणा भवे खित्ते । तम्हा खेत्तद्धाओऽवगाहणऽद्धा असंखगुणा ॥ ५ ॥

यस्मात्तत्र विवक्षितेऽन्यत्र च विवक्षितादितरस्मिँश्च क्षेत्रे सैव प्राक्तनक्षेत्रसंबद्धैवावगाहना भवेत्, तस्मात्क्षेत्राद्धायाः सकाशादवगाहनाद्धाऽसंख्यातगुणेति ॥ ५ ॥ अथ द्रव्यायुर्बहुत्वं भाव्यते—

संकोअविकोएण व, उवरमिआएऽवगाहणाएवि । तित्तिअमित्ताणं चिअ, चिरंपि दव्वाणऽवत्थाणं ॥६॥

संकोचेन विकोचेन वा अवगाहनायामुपरतायामपि यावन्ति द्रव्याणि यत्संख्याः पुद्गलाः स्कन्धरूपतामापन्नाः पूर्वमासंस्तावतामेव चिरमपि तेषामवस्थानं संभवति । अयमाशयः—विवक्षितक्षेत्रप्रदेशव्यापित्वं नाम परमाणूनामवगाहना, तेभ्योऽल्पतरेषु बहुतरेषु च क्षेत्रप्रदेशेषु तावतामेव पुद्गलानां सूक्ष्मीभवनं संकोचः, स्फारीभवनं विकोचः । ततश्च संकोचविकोचाभ्यामवगाहनाया उपरमो भवतीति । एतावताऽवगाहनानिवृत्तावपि द्रव्यं न निवर्तेत इत्युक्तम् ॥ ६ ॥

---

१ इतः परं 'आह' इत्यधिकं क्वचित् । अग्रेऽपीदृशे स्थाने एवमेव ज्ञेयम् ॥

अथ द्रव्यनिवृत्तिविशेषेऽवगाहना निवर्त्तत एवेत्युच्यते—

संघायभेयओ वा, दव्वोवरमे पुणाई संखित्ते । निअमा तद्दव्वोगाहणाइनासो न संदेहो ॥ ७ ॥

[2]परमाणुस्कन्धस्यापरपरमाणुभिः सह संगमः संघातः, [3]तस्यैव कतिपयपरमाणूनां विघटनं भेदः, ततः संघाताद्भेदाद्वा पुनः परमाणूनां यः संक्षिप्तः स्तोकावगाहन ( [4]स्कन्धो न तु प्राक्तनावगाहन ) स्तत्र सति यो द्रव्योपरमो द्रव्यान्य[5]त्वं लघुतया गुरुतया वा पूर्वपरिणामोच्छेद इत्यर्थः । तत्र सति ([6]न च सङ्घातेन न संक्षिप्तः स्कन्धो भवति, तत्र सति सूक्ष्मत-[7]रत्वेनापि तत्परिणतेः श्रवणात् ) नियमात्तेषां द्रव्याणामवगाहनाया नाशो भवति ॥ ७ ॥ कस्मादेवं ? इत्यत्रोच्यते—

ओगाहद्धा दव्वे, संकोअविकोयओ अ अवबद्धा । न उ दव्वं संकोअणविकोअमित्तंमि संबद्धं ॥ ८ ॥

अवगाहनाद्धा अवगाहनावस्थानकालो द्रव्येऽवबद्धा नियतत्वेन संबद्धा, कथं ? संकोचाद्विकोचाच्च परमाणूनां सूक्ष्मपरिणामतयाऽन्योन्यानुप्रवेशः संकोचः, सूक्ष्मपरिणामपरिणतानां तु बादरपरिणामतया भवनं विकोचः, तौ संकोचविकोचौ समाश्रित्येत्यर्थः । अवगाहना हि द्रव्ये संकोचविकोचयोरभावे भवति संकोचविकोचसद्भावे च न भवतीत्येवं द्रव्येऽवगाहना नियतत्वेन संबद्धेत्युच्यते—द्रुमत्वे खदिरत्वमिव नहि यत्र द्रुमत्वं नास्ति तत्र खदिरत्वं प्राप्यत इति । उक्तविपर्ययमाह—न पुनर्द्रव्यं संकोचनविकोचनमात्रे सत्यपि अवगाहनायां नियतत्वेन संबद्धं संकोचनेन च । अव-

---

१ 'पुणो य' इति कचित् । २ इतः प्राक् 'इह विवक्षित' इत्यधिकं कचित् । ३ 'परमाणुस्कन्धस्य' इति कचित् । ४ एतत्कोष्ठान्तर्गतः पाठः कचिन्नास्ति । ५ 'द्रव्यान्यथात्वं' इति कचित् । ६ एतत्कोष्ठान्तर्गतः पाठः कापि नास्ति । ७ 'सूक्ष्मबादरत्वेन' इति कचित् । ८ 'मित्यत उ' इति कचित् ॥

गाहनानिवृत्तावपि द्रव्यं न निवर्त्तत इत्यवगाहनायां द्रव्यं नियतत्वेनासंबद्धमित्युच्यते खदिरत्वे द्रुमत्ववत्; खदिरत्वमन्तरेणापि द्रुमत्वस्य शिंशपादिष्वप्युपलम्भात् ॥ ८ ॥ अथ निगमनम्—

जम्हा तत्थन्नत्थ व, दवं ओगाहणाइ तं चेव । दवद्धासंखगुणा, तम्हा ओगाहणऽद्धाओ ॥ ९ ॥

यस्मात्तत्र विवक्षितावगाहनायां अन्यत्र संकोचविकोचकृतेऽवगाहनान्तरे द्रव्यं तदेव लभ्यते, चिरावस्थायित्वात्तद्व्यावष्टब्धपरमाणुसंख्यायास्तदवस्थत्वात् । तस्मादवगाहनाद्धातो द्रव्याद्धाऽसंख्यगुणेति ॥९॥ अथ भावायुर्बहुत्वं भाव्यते—

संघायभेअओ वा, दव्वोवरमेऽवि पज्जवा संति । तं कसिणगुणविरामे, पुणाइ दवं न ओगाहो ॥ १० ॥

संघातभेदौ पूर्ववत् । ततः संघातादिना द्रव्योपरमेऽपि द्रव्यान्यथात्वेऽपि पर्यवा वर्णगन्धादयः सन्ति, यथा घृष्टपटे शुक्लादिगुणाः सकलगुणोपरमे पुनर्न तद्द्रव्यं न द्रव्यावगाहोऽनुवर्त्तते, अनेन पर्यवाणां चिरस्थानं द्रव्यस्य त्वचिरमित्युक्तम् ॥ १० ॥ अथ कस्मादेवं ? इत्युच्यते—

संघायभेयबंधाणुवत्तिणी निच्चमेव दवद्धा । न उ गुणकालो संघायभेयमित्तद्धसंबद्धो ॥ ११ ॥

इह विवक्षितपरमाणुस्कन्धस्यापरपरमाणुभिः सह संगमः संघातः, तस्यैव कतिपयपरमाणूनां विघटनं भेदः, ततः संघातभेदलक्षणाभ्यां धर्माभ्यां यो बन्धः संबन्धस्तदनुवर्त्तिनी तदनुसारिणी नित्यमेव द्रव्याद्धा । इह च संघातभेदबन्धानुवर्त्तित्वं द्रव्याद्धाया वैधर्म्यद्वारेण ज्ञेयम्, संघाताद्यभाव एव द्रव्याद्धायाः सद्भावात् संघातादिसद्भावे चाभावात् । न पुनर्गुणकालो

गुणावस्थानाद्धा संघातभेदमात्रकालसंबद्धः संघातादिसद्भावेऽपि गुणानामनुवर्त्तनादिति ॥ ११ ॥ अथ निगमनम्—

**जम्हा तत्थन्नत्थ व, दव्वे खित्तावगाहणासुं च । ते चेव पज्जवा संति तो तदद्धा असंखगुणा ॥ १२ ॥**

यस्मात् 'तत्थन्नत्थ व' इति प्रत्येकमभिसंबध्यते, बन्धानुलोम्याच्च द्रव्यादीनामन्यथोपन्यासः कृतः । ततश्च यस्मा-त्तत्रान्यत्र च क्षेत्रे तत्रान्यत्र चावगाहनायां, तत्रान्यत्र च द्रव्ये इति सर्वत्र चिरावस्थायित्वात्त एव पर्यवा लभ्यन्ते, तस्मा-त्तदद्धेति पर्यायावस्थानकालोऽसंख्यातगुणेति ॥ १२ ॥ अत्र शिष्यः पूर्वपक्षगाथामाह—

**आह अणेगंतोऽयं, दव्वोवरिमे गुणाणऽवत्थाणं । गुणविप्परिणामंमि अ, दव्वविसेसो अणेगंतो ॥ १३ ॥**

नायमेकान्तो यद्द्रव्योपरमे गुणानामवस्थानं विनाशस्यापि दर्शनाद्गुणविनाशे च द्रव्यविशेषो द्रव्यविपरिणामोऽवश्यं-भावी विनष्टेष्वपि गुणेषु द्रव्यस्य तदवस्थस्य दर्शनात् ॥ १३ ॥ इदमेव दर्शयति—

**विप्परिणयंमि दव्वे, कम्मिवि गुणपरिणई भवे जुगवं । कम्मिवि पुण तदवत्थेवि होइ गुणविप्परीणामो १४।**

कस्मिन्नपि द्रव्ये स्वपरमाणुविघटनेनापरपरमाणुसंघट्टनेन वा विपरिणते द्रव्ये तुल्यकालं प्राक्तनपरिणामादीनां गुणा-नामपि विपरिणतिर्भवति । कस्मिन्नपि पुनर्द्रव्येऽपरपरमाणुसंगमस्वपरमाणुविगमाभावात्तदवस्थेऽपि गुणविपरिणामो गुणविनाशो भवति, घटद्रव्ये तदवस्थेऽपि पाकेन प्राक्तनश्यामरूपादिगुणनाशदर्शनात् ॥ १४ ॥ अत्रोत्तरम्—

**भण्णइ सच्चं किं पुण, गुणबाहुल्ला न सव्वगुणनासो । दव्वस्स तदन्नत्तेवि बहुतराणं गुणाण ठिई ॥१५॥**

॥ इति परमाणुविचारप्रतिबद्धा खण्डषट्त्रिंशिका समाप्ता ॥

द्रव्यान्यथात्वे गुणान्यथात्वं द्रव्यतादवस्थ्ये गुणान्यथात्वं च यदुक्तं तत् सत्यम्, अनयोरपि भङ्गकयोः कथंचिद्घट-नात्किं पुनर्गुणानां वर्णगन्धरसादीनां बाहुल्यादेकस्मिन् परमाणुस्कन्धे भूयसामवस्थानान्न सर्वेषां गुणानां विनाशो भवति। द्रव्यस्य तदन्यत्वेऽपि परमाणुसंगमविगमाभ्यां नाशेऽपि बहुतराणां वर्णगन्धरसादीनां नष्टेष्वपि केषुचित्परिणामादिषु गुणेषु गुणानां स्थितिरिति हेतोर्द्रव्यस्थानायुषो भावस्थानायुरसंख्यगुणमिति स्थित्तम् ॥ १५ ॥

॥ इति परमाणुविचारप्रतिबद्धा श्रीरत्नसिंहसूरिविवृता खण्डषट्त्रिंशिकावृत्तिः समर्थितेति ॥

## ॥ इति परमाणुखण्डषट्त्रिंशिका सवृत्तिका समाप्ता ॥

॥ अर्हम् ॥

# सवृत्तिका पुद्गलषट्त्रिंशिका ।

अथ पञ्चम एव शतेऽष्टमोद्देशके पुद्गलप्रदेशनिरूपणस्वरूपे द्रव्यतः, क्षेत्रतः, कालतो, भावतश्च सप्रदेशानां पुद्गलानां सूत्रोक्ताल्पबहुत्वस्य भावनार्थं गाथाप्रपञ्चो वृद्धोक्तो विव्रियते स चायम्—

**वुच्छं अप्पाबहुअं, दव्वाखित्तद्धभावओ वावि । अपएससप्पएसाण पुग्गलाणं समासेणं ॥ १ ॥**

द्रव्यतः सप्रदेशानामप्रदेशानां च, क्षेत्रतः सप्रदेशानामप्रदेशानां च, 'अद्धा' इति कालतः सप्रदेशानामप्रदेशानां च, भावतः सप्रदेशानामप्रदेशानां च, पुद्गलानामेकाणुकादिद्रव्याणामल्पबहुत्वं संक्षेपेण वक्ष्य इति ॥ १ ॥ अथाप्रदेशस्वरूपमाह[1]—

**दव्वेणं परमाणू, खित्तेणेगप्पएसमोगाढा । कालेणेगसमइआ, अपएसा पुग्गला हुंति ॥ २ ॥**

अप्रदेशाः पुद्गला भवन्तीति सर्वत्र योज्यम् । तत्र द्रव्यतः परस्परासंपृक्ताः परमाणवोऽप्रदेशाः पुद्गला भवन्ति १ क्षेत्रत एकनभःप्रदेशव्यापिनोऽप्रदेशाः पुद्गला भवन्ति २ कालत एकसमयस्थितयोऽप्रदेशाः पुद्गला भवन्तीति ३ ॥ २ ॥ भावाप्रदेशस्वरूपनिरूपणपूर्वकं तदल्पत्वमाह—

**भावेणं अपएसा, एकगुणा जे हवंति वण्णाई । ते चिय थोवा जं गुणबाहुल्लं पायसो दव्वे ॥ ३ ॥**

---

१ 'आहुः' इति कचित् ॥

भावत एकगुणाः 'वण्णाई' इति वर्णादिभिः पुद्गला अप्रदेशा भवन्ति ४। अयमर्थः—एकगुणकालकैकगुणपीतकादयो वर्णतः, एकगुणसुरभिप्रभृतयो गन्धतः, एकगुणतिक्तप्रभृतयो रसतः, एकगुणरूक्षैकगुणस्निग्धप्रभृतयः स्पर्शतश्च पुद्गला भावाप्रदेशा भवन्तीत्यर्थः। त एव 'थोवा' इति सर्वस्तोकाः। यतो द्रव्ये प्रायशो गुणाः प्राचुर्येण भवन्ति। अयमर्थः—द्रव्ये प्रायेण द्व्यादिगुणा अनन्तगुणान्ताः कालत्वादयः स्थानबाहुल्यादनन्तगुणा भवन्ति। एकगुणकालकत्वादयस्त्वेकैकस्थानवर्त्तित्वेनाल्पा इति भावः ॥ ३ ॥

**इत्तो कालाएसेण अप्पएसा भवे असंखगुणा। किं कारणं पुण भवे, भण्णइ परिणामबाहुल्ला ॥४॥**

इतो भावाप्रदेशेभ्यः कालाप्रदेशा असंख्यगुणा भवेयुः; कुतो हेतोः? उच्यते—परिणामानां बहुत्वात्। अयमर्थः—यो हि यस्मिन्समये यद्वर्णगन्धरसस्पर्शसंघातभेदसूक्ष्मबादरत्वादिपरिणामान्तरापन्नः स तस्मिन्समये तदपेक्षया कालतोऽप्रदेश उच्यते। तत्र वर्णाः पञ्च, गन्धौ द्वौ, रसाः पञ्च, स्पर्शा अष्टौ, एतेषु च विंशतौ पदेषु प्रतिपदमेकगुणकालकादयोऽनन्तगुणकालकपर्यवसाना एकाद्येकोत्तरेणानन्ता भेदाः पुद्गलानां प्राप्यन्ते, तेषु च सर्वेषु भेदेषु प्रतिभेदं यदैकसमयस्थितिकास्तदा कालतोऽप्रदेशा भवन्ति। तथा विशकलितानां परमाणूनामेकपुद्गलस्कन्धतया परिणमनं संघातः। एकद्रव्यात्परमाणूनां विचटनं भेदः। एकस्मिन्नपि नभःप्रदेशे द्व्यादीनां परमाणूनामवस्थानं सूक्ष्मत्वम्, सूक्ष्मपरिणामपरिणतस्य द्रव्यस्य परमाणुसंख्यानतिक्रमेण प्रतिसमयमनेकनभःप्रदेशव्यापितया भवनं बादरत्वम्। एतेष्वपि

१ अस्मिन्वाक्ये संबध्यमानयोर्यत्तच्छब्दयोः क्रियायाश्च बहुत्वं क्वचित् ॥

परिणामान्तरेषु यदा यदा तदात्वेन पुद्गला एकसमयस्थितिकाः प्राप्यन्ते, तदा तदा कालतोऽप्रदेशा उच्यन्ते । इति प्रतिपरिणामं कालाप्रदेशसंभवात्तद्बहुत्वमिति ॥ ४ ॥ एतदेव भाव्यते—

**भावेण अप्पएसा, जे ते कालेण हुंति दुविहाऽवि । दुगुणादओऽवि एवं, भावेणं जावणंतगुणा ॥ ५ ॥**

भावतो येऽप्रदेशास्ते कालतो द्विविधा अपि भवन्ति, अप्रदेशा सप्रदेशाश्चेत्यर्थः । तत्र एकसमयस्थितिका अप्रदेशाः, द्व्यादिसमयस्थितयस्त्वेकाद्येकोत्तरेण यावदसंख्यातसमयस्थितयस्ते सर्वे सप्रदेशा इत्यभिप्रायः । तथा भावेन द्विगुणादयोऽनन्तगुणान्ताः, एवमिति द्विविधा, कालतः सप्रदेशा अप्रदेशा भवन्तीत्यर्थः ॥ ५ ॥ ततश्च—

**कालापएसयाणं, एवं इक्किक्कओ हवइ रासी । इक्किक्के[1] गुणठाणंमि एगगुणकालयाईसु[2] ॥ ६ ॥**

एकगुणकालकद्विगुणकालकादिषु गुणस्थानकेषु मध्ये एकैकस्मिन् गुणस्थानके कालाप्रदेशानामेकैकराशिर्भवति[3] । अयमर्थः—एकगुणकालकादय एकाद्येकोत्तरया गुणवृद्ध्याऽनन्तगुणकालकान्ताः प्रतिगुणस्थानमनन्ताः पुद्गलाः सन्ति । एवमेकगुणनीलकादयोऽपि लभ्यन्त इति । ततश्चानन्तत्वाद्गुणस्थानकराशीनामनन्ता एव कालाप्रदेशराशयो भवन्तीति ॥ ६ ॥ अथ प्रेरकः—

**आहाणंतगुणत्तणमेवं कालापएसयाणंति । जमणंतगुणट्ठाणेसु हुंति रासी वि हु अणंता ॥ ७ ॥**

---

१ 'इक्किकगुणट्ठाणंमि' 'इक्किकट्ठाणंमी' इत्यपि क्वचित् । २ 'गाईसु' इति क्वचित । ३ 'एकैको राशि.' इति क्वचित् ॥

एवमिति यदि प्रतिगुणस्थानकं कालाप्रदेशराशयोऽभिधीयन्ते, ततो भावाप्रदेशेभ्यः कालाप्रदेशा अनन्तगुणाः प्राप्नुवन्ति । यतोऽनन्तेष्वेकगुणकालकद्विगुणकालकत्रिगुणकालकादिष्वनन्तगुणकालकपर्यवसानेषु गुणस्थानकेषु राशयोऽप्यनन्ता भवन्ति, अथ चोऽसंख्यातगुणत्वमिष्यत इति ॥ ७ ॥ अत्रोत्तरम्—

**भण्णइ एगगुणाणवि, अणंतभागंमि जं अणंतगुणा। तेणासंखगुणच्चिय, हुंति नाणंतगुणिअत्तं ॥ ८ ॥**

एकगुणकालकत्वादीनामप्यनन्तगुणकालकत्वादयोऽनन्तभाग एव वर्त्तन्ते, तेन भावाप्रदेशेभ्यः कालाप्रदेशाः परमाणुस्कन्धा असंख्यातगुणा एव भवन्ति, न त्वनन्तगुणा इति । अयमभिप्रायः—एकगुणकालकात्प्रभृति[3] एकाद्येकोत्तरेण गुणवृद्ध्योत्कृष्टसंख्यातगुणकालं यावत्संख्यातानि गुणस्थानकानि लभ्यन्ते, ततः परमेकेनापि गुणेन वृद्धौ जघन्याऽसंख्यातगुणकालकपुद्गलस्कन्धो व्यपदिश्यते । ततः प्रभृत्येकाद्येकोत्तरेणगुणवृद्ध्योत्कृष्टासंख्यातगुणकालं यावदसंख्यातानि गुणस्थानकानि लभ्यन्ते, ततः परमेकेनापि गुणेन वृद्धौ जघन्यानन्तगुणकालकपुद्गलस्कन्धो व्यपदिश्यते । ततः प्रभृत्येकाद्येकोत्तरेण गुणवृद्ध्योत्कृष्टानन्तगुणकालं यावदनन्तानि लभ्यन्ते, तथा च सति यद्यप्यनन्तगुणकालकत्वादीनां पुद्गलस्कन्धानामनन्तराशयोऽभिहिताः । तथाप्यनन्तस्यानन्तभेदत्वाद्वक्ष्यमाणैकगुणद्रव्यराशि १ संख्यातगुणद्रव्यराशि २ असं-

१ 'भवन्ति' इति क्वचित् । २ 'वा' इति क्वचित् । ३ इतः परं 'एकाद्येकोत्तरेण गुणवृद्ध्योत्कृष्टसंख्यातगुणकालकपुद्गलस्कन्धो व्यपदिश्यते ततः प्रभृति' एतावानधिकः पाठ एकपुस्तकमात्राधारत्वान्मूले नादृतः ॥

ख्यातगुणद्रव्यराशि ३ अनन्तगुणद्रव्यराशि ४ रूपराशिचतुष्टये एकगुणकालकत्वादिद्रव्यराशेरपेक्षयाऽनन्तगुणकालकत्वादिद्रव्यराशेः समग्रस्याप्यनन्तभागवृद्धत्वेनाभिहितत्वात्तच्चेह लघ्वनन्तत्वं ज्ञेयम्। ततः कालाप्रदेशानां नानन्तगुणत्वम्, अपि तु असंख्यातगुणत्वमेवेति ॥ ८ ॥

**एवं ता भावमिणं, पडुच्च कालापएसया सिद्धा। परमाणुपोग्गलाइसु, दव्वेऽवि हु एस चेव गमो ॥९॥**

एवं तावद्भावं वर्णगन्धादिपरिणामं इममभिहितस्वरूपमेकाद्यनन्तगुणस्थानवर्त्तिनमित्यर्थः। प्रतीत्याश्रित्य कालतोऽप्रदेशाः पुद्गलाः सिद्धाः स्वरूपनिरूपणेन प्रतिष्ठिताः। द्रव्येऽपि द्रव्यपरिणाममप्याश्रित्य परमाण्वादिषु, एवं भावपरिणामाभिहित एव प्रकारो ज्ञेयः। अयमभिप्रायः—ये परमाणवः परस्परमसंपृक्तास्ते द्रव्यतोऽप्रदेशा उच्यन्त इति ॥ ९ ॥

अथ क्षेत्राप्रदेशस्वरूपमाह—

**एमेव होइ खित्ते, एगपएसावगाहणाईसु। ठाणंतरसंकंतिं, पडुच्च कालेण मग्गणया ॥ १० ॥**

एवमेव द्रव्यपरिणामवद्भवति, क्षेत्रे क्षेत्रमधिकृत्य एकप्रदेशावगाढादिषु पुद्गलभेदेषु स्थानान्तरगमनं प्रतीत्य कालेन कालाप्रदेशानां मार्गणा। अयमभिप्रायः—यथा द्रव्यपरिणाममाश्रित्य परमाणवो द्रव्यतोऽप्रदेशास्तथैकैकनभःप्रदेशावगाहितायां सत्यां स्वस्वक्षेत्रममुञ्चन्तः क्षेत्रतोऽप्रदेशाः पुद्गला उच्यन्ते। यदा यदा तु स्वस्वक्षेत्रं विमुच्य क्षेत्रान्तरेषु पुद्गलाः संचरन्ति, प्रतिस्थानं च समयमेकमवतिष्ठन्ते; तदा तदा कालतोऽप्रदेशाः पुद्गला व्यपदिश्यन्ते इति ॥ १० ॥ यथा क्षेत्रत एवमवगाहनादितोऽपीत्येतदुच्यते—

संकोअविकोअं पिहु, पडुच्च ओगाहणाइ एमेव । तह सुहुमबायरथिरेयरे य सद्दाइपरिणामं ॥ ११ ॥

अवगाहनायाः संकोचं विकोचं च प्रतीत्य कालाप्रदेशाः स्युः । अयमभिप्रायः—ये परमाणुसंख्यापेक्षया स्तोकनभःप्रदेशावगाहिनो भूत्वा समयमेकं स्थित्वा पुद्गलस्कन्धा बहुतरनभःप्रदेशावगाहिनो भवन्ति, समयमेकं वावतिष्ठन्ते; यदा च बहुतरनभःप्रदेशावगाहिनो भूत्वा समयमेकं स्थित्वा पुनरल्पनभःप्रदेशावगाहिनो भवन्ति, तदा संकोचे विकोचेऽपि सति पुद्गलस्कन्धाः कालतोऽप्रदेशाः स्युः । तथा सूक्ष्मबादरस्थिरास्थिरशब्दमनःकर्मादिपरिणामं च प्रतीत्य कालतोऽप्रदेशाः स्युः । अयमभिप्रायः—ये सूक्ष्मबादरादिपरिणाममापन्नाः पुद्गलस्कन्धा यदा समयमेकमवतिष्ठन्ते, तदा ते कालतोऽप्रदेशाः स्युः ॥ ११ ॥ ततश्च—

एवं जो सव्वोऽवि अ, परिणामो पुग्गलाण इह समए । तं तं पडुच्च एसिं, कालेणं अप्पएसत्तं ॥ १२ ॥

एवं उक्तप्रकारेण यः सर्वोऽपि च परिणामः पर्यायान्तरेण भवनं पुद्गलानामिति परमाणूनां स्कन्धानां चेहेति जिनप्रवचने वर्णितः; तं तं परिणाममाश्रित्य 'एसिं' इति पुद्गलानामेकसमयस्थितिकानां कालेनाप्रदेशत्वं ज्ञेयमिति ॥ १२ ॥ तथा च सति किं सिद्धम् ? इत्यत आह—

कालेण अप्पएसा, एवं भावापएसएहिं तो । हुंति असंखिज्जगुणा, सिद्धा परिणामबाहुल्ला ॥ १३ ॥

---

१ 'नया' इति क्वचित् ॥

ये भावतोऽप्रदेशा एकगुणकालकादयः, ये च द्विगुणकालकादयोऽनन्तगुणकालकान्तादीन् यावद्भावतः सप्रदेशास्ते सर्वे कालत एकसमयस्थितिका अप्रदेशाः । 'एवं' इति अनेन व्याख्यानेन भावाप्रदेशेभ्यः कालाप्रदेशा एकगुणकालकद्विगुणकालकादीनां परिणामानन्त्यात्पुद्गला असंख्यातगुणाः सिद्धा भवन्तीति ॥ १३ ॥

**इत्तो दव्वाएसेण अप्पएसा हवंतऽसंखगुणा । के पुण ते परमाणू , कह ते बहुअत्ति तं सुणसु ॥ १४ ॥**

इतोऽनन्तरोक्तेभ्यः कालाप्रदेशेभ्यो द्रव्यतोऽप्रदेशा असंख्यातगुणा भवन्ति । के पुनस्ते ? इत्याह—परमाणवः । कथं ते बहवः ? तदुच्यते ॥ १४ ॥

**अणु-सखिज्जपएसिअ-असंखऽणंतप्पएसिआ चेव । चउरो च्चिअ रासी पुग्गलाण लोए अणंताणं ॥ १५ ॥**

परस्परासंबन्धस्वभावानां परमाणूनामेको राशिः १, द्व्यणुकत्र्यणुकादीनामुत्कृष्टसंख्याताणुकान्तानां स्कन्धानां सर्वेषामपि संख्याताणुकव्यपदेशभाजां द्वितीयो राशिः २, जघन्यासंख्याताणुकादीनामेकाद्येकोत्तरगुणवृद्धानामुत्कृष्टासंख्याताणुकान्तानां सर्वेषामप्यसंख्याताणुकव्यपदेशभाजां तृतीयो राशिः ३, जघन्यानन्ताणुकादीनामेकाद्येकोत्तरगुणवृद्धानामुत्कृष्टानन्ताणुकान्तानां स्कन्धानां सर्वेषामप्यनन्ताणुकव्यपदेशभाजां चतुर्थो राशिः ४ । एत एव च राशयोऽनन्तानां पुद्गलानां लोके चतुर्दशरज्ज्वात्मके भवन्तीति ॥ १५ ॥

**तत्थाणंतेहिंतो, सुत्तेणं तप्पएसिएहिंतो । जेण पएसट्ठाए, भणिआ अणवो अणंतगुणा ॥ १६ ॥**

'तत्थ' इति तेषु चतुर्षु राशिषु यद्यप्यनन्तप्रदेशिकाः स्कन्धा अनन्ताः सन्ति, तथापि तेभ्योऽनन्तप्रदेशिकस्कन्धेभ्यः प्रदेशार्थतया परमाणवोऽनन्तगुणाः सूत्रे उक्ताः। सूत्रं चेदम्—"सव्वथोवा अणंतपएसिआ खंधा दव्वट्ठयाए, ते चेव पएसट्ठयाए अणंतगुणा। परमाणुपुग्गला दव्वट्ठपएसट्ठयाए अणंतगुणा। संखिज्जपएसिआ खंधा दव्वट्ठयाए संखिज्जगुणा, ते चेव पएसट्ठयाए संखिज्जगुणा। असंखिज्जपएसिआ खंधा दव्वट्ठआए असंखिज्जगुणा, ते च्चेव पएसट्ठयाए असंखेगुणत्ति ॥ १६ ॥

**संखिज्जयमे भागे, संखिज्जपएसिआण वट्टंति। नवरमसंखिज्जपएसिआण भागे असंखयमे ॥ १७ ॥**

संख्याताः प्रदेशाः परमाणवो येषां स्कन्धानां ते तथा, तेषां संख्येयतमे भागे वर्त्तन्ते परमाणव इति। असंख्याताः प्रदेशाः परमाणवो येषां ते तथा, तेषां चासंख्येयतमे भागे वर्त्तन्ते, परमाणव इति उक्तसूत्रप्रामाण्यात्। अयमाशयः—यथा किल कल्पनया शतस्य संख्येयतमो भागो विंशतिः, शतस्यैवासंख्येयतमो दश, शतस्यैवानन्ततमो भागः पञ्च। एवमिहानया दिशा द्व्यणुकादिस्कन्धेभ्यः प्रभृति संख्याताणुकस्कन्धान् यावद् यः संख्याताणुकस्कन्धराशिस्तदपेक्षया परमाणवः संख्येयतमे भागे वर्त्तन्त इति। असंख्याताणुकस्कन्धराश्यपेक्षया त्वसंख्येयभाग इति। परमार्थतस्तु परमाणूनामप्यनन्तत्वं वक्ष्यत इति ॥ १७ ॥ अथ परमाणूनां बहुत्वं कथयन्नाह—

**सइवि असंखिज्जपएसिआण तेसिं असंखभागत्ते। बाहुल्लं साहिज्जइ, फुडमवसेसाहिँ रासीहिं ॥ १८ ॥**

सत्यप्यसंख्यातप्रदेशिकेभ्यः स्कन्धेभ्यः 'तेसिं' इति परमाणूनामसंख्येयभागत्वे बहुत्वं कथ्यते, निश्चितमेव शेष-

१ 'प्पा' इति क्वचित्। एवमग्रेऽपि। २ 'असंखिज्ज' इति क्वचित्। ३ 'इ' इति क्वचित्। एवमग्रेऽपि। ४ 'तथा' इति क्वचिन्न ॥

राशिभ्यां संख्यातप्रदेशिकानन्तप्रदेशिकाभिधानाभ्यामिति । अयमभिप्रायः—संख्यातप्रदेशिकराशेरपेक्षया सूत्रे संख्यातभागवृत्तित्वं परमाणूनामुक्तं ततोऽवसीयते तेषां बहुत्वम् । अन्यथा संख्यातप्रदेशिकराशेरपेक्षयाऽसंख्येयभागेऽनन्तभागे वा ते परमाणवोऽभविष्यन्निति ॥ १८ ॥ परमाणूनां स्वरूपतो बहुत्वं प्रसाध्य इदानीं कालाप्रदेशिकेभ्योऽसंख्यातत्वमाह—

**जेणिक्करासिणो च्चिअ, असंखभागेण सेसरासीणं । तेणासंखिज्जगुणा, अणवो कालापएसेहिं ॥ १९ ॥**

येनैकराशेरेवासंख्यातप्रदेशिकस्कन्धाभिधानस्यैवासंख्यातभागेऽणवो वर्तन्ते, न शेषराश्योः संख्यातप्रदेशिकानन्तप्रदेशिकाभिधानयोरिति । अयमर्थः—अनन्तप्रदेशिकस्कन्धराशेरनन्तगुणाः, संख्यातप्रदेशिकस्कन्धराशेस्तु संख्यातभागे वर्त्तन्ते; संख्यातभागस्य च विवक्षया पूर्वोक्तयुक्त्या च नात्यन्तमल्पतेति । तेन कालतः सप्रदेशेष्वप्रदेशेषु च वृत्तिमतामणूनां बहुत्वात् कालाप्रदेशानां च समयमात्रकालावस्थायित्वेनात्यन्तमल्पत्वात्कालाप्रदेशेभ्योऽसंख्यातगुणा द्रव्याप्रदेशा इति॥१९॥

**इत्तो असंखगुणिआ, हवंति खित्तापएसिआ समए । जं ते ता सवे च्चिअ, अपएसा खित्तओ अणवो॥२०॥**

इतो द्रव्याप्रदेशेभ्यः क्षेत्राप्रदेशिका असंख्यातगुणा भवन्ति । यस्मात्ते एव परमाणवः 'ता' इति तावदर्थे स च क्रमोपन्यासे । वक्ष्यमाणगाथोक्तद्विप्रदेशादिद्रव्यापेक्षया एकैकनभःप्रदेशावगाहितया सर्वेऽपि क्षेत्रतोऽप्रदेशा एवेति । नह्येकः परमाणुर्बादरपरिणामोऽपि द्व्यादीन्नभःप्रदेशान् व्याप्नोति ॥ २० ॥

**दुपएसिआइएसुऽवि, पएसपरिवड्ढिएसु ठाणेसु । लब्भइ इक्किक्कोऽविअ, रासीखित्तापएसाणं ॥ २१ ॥**

प्रदेशशब्दः परमाणुपर्याय इह गृह्यते। ततो द्विप्रदेशादिकेष्वपि स्कन्धेषु प्रदेशपरिवर्द्धितेषु स्थानेष्वेकाद्येकोत्तरेण परमाणुपरिवर्द्धितेषु क्षेत्राप्रदेशानामेकैक एव राशिर्लभ्यते। अयमर्थः—द्व्यणुकस्कन्धा बादरपरिणामतया केचिद् द्विद्विनभःप्रदेशावगाहिनः, केचित्तु सूक्ष्मपरिणामतयैकैकनभःप्रदेशावगाहिन इति। एवं त्र्यणुकस्कन्धाः केचिद्बादरपरिणामतया त्रित्रिनभःप्रदेशावगाहिनः, केचिद्बादरसूक्ष्मपरिणामतया द्विद्विनभःप्रदेशावगाहिनः, केचित्सूक्ष्मपरिणामतयैकैकनभःप्रदेशावगाहिनः। एवं चतुरणुकस्कन्धा अपि केचिच्चतुश्चतुर्नभःप्रदेशावगाहिनः, केचित्त्रित्रिनभःप्रदेशावगाहिनः, केचिद्द्विद्विनभःप्रदेशावगाहिनः, केचित्त्वेकैकनभःप्रदेशावगाहिन इति। अनया दिशा पञ्चाणुकषडणुकादयोऽनन्ताणुकान्ताः स्कन्धा एकैकनभःप्रदेशावगाहिनोऽपि लभ्यन्त इति। तथा च सति द्व्यणुकादीनामनन्ताणुकान्तानां[1] क्षेत्रतोऽप्रदेशानां प्रतिप्रदेशं परमाणुवृद्धिस्थानमेकैक एव राशिरिति ॥ २१ ॥ अथ क्षेत्रतः सप्रदेशानामसंख्यगुणतामाह—

**इत्तो खित्ताएसेण चेव सपएसया असंखगुणा। एगपएसोगाढे, मोत्तुं सेसावगाहणया ॥ २२ ॥**

एभ्यः क्षेत्राप्रदेशेभ्यः सकाशात् क्षेत्रतः सप्रदेशा असंख्यातगुणाः। यतः एकैकप्रदेशावगाढान् स्कन्धान्मुक्त्वा 'सेसावगाहणया' इति द्व्यादिनभःप्रदेशावगाहिनः स्कन्धाः सर्वेऽपीह गृह्यन्त इति। अयमर्थः—द्व्यणुकस्कन्धानां क्षेत्रावगाहनापेक्षया द्वौ राशी। एक एकैकनभःप्रदेशावगाढानां स्कन्धानां, द्वितीयस्तु द्विद्विनभःप्रदेशावगाढानां स्कन्धानाम्। तथा त्र्यणुकस्कन्धानां क्षेत्रावगाहनापेक्षया त्रयो राशयः। एक एकैकनभःप्रदेशावगाढानां, द्वितीयो द्विद्विनभःप्रदेशा-

१ इतः परं 'स्कन्धानां' इति क्वाप्यधिकं दृश्यते ॥

वगाढानां, तृतीयस्तु त्रित्रिनभःप्रदेशावगाढानां स्कन्धानाम्। तथा चतुरणुकस्कन्धानां[1] चत्वारो राशयः। एक एकैकनभःप्रदेशावगाढानाम्, द्वितीयो द्विद्विनभःप्रदेशावगाढानाम्, तृतीयस्त्रित्रिनभप्रदेशावगाढानाम्, चतुर्थस्तु चतुश्चतुर्नभःप्रदेशावगाढानां स्कन्धानाम्। एवं पञ्चाणुकस्कन्धानां पञ्च राशयो यावदसंख्याताणुकस्कन्धानां क्षेत्रावगाहनापेक्षयाऽसंख्याता राशयः। अनन्ताणुकस्कन्धानां तु क्षेत्रावगाहापेक्षया नानन्ता राशयः, सकललोकाकाशप्रदेशाग्रस्यासंख्यातस्यैव सर्वत्र भणनादिति। एवं च सति ये द्व्यणुकादयोऽनन्ताणुकान्ताः स्कन्धा एकैकनभःप्रदेशावगाहिस्कन्धराशिवर्जा द्व्यादिनभःप्रदेशावगाहिनो राशयस्ते सर्वे क्षेत्रतः सप्रदेशा इति ॥ २२ ॥ शेषत्वं भावयन्नाह—

**ते पुण दुपएसोगाहणाइआ सव्वपुग्गला सेसा। ते अ असंखिज्जगुणा, अवगाहणठाण बाहुल्ला ॥२३॥**

ते पुनर्द्विप्रदेशावगाहनादिकाः 'सव्वपुग्गला' इति समस्ता द्व्यणुकादयोऽनन्ताणुकान्ताः स्कन्धाः शेषा व्यतिरिक्ताः क्षेत्राप्रदेशपुद्गलेभ्य इत्यस्याध्याहारः। ते पुनः क्षेत्रतः सप्रदेशा असंख्यातगुणाः अवगाहनास्थानानां बाहुल्यात्। अयमाशयः—परमाण्वादीनामनन्ताणुकस्कन्धानामपि पुद्गलानामेकैकनभःप्रदेशलक्षणमेकमेवावगाहनास्थानम्। क्षेत्राप्रदेशानां क्षेत्रतः सप्रदेशानां द्व्यादिनभःप्रदेशप्रभृतीन्यसंख्यातनभःप्रदेशपर्यन्तान्यसंख्यातान्यवगाहनास्थानानीति ॥ २३ ॥ अथ द्रव्यतः कालतो भावतश्च सप्रदेशानां प्रमाणमाह—

**दव्वेण हुंति इत्तो, सपएसा पुग्गला विसेसहिआ। कालेण य भावेण य, एमेव भवे विसेसहिआ ॥२४॥**

---

१ 'क्षेत्रावगाहापेक्षया' इति क्वाप्यधिकम्। २ 'क्षेत्रावगाहा' इति क्वचित्। एवं क्वचिदग्रेऽपि ज्ञेयम्। ३ 'गाढ' 'गाह' इति क्वचित्॥

एभ्यः क्षेत्रतः सप्रदेशेभ्यो द्रव्यतः सप्रदेशाः पुद्गला विशेषाधिकाः। तथा द्रव्यतः सप्रदेशेभ्यः कालतः सप्रदेशाः पुद्गला विशेषाधिकाः। एवं कालतः सप्रदेशेभ्यो भावतः सप्रदेशा विशेषाधिका इति ॥ २४ ॥ अमीषां विशेषाधिकत्वे युक्तिमाह—

**भावाईआ वुड्ढी, असंखगुणिआ जमप्पएसाणं। तो सप्पएसयाणं, खित्ताइविसेसपरिवुड्ढी ॥ २५ ॥**

यस्मादप्रदेशानां पुद्गलानां भावादिका भावमादौ कृत्वा वृद्धिरसंख्यगुणिता, आदिशब्दात्कालद्रव्यक्षेत्राणि गृह्यन्ते। अयमर्थः—भावाप्रदेशेभ्यः कालतोऽप्रदेशाः पुद्गला असंख्यगुणाः। कालाप्रदेशेभ्यो द्रव्याप्रदेशा असंख्यगुणाः। द्रव्याप्रदेशेभ्यः क्षेत्राप्रदेशा असंख्यगुणा इति। 'तो' इति तस्मात्सप्रदेशानां पुद्गलानां क्षेत्रादिका क्षेत्रमादौ कृत्वा वैपरीत्येन क्रमशो विशेषपरिवृद्धिर्बोद्धव्या। क्षेत्रतः सप्रदेशेभ्यो द्रव्यतः सप्रदेशा विशेषाधिकाः। द्रव्यतः सप्रदेशेभ्यः कालतः सप्रदेशा विशेषाधिकाः। कालतः सप्रदेशेभ्यो भावतः सप्रदेशा विशेषाधिका इति ॥ २५ ॥ अथ मिश्राल्पबहुत्वमाह—

**मीसाण संकमं पइ, सपएसा खित्तओ असंखगुणा। भणिआ सट्ठाणे पुण, थोवच्चिअ ते गहेअव्वा ॥ २६ ॥**

मिश्राणामित्यप्रदेशसप्रदेशानां मीलितानां संक्रमं प्रत्यप्रदेशेभ्यः सप्रदेशेष्वल्पबहुत्वविचारसंक्रमे क्षेत्रतोऽप्रदेशेभ्यः क्षेत्रतः सप्रदेशा असंख्येयगुणाः। स्वस्थाने पुनरप्रदेशान् विहाय केवलसप्रदेशचिन्तायां द्रव्यकालभावानां सप्रदेशानां क्रमशो विशेषाधिकानामपेक्षया स्तोका एव ते क्षेत्रतः सप्रदेशा इति ॥ २६ ॥ एतदेवोच्यते—

**खित्तेण सप्पएसा, थोवा दव्वद्धभावओ अहिया। सपएसप्पाबहुअं, सट्ठाणे अत्थओ एवं ॥ २७ ॥**

शेषसप्रदेशापेक्षया क्षेत्रतः सप्रदेशाः स्तोकाः, स्तोकत्वे च साध्ये युक्तिः पूर्वविचारितैव । 'दव्वद्धभावओ अहिया' इति द्रव्यतः कालतो भावतश्च सप्रदेशाः क्रमशो विशेषाधिकाः । अर्थत इति व्याख्यानापेक्षया इत्थं स्वस्थाने सप्रदेशानां पुद्गलानामल्पबहुत्वमवगन्तव्यमिति ॥ २७ ॥ अल्पबहुत्वसंख्यामाह—

**पढमं अपएसाणं, बीयं पुण होइ सप्पएसाणं । तइयं पुण मीसाणं, अप्पबहू अत्थओ तिन्नि ॥२८॥**

प्रथमं द्रव्याद्यप्रदेशानां चतुर्णां पुद्गलराशीनां परस्परमल्पबहुत्वमुक्तम् । द्वितीयं तेषामेव द्रव्यादितः सप्रदेशानाम् । तृतीयं मिश्राणामिति । सप्रदेशाप्रदेशानां मिलितानामित्यर्थतो व्याख्यानद्वारेण त्रीण्यल्पबहुत्वानि भवन्ति । सूत्रे त्वेकमेवाल्पबहुत्वमुक्तमिति ॥ २८ ॥ सप्रदेशानामन्योन्यं ह्रासवृद्धिप्रमाणमाह—

**ठाणे ठाणे वड्ढइ, भावाईणं जमप्पएसाणं । तं चिअ भावाईणं, परिभस्सइ सप्पएसाणं ॥ २९ ॥**

भावादीनामादिशब्दात्कालद्रव्यक्षेत्राणामप्रदेशानां स्थाने स्थाने यद्वर्द्धते, तदेव सप्रदेशानां भावादीनां परिभ्रश्यते । यथा किल कल्पनया लक्षं पुद्गलास्तेषु भावतः कालतो द्रव्यतः क्षेत्रतश्चाप्रदेशाः क्रमेणैकद्विपञ्चदशसहस्रसंख्याः, सप्रदेशास्तु नवनवत्यष्टनवतिपञ्चनवतिनवतिसहस्रसंख्याः, ततश्च भावाप्रदेशेभ्यः कालाप्रदेशेषु सहस्रं वर्धते, तदेव भावतः सप्रदेशेभ्यः कालतः सप्रदेशेषु हीयते। तथा यदेव कालाप्रदेशेभ्यो द्रव्याप्रदेशेषु सहस्रत्रयं वर्धते, तदेव कालसप्रदेशेभ्यो द्रव्यसप्रदेशेषु

१ 'सप्रदेशाप्रदेशानां' इति पाठस्यैकपुस्तकमात्राधारतया मूले नोद्धृतः ॥

हीयते। तथा यदेव द्रव्याप्रदेशेभ्यः क्षेत्राप्रदेशेषु सहस्रपञ्चकं वर्धते, तदेव द्रव्यसप्रदेशेभ्यः क्षेत्रसप्रदेशेषु हीयते इति ॥ २९ ॥

स्थापना चेयम्।

| भावाप्र० १००० | कालाप्र० २००० | द्रव्याप्र० ५००० | क्षेत्राप्र० १०००० |
| --- | --- | --- | --- |
| भावसप्र० ९९००० | कालसप्र० ९८००० | द्रव्यसप्र० ९५००० | क्षेत्रसप्र० ९०००० |

**अहवा खित्ताईणं, जमप्पएसाण हायए कमसो। तं चिअ खित्ताईणं, परिवड्ढइ सप्पएसाणं ॥ ३० ॥**

अथवा द्रव्यक्षेत्रादीनां यदप्रदेशानां हीयते, क्रमशस्तदेव सप्रदेशानां क्षेत्रादीनां परिवर्धत इति। अयमर्थः—क्षेत्राप्रदेशेभ्यो द्रव्याप्रदेशेषु पञ्च सहस्रा हीयन्ते। तत एव क्षेत्रतः सप्रदेशेभ्यो द्रव्यसप्रदेशेषु वर्धन्ते। तथा य एव द्रव्यतोऽप्रदेशेभ्यः कालाप्रदेशेषु त्रयः सहस्रा हीयन्ते। त एव द्रव्यसप्रदेशेभ्यः कालसप्रदेशेषु वर्धन्ते। तथा यदेकं सहस्रं कालाप्रदेशेभ्यो भावाप्रदेशेषु हीयते। तदेव कालसप्रदेशेभ्यो भावसप्रदेशेषु वर्धत इति ॥ ३० ॥

**अवरुप्परप्पसिद्धा, वुड्ढी हाणी अ होइ दुह्णंपि। अपएससप्पएसाण पुग्गलाणं सलक्खणओ ॥ ३१ ॥**

परस्परतोऽन्योन्यापेक्षया प्रकर्षेण सिद्धा प्रतिष्ठिता स्वलक्षणतः स्वस्वरूपतो वृद्धिर्हानिश्च भवति, द्वयोरपीति पुद्गलानां भावकालद्रव्यक्षेत्रविशिष्टानां क्रमोत्क्रमाभ्यां वृद्धिहानिमतामप्रदेशराशेः सप्रदेशराशेश्चेत्यर्थः ॥ ३१ ॥ अमुमेवार्थं व्यनक्ति—

**ते चेव य ते चउहिवि, जमुवचरिज्जंति पुग्गला दुविहा। तेण उ वुड्ढी हाणी, तेसिं अन्नोन्नसंसिद्धा॥३२॥**

यस्मात्पुद्गला द्विविधाः सप्रदेशा अप्रदेशाश्चेत्यर्थः। उपचर्यन्ते विशिष्यन्ते चतुर्भिरपि भावकालादिभिः परमार्थतस्तु

ते एव ते नान्ये । अयमर्थः—ये किल कल्पनया पुद्गला लक्षसंख्या उक्ताः परमार्थेन तु अनन्ताः सन्ति, तेषां मध्यात्के-चित् द्रव्यतोऽप्रदेशाः शेषास्तु द्रव्यतः सप्रदेशाः । य एव द्रव्यतोऽप्रदेशाः सप्रदेशाश्च । त एव च कालादिभिरप्यप्रदेशाः सप्रदेशाश्च विचार्यन्ते, तेन तेषां पुद्गलानां वृद्धिर्हानिश्चान्योन्यसंसिद्धा, इतरेतराश्रयेति परस्परापेक्षयेत्यर्थः ॥ ३२ ॥

**एएसिं रासीणं, णिदरिसणमिणं भणामि पच्चक्खं । बुद्धीए सवपुग्गल, जावं तावाण लक्खो उ ॥ ३३ ॥**

**इक्कं च दो अ पंच य, दस य सहस्साइँ अप्पएसाणं । भावाईणं कमसो, चउण्हवि जहोवइट्ठाणं ॥ ३४ ॥**

कल्पनया यावन्तः सर्वपुद्गलास्तावतां लक्षमिति ॥ ३३ ॥ एकं द्वे पञ्च दश सहस्राणि अप्रदेशानां भावादीनां भाव-कालद्रव्यक्षेत्राणां चतुर्णामपि यथोपदिष्टानां क्रमेणावगन्तव्यानि ॥ ३४ ॥

**नउई पंचाणउई, अट्ठाणउई तहेव नवनउई । एवइयाइँ सहस्साइँ सप्पएसाण विवरीअं ॥ ३५ ॥**

वैपरीत्येन सप्रदेशानां नवतिः पञ्चनवतिरष्टनवतिर्नवनवतिश्च सहस्राणां क्रमेणावगन्तव्या । वैपरीत्यं चेदम्—क्षेत्रतः सप्रदेशानां नवतिसहस्राणि । द्रव्यतः सप्रदेशानां पञ्चनवतिसहस्राणि । कालतः सप्रदेशानामष्टनवतिसहस्राणि । भावतः सप्रदेशानां नवनवतिसहस्राणीति ॥ ३५ ॥

**एएसि जहासंभवमत्थोवणयं करिज्ज रासीणं । सब्भावओ अ जाणिज्ज ते अणंते जिणाभिहिए ॥ ३६ ॥**

**॥ इति समासेयं पुद्गलषट्त्रिंशिका ॥**

एतेषां पूर्वोक्तानां सप्रदेशाप्रदेशानां राशीनां यथासंभवमर्थोपनयमर्थभावनां कुर्यात्। अर्थभावना तु सप्रदेशाप्रदेशानामल्पबहुत्वविचाररूपा पूर्वव्याख्याने कृतैवेति नेह प्रतन्यते। अत्र लक्षसंख्यया पुद्गलानामल्पबहुत्वविचारणमव्युत्पन्नमतिशिष्यव्युत्पादनार्थम्। परमार्थतस्तु तान् पुद्गलाननन्तान् जिनाभिहितान् जानीयादिति ॥ ३६ ॥

इति श्रीरत्नसिंहसूरिविवृता पुद्गलषट्त्रिंशिकावृत्तिः समर्थितेति ॥

---

१ 'संख्यसंख्यया' इति क्वचित्।

## ॥ इति सवृत्तिका पुद्गलषट्त्रिंशिका समाप्ता ॥

॥ अर्हम् ॥

# ॥ सवृत्तिका निगोदषट्त्रिंशिका ॥

अथ पञ्चमाङ्ग एवैकादशशते दशमोद्देशके निगोदविचारः "लोगस्सणं भंते एगंमि आगासपएसे जहन्नपए जीवपएसाणं उक्कोसपए जीवपएसाणं सवजीवाणं कयरे कयरे अप्पा वा बहुआ वा तुला वा विसेसाहिया वा? गोयमा! सवथोवा लोगस्स एगंमि आगासपएसे जहन्नपए जीवपएसा, सवजीवा असंखिज्जगुणा। उक्कोसपए जीवपएसा विसेसाहिया" इति सूत्रम्। अत्र वृद्धोक्ताभिः षट्त्रिंशता गाथाभिरमूभिरभिधीयते। यथा—

**लोगस्सेगपएसे, जहन्नयपयंमि जियपएसाणं। उक्कोसपए य तहा, सवजियाणं च के बहुया ॥ १ ॥**

लोकाकाशस्यैकस्मिन्नभःप्रदेशे निर्विभागे क्षेत्रे जघन्यतः सूक्ष्मनिगोदादिजीवानां कति प्रदेशा अवगाढाः [1]स्युः? तथोत्कृष्टपदे उत्कर्षपदे च लोकाकाशस्यैवैकस्मिन्नभःप्रदेशे निर्विभागे क्षेत्रे कति जीवानां प्रदेशा अवगाढाः स्युः? तथा सर्वजीवानां समस्तलोकाकाशवर्तिनां सर्वभेदभिन्नानामुत्कृष्टप[2]देनैकनभःप्रदेशावगाढसूक्ष्मबादरादिभेदभि[3]न्नजीवप्रदेशानां च के बहवः?। इति सूत्र[4]वृत्तिः ॥ इह चतुर्दशरज्ज्वात्मकोऽपि लोकः प्रदेशगणितापेक्षयाऽसंख्यातप्रदेशात्मकोऽस्ति। एकैक-

१ 'स्युः' इति कचिन्न। एवमग्रे। २ 'पदैक' इत्यपि। ३ 'भिन्नानां' इत्यपि। ४ 'इति सूत्रवृत्तिः' इति कापि नास्ति ॥

निगोदावगाहना चाङ्गुलासंख्येयभागमात्रक्षेत्रप्रमाणा, यत्र चैको निगोदस्तत्रासंख्येया निगोदाः । अनन्तजीवानां चैकं साधारणं शरीरं निगोदः । एकैकजीवश्च स्वदेशेऽसंख्यातप्रदेशात्मको[1] लभ्यते, स च सूक्ष्मनिगोदेष्वतीवसंकुचितोऽङ्गुला-संख्येयभाग[2]मात्रक्षेत्रमसंख्यातप्रदेशात्मकं व्याप्नोति । विस्तृतस्तु बहून् बहुतरान्[3]वा यावत्केवलिसमुद्घातावस्थायां सर्वान् लोकाकाशप्रदेशान् व्याप्नोति । ततश्च सर्वजीवराशेरपेक्षया जघन्यत एकत्र क्षेत्रे[4] नभःप्रदेशेऽसंख्यातनिगोदांशोऽधितिष्ठति । कति सर्वजीवाः ? जघन्यपदे च कति जीवानां प्रदेशा अवगाढाः स्युः ? उत्कृष्टतोऽपि कति ? इति परमार्थतो राशित्रयस्य परस्परमल्पबहुत्वे प्रश्नः ॥ १ ॥ उत्तरमाह—

**थोवा जहन्नयपए, जियप्पएसा जिया असंखगुणा । उक्कोसपयपएसा, तओ विसेसाहिया भणिया ॥ २ ॥**

एकत्र नभःप्रदेशे जीवप्रदेशा जघन्यपदे सर्वजीवराशेरपेक्षया स्तोकाः, असंख्येयतमभागवर्तित्वात् । जघन्यपदे च जीवप्रदेशापेक्षया सर्वजीवानामसंख्यातगुणत्वात् । उत्कृष्टपदे तु एकस्मिन्नभःप्रदेशे जीवप्रदेशास्ततः सर्वजीवराशेरपेक्षया विशेषाधिका इति ॥ २ ॥ अथ जघन्यपदमुत्कृष्टपदं चोच्यते—

**तत्थ पुण जहन्नपयं, लोयंते जत्थ फासणा तिदिसिं । छद्दिसिमुक्कोसपयं, समत्थगोलंमि नन्नत्थ ॥ ३ ॥**

तत्र तयोर्जघन्येतरपदयोर्जघन्यपदं लोकान्ते निष्कुटकोणरूपे भवति 'जत्थ' इति यत्र गोलके स्पर्शना अपरापरगोलकारम्भकनिगोदराशिदेशैस्तिसृष्वेव दिक्षु भवति, शेषाणां दिशामलोकेनावृतत्वात्, सा च स्पर्शना खण्डगोलक एके भव-

१ 'के' इत्यपि । २ 'भाग' इति क्वापि नास्ति । ३ 'वा' इति क्वचिन्नास्ति । ४ 'क्षेत्रे' इति क्वापि नास्ति ॥

तीति भावः । 'छद्दिसिं' इति यत्र पुनर्गोलके षट्स्वपि दिक्षु अपरापरगोलकारम्भकनिगोदराशिदेशैः स्पर्शना भवति; तत्रोत्कृष्टपदं भवति; तच्च समस्तगोलके परिपूर्णगोलके भवतीत्यर्थः । नान्यत्र, खण्डगोलके न भवतीति भावः । संपूर्णगोलकश्च लोकमध्य एव स्यात्, न तु अलोकसमीप इति ॥ ३ ॥ अथ परवचनमाशङ्कमान आह—

**उक्कोसमसंखगुणं, जहन्नयाओ पयं हवइ किंतु । नणु तिद्दिसिंफुसणाओ, छद्दिसिफुसणा भवे दुगुणा ॥ ४ ॥**

उत्कृष्टपदमसंख्यातगुणं जघन्यपदैकनभःप्रदेशावगाढजीवप्रदेशराश्यपेक्षया, किन्तु कथं तु भवति ? न भवतीत्यर्थः । कस्मादेवम् ? इत्याह—ननु निश्चितम्, अक्षमायां वा । ननुशब्दः, त्रिदिक्स्पर्शनायाः सकाशात् षड्दिक्स्पर्शना भवेद् द्विगुणा, त्रिकस्य द्विकेन गुणने षण्णामेव भावादिति ॥ ४ ॥ इह च काकुपाठाद्धेतुत्वं प्रतीयत इत्यतो द्विगुणमेवोत्कृष्टपदं स्यादसंख्यातगुणं च तदिष्यते, जघन्यपदैकनभःप्रदेशाश्रितजीवप्रदेशराश्यपेक्षयाऽसंख्यातगुणसर्वजीवेभ्यो विशेषाधिकजीवप्रदेशोपेतत्वात्तस्येति । इहोत्तरम्—

**थोवा जहन्नयपए, निगोयमित्तावगाहणा फुसणा । फुसणाऽसंखगुणत्ता, उक्कोसपए असंखगुणा ॥ ५ ॥**

एकस्मिन्नभःप्रदेशे जघन्यतो जीवप्रदेशाः स्तोकाः; कुतः ? इत्याह—'निगोयमित्तावगाहणा फुसणा' इति निगोदमात्रेऽङ्गुलासंख्येयभागरूपे क्षेत्रेऽवगाहना येषां ते निगोदमात्रक्षेत्रावगाहनाः, यावत्सु येष्वेव चाकाशप्रदेशेष्वेको निगोदोऽवगाढस्तावत्सु तेष्वेव चापरनभःप्रदेशस्पर्शपरिहारेण ये निगोदा अवगाढास्त एकावगाहना इत्यर्थः । तैरेव च यत्स्पर्श-

---

१ 'नणु तिदिसि फुसणाओ' इत्यपि क्वचित् एवमग्रेऽपि । २ 'राश्यपेक्षया' इति क्वापि ॥

निगोदषट्-
॥ १६ ॥

नमवगाहनं जघन्यपदस्य तन्निगोदमात्रावगाहनस्पर्शनं तस्मात् खण्डगोलकनिष्पादकनिगोदैस्तस्याऽसंस्पर्शनादित्यर्थः ।
भूम्यासन्नापवरकमध्यकोणान्तिमप्रदेशसदृशो हि जघन्यपदाख्यः प्रदेशः, तं चालोकसंबन्धादेकावगाहना एव निगोदाः
स्पृशन्ति, न तु खण्डगोलकनिष्पादका निगोदाः; प्रदेशपरिवृद्धिहानिभ्यां तुल्यावगाहनानामपरनिगोदानां तत्रानुपलभ्य-
मानत्वात् । तत्र किल कल्पनया जघन्यपदं जीवशतं स्पृशति । परमार्थतस्त्वेकोऽपि निगोदोऽनन्तजीवाधिष्ठितो यत्र
चैको निगोदस्तत्रैकावगाहना असंख्येया निगोदा इति । तस्य च कल्पनाकल्पितस्य जीवशतस्य प्रत्येकं कल्पनयैव
प्रदेशलक्षं तत्रावगाढमिति । परमार्थतस्तु समस्तलोकाकाशप्रदेशराशितुल्यप्रदेश एकैकोऽपि जीवोऽसंख्येयान् प्रदेशानव-
गाहत इति । एवं च काल्पनिकप्रदेशलक्षगणने जघन्यपदे कोटीजीवप्रदेशानामवगाढेत्येवं स्तोकास्तत्र जीवप्रदेशा इति ।
अथोत्कृष्टपदजीवप्रदेशप्रमाणमुच्यते—'फुसणा असंखगुणत्ता' इति स्पर्शनाया उत्कृष्टपदे पूर्णगोलकनिष्पादकनिगोदैः
स्पर्शनाया यदसंख्यातगुणत्वं जघन्यपदापेक्षया तत्तया तस्माद्धेतोरुत्कृष्टपदेऽसंख्यातगुणा जीवप्रदेशा जघन्यपदापेक्षया
भवन्ति । उत्कृष्टपदं हि संपूर्णगोलकनिगोदैरेकावगाहनैरसंख्येयैस्तथोत्कृष्टपदा विमोचनेन प्रथमनिगोदावगाहनापेक्षया एकै-
कप्रदेशश्रेणिपरिहारिभिः प्रत्येकमसंख्येयैरेव स्पृष्टम् । तच्च किल कल्पनया कोटिसहस्रेण जीवानां स्पृश्यते । तत्र च
प्रत्येकं जीवप्रदेशलक्षस्यावगाहनाजीवप्रदेशानां दशकोटिकोट्योऽवगाढाः स्युः । इत्येवं उत्कृष्टपदे तेऽसंख्येयगुणा भाव-
नीया इति ॥ ५ ॥ अथ गोलकप्ररूपणाय आह—

**उक्कोसपयममुत्तुं, निगोयओगाहणाइ सव्वत्तो । निप्फाइज्जइ गोलो, पएसपरिवुड्ढिहाणीहिं ॥ ६ ॥**

सवृत्तिक
॥ १६ ॥

उत्कृष्टपदं लोकमध्यवर्त्तिगोलकस्थितबहुजीवप्रदेशस्पृष्टनभःप्रदेशरूपं विवक्षितप्रदेशममुञ्चद्भिर्निगोदावगाहनायाः एकस्याः सर्वतः सर्वासु दिक्षु निगोदान्तराणि स्थापयद्भिर्निष्पाद्यते गोलः । कथं ? प्रदेशपरिवृद्धिहानिभ्यां कांश्चित्प्रदेशान् विवक्षितावगाहनाया आक्रमद्भिः कांश्चिद्विमुञ्चद्भिरित्यर्थः । अयमभिप्रायः—येषु विवक्षितेष्वङ्गुलासंख्येयभागवर्तिष्वसंख्यातेष्वाकाशप्रदेशेष्वेको निगोदोऽवगाहते, तेष्वेवान्येऽसंख्याता निगोदा अवगाहन्ते । तथा विवक्षितनिगोदावगाहनापेक्षयैवापरे निगोदाः कांश्चित् प्रदेशान् परिहृत्य कांश्चिच्च प्रदेशानभिव्याप्यापरनभःप्रदेशानपि व्याप्नुवन्तीत्यर्थः । एवमेकगोलकनिष्पत्तिः ॥ ६ ॥ स्थापना[1] चेयम् । गोलकान्तरकल्पनायाह—

**तत्तो चिअ गोलाओ, उक्कोसपयं मुइत्तु जो अन्नो । होइ[2] निगोओ तंमिवि अन्नो निप्फज्जई गोलो ॥ ७ ॥**

तमेवोक्तलक्षणं गोलकमाश्रित्यान्यो निष्पद्यते गोलः । कथम् ? उत्कृष्टपदं प्राक्तनगोलकसंबन्धि विमुच्य योऽन्यो भवति निगोदस्तस्मिन्नुत्कृष्टपदकल्पनेनेति । अयमाशयः—प्रागुत्कृष्टपदमाश्रित्य विवक्षितनिगोदावगाहनायां यानि यानि प्रदेशपरिवृद्धिहानिभ्यां निगोदान्तराणि स्थापितानि तेष्वेकतरमपि निगोदमाश्रित्य निगोदान्तरस्थापनेन गोलकान्तरं निष्पद्यत इति ॥ ७ ॥ तथा च सति यत्स्यात्तदाह—

**एवं निगोयमित्ते, खित्ते गोलस्स होइ निप्फत्ती । एवं निप्फज्जंते, लोगे गोला असंखिज्जा ॥ ८ ॥**

एवमुक्तक्रमेण प्रतिनिगोदं निगोदान्तरस्थापनारूपेण निगोदमात्रे क्षेत्रे विवक्षितविविक्तैकनिगोदावगाहनास्वरूप

---

१ स्थापना तु तद्विदः सकाशाज्ज्ञेया । २ 'हुति,' 'होंति' इत्यपि क्वचित् ॥

आकाशखण्डे गोलकस्य भवति निष्पत्तिः, विवक्षितनिगोदावगाहनातिरिक्तनिगोददेशानां गोलकान्तरानुप्रवेशात् । एवं च निष्पद्यन्ते लोके गोला असंख्येयाः, सकलस्यापि लोकाकाशस्य निगोदकदम्बकावरुद्धत्वात् । निगोदावगाहनायाश्चाङ्गुलासंख्येयभागरूपत्वात्, प्रतिनिगोदावगाहनं च गोलकनिष्पत्तेरिति ॥ ८ ॥ अथ किमिदमेव प्रतिगोलकं यदुत्कृष्टपदं तदेव ग्राह्यम् ? उतान्यत् ? इति अस्यामाशङ्कायामाह—

**ववहारनएण इमं, उक्कोसपयावि इत्तिया चेव । जं पुण उक्कोसपयं, निच्छइयं होइ तं वुच्छं ॥ ९ ॥**

व्यवहारनयेन सामान्येनेदमनन्तरव्यावर्णितस्वरूपमुत्कृष्टपदमुक्तं काका चेदमध्येयम् । अनुक्तस्यापि किंशब्दस्य गम्यमानत्वात् । ततश्च किमिदमुत्कृष्टपदं ग्राह्यम् ? अपि तु न ग्राह्यमेवेति तात्पर्यम् । कुतः ? 'उक्कोसपयावि इत्तिया चेव' इति न केवलं गोलका असंख्येयाः, उत्कृष्टपदान्यपि प्रतिपरिपूर्णगोलकस्पर्शनाप्ररूपितानि एतावन्त्येव असंख्येयान्येव भवन्ति । यस्मात्ततो न नियतमुत्कृष्टपदम्, किं च न स्यान्निष्कुटासन्नत्रिदिक्स्पर्शिखण्डगोलकान् विहाय शेषगोलकानां षड्दिक्स्पर्शिनां सर्वेषामपि समानगोलकान्तरैः समानस्पर्शनयुक्तत्वादिति भावः । यत्पुनरुत्कृष्टपदं नैश्चयिकं निश्चयनयसंमतं भवति सर्वोत्कर्षयोगात् यदिह ग्राह्यं तद्वक्ष्येऽनन्तरगाथया ॥ ९ ॥ तदेवाह—

**बायरनिगोयविग्गहगइयाई जत्थ समहिया अन्ने । गोला हुज्ज सुबहुया, निच्छइयपयं तदुक्कोसं॥१०॥**

बादराश्च ते निगोदाश्च बादरनिगोदाः कन्दादयः, ते च सूक्ष्मबादरनिगोदसंबन्धिविग्रहगतिकाश्च आदिशब्दादविग्रहगतयोऽपि यत्रोत्कृष्टपदे समधिकाः सूक्ष्मनिगोदगोलकेभ्यः पूर्वोक्तस्वरूपेभ्य उत्कृष्टपदवर्तिभ्योऽधिका अन्ये निगोदसूक्ष्म-

गोलकेभ्योऽपरे गोलका भवेयुः सुबहवो नैश्चयिकपदं तदुत्कर्षम् । अयमभिप्रायः—यच्च क्वापि सूक्ष्मा निगोदसंदोह-निष्पन्नाः परिपूर्णगोलकास्तत्र यदि बादरनिगोदा अप्यवगाहन्ते, तत्र च यदि सूक्ष्मनिगोदजीवा बादरनिगोदजीवाश्च सजातीयेषु विजातीयेषु वा बादरनिगोदान्तरेषूत्पित्सवोऽपरेऽपि पृथिवीकायादयो भवान्तरे संचरिष्णवो विग्रहगत्या ऋजु-गत्या वा संचरमाणाः सूक्ष्मपृथिवीकायादयस्तु तत्रस्था यावगाहन्ते, तदा च निश्चयनयसंमतमुत्कृष्टपदमिति । बादरनि-गोदा हि निराधारा न संभवन्ति, ततः पृथिव्यादिष्वेव स्वस्थानेषु स्वरूपतो भवन्ति न सूक्ष्मनिगोदवत्सर्वत्र, इत्यतो यत्र क्वचित्ते बादरनिगोदादयो भवन्ति तदुत्कृष्टपदं सात्त्विकमिति भावः ॥ १० ॥ एतदेवादर्शयन्नाह—

**इहरा पडुच्च सुहुमे, बहुतुल्ला पायसो सगलगोला । तो बायराइगहणं, कीरइ उक्कोसयपयंमि ॥ ११ ॥**

'इहरा' इति इतरथा बादरनिगोदाश्रयणं विना सूक्ष्मनिगोदान् प्रतीत्य बहुतुल्या निगोदसंख्यया समाना भवन्ति । प्रायोग्रहणं एकादिना न्यूनाधिकत्वे व्यभिचारपरिहारार्थम् । के एते ? इत्याह—सकलगोला लोकमध्यवर्तिनः संपूर्ण-गोला ननु लोकान्तवर्तिनः खण्डगोलाः, अतो न नियतं किञ्चिदुत्कृष्टपदं लभ्येत यत एवं ततो बादरनिगोदादिग्रहणं क्रियते । अयमाशयः—अङ्गुलासंख्येयभागमात्रमसंख्याताकाशप्रदेशपरिमाणं क्षेत्रमवगाह्यैकः सूक्ष्मनिगोदोऽवतिष्ठते, अन्येऽप्यसंख्याताः सूक्ष्मनिगोदास्तस्मिँस्तावति क्षेत्रे व्यवतिष्ठन्ते । तत्र सूक्ष्मैकनिगोदावगाहापेक्षया षट्स्वपि दिक्षु क्षेत्र-प्रदेशपरिवृद्धिहानिभ्यां येऽपरेऽसंख्यातनिगोदात्मका असंख्येयगोलका यावर्ती विवक्षितसूक्ष्मनिगोदभुवमवगाहन्ते, तत्रैव

१ 'यत्र' इति एकस्मिन्पुस्तके । २ इतः प्राक् 'विवक्षित–' इत्यधिकं क्वचित् ॥

च यदि बादरनिगोदेभ्यः सूक्ष्मेषु बादरेषु वा निगोदेषूत्पित्सवः, सूक्ष्मनिगोदेभ्यो बादरेषु सूक्ष्मेषु वा निगोदेषूत्पित्सवो विग्रहगत्या ऋजुगत्या वा संचरमाणाः सूक्ष्मपृथिवीकायादयश्च तत्रस्था वा भवान्तरे विग्रहगत्या ऋजुगत्या वा संचरमाणा विवक्षितनिगोदावगाहक्षेत्रमवगाहन्ते, तदुत्कृष्टपदं तात्त्विकमिति भावः[1] ॥ ११ ॥ अथ गोलकादीनां प्रमाणमाह—

**गोला य असंखिज्जा, हुंति निओया असंखया गोले। इक्किको य निगोओ, अणंतजीवो मुणेयवो॥१२॥**

गोला असंख्याता भवन्ति। सकलेऽपि लोकाकाशे तेषामवस्थानादेकैकस्मिंश्च गोले निगोदाः साधारणशरीरिणोऽसंख्याता भवन्ति। एकावगाहनानामसंख्यातानां निगोदानामेव गोलक इति व्यपदेशात्। एकैकस्मिंश्च निगोदेऽनन्ता जीवा ज्ञातव्याः। एतच्चानन्तत्वं सिद्धानन्तकादनन्तगुणितं ज्ञातव्यम्। शास्त्रान्तरेषु—'एगस्स निगोयस्स उ अणंतभागो उ सिद्धिगओ' इति भणनात् ॥ १२ ॥ अथ जीवप्रदेशपरिमाणप्ररूपणपूर्वकं निगोदादीनामवगाहनामानमभिधित्सुराह—

**लोगस्स य जीवस्स य, हुंति पएसा असंखया तुला। अंगुलअसंखभागो, निगोयजियगोलगोगाहो॥१३॥**

लोकजीवयोः प्रत्येकमसंख्याताः प्रदेशा भवन्ति, ते च परस्परेण तुल्याः। यावन्तश्चतुर्दशरज्ज्वात्मकस्य समस्तलोकाकाशस्य प्रदेशास्तावन्त एकै[2]जीवस्य निजप्रदेशा न न्यूनाधिकाः, केवलिसमुद्घातावस्थायां केवलिना निजप्रदेशैः समस्तलोकाकाशपूरणात्तुल्यतेत्यर्थः। एषां च संकोचविशेषादङ्गुलासंख्येयभागो निगोदस्य तज्जीवस्य गोलकस्य चावगाहनेति ॥ १३ ॥ निगोदादिसमवगाहनतामेव समर्थयन्नाह—

१ 'भावः' इति न क्वचित्। २ 'एव' इति क्वचित् ॥

**जंमि जिओ तं मेव निगोओ तो तम्मि चेव गोलोऽवि । निप्फज्जइ जं खित्ते, तो ते तुल्लावगाहणया ॥१४॥**

यस्मिन् क्षेत्रेऽङ्गुलासंख्येयभागरूपेऽसंख्यातनभःप्रदेशात्मके जीवोऽवगाहते, तस्मिन्नेव निगोदे निगोदमभिव्याप्य जीवस्यावस्थानात् 'तो' इति तदनन्तरं तस्मिन्नेव गोलोऽपि निष्पद्यते आस्ते; विवक्षितनिगोदावगाहनातोऽतिरिक्तशेषनिगोदावगाहना गोलकान्तरप्रवेशे न निगोदमात्रा गोलकावगाहनेति । अयमाशयः—येषु यावत्सु नभःप्रदेशेष्वेको निगोदोऽवगाढस्तेषु तावत्स्वेवापरेऽप्यसंख्येया निगोदाः सूक्ष्मपरिणामतयाऽवगाहन्ते । एकैकस्मिंश्च निगोदेऽनन्ता जीवाः सन्ति । एकैकश्च जीवो विवक्षितनिगोदप्रदेशानभिव्याप्य तिष्ठति । तेषां चैकावगाहनानामसंख्यातानां निगोदानां गोलक इति संज्ञा । तस्य गोलकस्यैकैकप्रदेशश्रेणिं मुञ्चन्तोऽपरापरप्रदेशश्रेणिं च व्याप्नुवन्तः षट्स्वपि दिक्षु येऽपरे प्रत्यवगाहनमसंख्येया निगोदास्तेषामपि यावानवगाहनाभागो विवक्षितगोलकस्यासीत्, तावान् स एव गोलक उद्धरितस्त्ववगाहनाभागो गोलकान्तरेषु प्रविशतीत्यायातमेकजीवस्य निगोदस्य गोलकस्य समानावगाहनेति ॥ १४ ॥ अथ जीवाद्यवगाहनासमतासामर्थ्येन यदेकत्र प्रदेशे जीवप्रदेशमानं भवति, तद्विभणिषुस्तत्प्रस्तावनार्थं प्रश्नं कारयन्नाह—

**उक्कोसपयपएसे, किमेगजीवप्पएसरासिस्स । हुज्जेगनिगोयस्स व, गोलस्स व किं समोगाढं ॥ १५ ॥**

उत्कर्षत एकस्मिन्नभःप्रदेश एकजीवप्रदेशराशेर्निगोदस्य गोलकस्य च किं किं समवगाढं भवेत् ? अयं प्रश्नार्थः । लोकाकाशप्रदेशराशितुल्यनिजप्रदेश आत्मा यदा संकोच्य निजप्रदेशान्निगोदमात्रे क्षेत्रेऽवगाहते, तदैकैकस्मिन्नभःप्रदेशे कति जीवप्रदेशाः स्युरिति । एवं निगोदगोलकयोरपि प्रश्नार्थो ज्ञेयः ॥ १५ ॥ तत्र जीवमाश्रित्योत्तरम्—

**जीवस्स लोगमित्तस्स सुहुमओगाहणावगाढस्स । इक्किक्कंमि पएसे, हुंति पएसा असंखिज्जा ॥ १६ ॥**

जीवस्य समस्तलोकाकाशप्रदेशसमूहसमाननिजप्रदेशस्य सूक्ष्मावगाहनयावगाढस्यैकैकनभःप्रदेशेऽसंख्याता जीवप्रदेशा भवन्ति । अयमर्थः—सूक्ष्मनामकर्मोदयेन जीवोऽङ्गुलासंख्येयभागरूपं निगोदमात्रं क्षेत्रमवगाहते, तच्चासंख्यातनभःप्रदेशात्मकं समग्रलोकेऽप्यसंख्येया नभःप्रदेशा असंख्यातस्यासंख्यातभेदत्वात् । तत एकस्मिन्निगोदावगाढनभःप्रदेशे एकजीवस्यासंख्येयाः स्वप्रदेशा इति । ते च किल कल्पनया कोटीशतसंख्यस्य जीवप्रदेशराशेः प्रदेशदशसहस्रीस्वरूपावगाहनया भागे हृते लक्षमाना भवन्तीति ॥ १६ ॥ अथ निगोदमाश्रित्याह—

**लोगस्सहिए भागे, निगोयओगाहणाइ जं लद्धं । उक्कोसपएऽतिगयं, इत्तियमिक्किक्कजीवाओ ॥ १७ ॥**

निगोदावगाहनया लोकस्य भागे हृते यल्लब्धमेतावदुत्कृष्टपदेऽतिगतमवगाढं निगोदसंबद्धादेकैकजीवात् । अयमर्थः—असंख्यातप्रदेशोऽपि लोकः किल प्रदेशकोटीशतमानः कल्प्यते, एकनिगोदावगाहना च प्रदेशदशसहस्रीमाना ततश्च कल्पितलोकप्रदेशराशेः कल्पितनिगोदावगाहनया भागे हृते लक्षा लभ्यते, सा चानन्तजीवात्मकस्य निगोदस्य संबन्धिन एकैकजीवस्य सत्का उत्कर्षतः एकस्मिन्नभःप्रदेशेऽवगाढेति ज्ञातव्यम् । अनेन निगोदसत्कमुत्कृष्टपदे यदवगाढं तद्दर्शितम् ॥ १७ ॥ अथ गोलकसत्कं यत्तत्रावगाढं तद्दर्शयति—

**एवं दव्वट्ठाए, सव्वेसिं इक्कगोलजीवाणं । उक्कोसपयमइगया, होंति पएसा असंखगुणा ॥ १८ ॥**

---

१ 'ना भागे' इत्यपि । २ 'लक्षम्' । ३ 'तच्चा' । ४ 'सत्कम्' । ५ वगाढमिति । ६ ज्ञातव्या ॥

यथा निगोदजीवेभ्योऽसंख्येयगुणास्तत्प्रदेशा उत्कृष्टपदेऽतिगताः, एवं द्रव्यार्थतया न तु प्रदेशार्थतया 'सव्वेसिं' इति सर्वेभ्यः 'इक्कगोलजीवाणं' इति एकगोलगतजीवद्रव्येभ्यः सकाशादुत्कृष्टपदमतिगता भवन्ति प्रदेशा असंख्यातगुणाः। इह किलानन्तजीवोऽपि निगोदः कल्पनया लक्षजीवः। गोलकश्चासंख्यातनिगोदोऽपि कल्पनया लक्षनिगोदः, ततस्तस्य लक्षस्य लक्षगुणने कोटीसहस्रसंख्याः कल्पनया गोलके जीवा भवन्ति। तत्प्रदेशानां च लक्षं लक्षमुत्कृष्टपदेऽतिगतमतश्चैकगोलकसंख्याया लक्षगुणने कोटीकोटीदशकसंख्या एकत्र प्रदेशे कल्पनया जीवप्रदेशा भवन्ति। गोलजीवेभ्यः सकाशादेकत्र प्रदेशेऽसंख्येयगुणा जीवप्रदेशा भवन्तीत्युक्तम्॥ १८॥ अथ तत्र गुणकारराशेः परिमाणनिर्णयार्थमुच्यते—

**तं पुण केवइएणं, गुणियमसंखिज्जयं भविज्जा हि। भण्णइ दव्वट्ठाए, जावइया सव्वगोलत्ति॥ १९॥**

तत्पुनरनन्तरोक्तमुत्कृष्टपदातिगतजीवप्रदेशराशिसंबन्धि कियता किं परिमाणेनासंख्येयराशिना गुणितं सत् 'असंखिज्जयं' इति असंख्येयकमसंख्यातगुणनाद्वारायातं भवेत् स्याद्? इति भण्यते। अत्रोत्तरं—द्रव्यार्थतया न तु प्रदेशार्थतया यावन्तः सर्वगोलकाः सकललोकगोलकास्तावन्त एवेति गम्यम्। स चोत्कृष्टपदगतैकजीवप्रदेशराशिर्मन्तव्यः, सकलगोलानां तत्तुल्यत्वादिति॥ १९॥

**किं कारणमोगाहणतुल्लत्ता जियनिगोयगोलाणं। गोला उक्कोसपएक्कजियपएसेहिँ तो तुल्ला॥ २०॥**

'किं कारणं' इति कस्मात्कारणाद्यावन्तः सर्वगोलास्तावन्त एवोत्कृष्टपदगतैकजीवप्रदेशाः? इति प्रश्नः। अत्रोत्तरम्—अवगाहनातुल्यत्वात्। केषाम्? इत्याह—जीवनिगोदगोलानामवगाहनातुल्यत्वं चैषामङ्गुलासंख्येयभागमात्रावगाहित्वा-

दिति । यस्मादेवं 'तो' इति तस्माद्गोलाः सकललोकसंबन्धिन उत्कृष्टपदे ये एकस्य जीवस्य प्रदेशास्ते तथा तैरुत्कृष्टपदैकजीवप्रदेशैस्तुल्या भवन्ति ॥ २० ॥ एतस्यैव भावनार्थमुच्यते—

**गोलेहिँ हिए लोगे, आगच्छइ जं तमेगजीवस्स । उक्कोसपयगयपए, सरासितुल्लं हवइ जह्मा ॥ २१ ॥**

गोलैर्गोलावगाहनाप्रदेशैः कल्पनया दशसहस्रसंख्यैर्हृते विभक्ते हृतभाग इत्यर्थः । लोके लोकप्रदेशराशौ कल्पनयैककोटीशतप्रमाणे आगच्छति लभ्यते, यत्सर्वगोलकसंख्यास्थानं कल्पनया लक्षमित्यर्थः । तदेकजीवस्य संबन्धिना पूर्वोक्तप्रकारतः कल्पनया लक्षप्रमाणेनैवोत्कृष्टपदगतप्रदेशराशिना तुल्यं भवति । यस्मात्तस्माद्गोला उत्कृष्टपदैकजीवप्रदेशैस्तुल्या भवन्तीति प्रकृतमेवेति । एवं गोलकानामुत्कृष्टपदगतैकजीवप्रदेशानां च तुल्यत्वं समर्थितम् ॥ २१ ॥ पुनस्तदेव प्रकारान्तरेण समर्थयति—

**अहवा लोगपएसे, इक्किक्के ठवय गोलमिक्किक्कं । एवं उक्कोसपएक्कजियपएसेसु मायंति ॥ २२ ॥**

अथवा लोकस्यैव प्रदेशे एकैकस्मिन् स्थापय निधेहि । विवक्षितसमत्वबुभुत्सोर्गोलमेकैकम् । ततश्चैवमुक्तक्रमस्थापने उत्कृष्टपदे ये एकजीवप्रदेशास्ते तथा तेषु तत्परिमाणेष्वाकाशप्रदेशेष्वित्यर्थः, मान्ति गोला इति गम्यम् । यावन्त उत्कृष्टपदे एकजीवप्रदेशास्तावन्तो गोलका अपि भवन्तीत्यर्थः । ते च कल्पनया किल लक्षप्रमाणा उभयेऽपीति ॥२२॥ अथ सर्वजीवेभ्य उत्कृष्टपदजीवप्रदेशा विशेषाधिका इति विभणिषुस्तेषां सर्वजीवानां च तावत्समतामाह—

**गोलो जीवो य समा, पएसओ जं च सवजीवावि । हुंति समोगाहणया, मज्झिमओगाहणं पप्प ॥ २३ ॥**

गोलको जीवश्च समौ प्रदेशतोऽवगाहनाप्रदेशानाश्रित्य कल्पनया द्वयोरपि प्रदेशदशसहस्रावगाढत्वात् 'जं च' इति यस्माच्च सर्वजीवा अपि सूक्ष्मा भवन्ति समावगाहनकाः। मध्यमावगाहनामाश्रित्य कल्पनया हि जघन्यावगाहना पञ्च-प्रदेशसहस्राणि। उत्कृष्टा तु पञ्चदश द्वयोश्च मीलनेनार्द्धीकरणेन च दशसहस्राणि मध्यमा भवति ॥ २३ ॥

**तेण फुडं चिय सिद्धं, एगपएसंमि जे जियपएसा। ते सव्वजीवतुल्ला, सुणसु पुणो जह विसेसहिया ॥२४॥**

इह किलासद्भावस्थापनया कोटीशतसंख्यप्रदेशस्य जीवस्य प्रदेशदशसहस्र्यामवगाढस्य प्रतिप्रदेशं प्रदेशलक्षं भवति, तच्च पूर्वोक्तप्रकारतो निगोदवर्त्तिना जीवलक्षेण गुणितं कोटीसहस्रं भवति। पुनरपि च तदेकगोलवर्त्तिना निगोदलक्षेण गुणितं कोटीकोटीदशकप्रमाणं भवति, जीवप्रमाणमप्येतदेव। तथा हि—कोटीशतसंख्यप्रदेशे लोके दशसहस्रावगाहिनां गोलानां लक्षं भवति। प्रतिगोलकं च निगोदलक्षकल्पनान्निगोदाना कोटीसहस्रं भवति। प्रतिनिगोदं च जीवलक्षकल्पनात्सर्वजीवानां कोटीकोटीदशकं भवति ॥ २४ ॥ अथ सर्वजीवेभ्य उत्कृष्टपदगतजीवप्रदेशा विशेषाधिका इति दर्श्यते—

**जं संति केइ खंडा, गोला लोगंतवत्तिणो अन्ने। बायरविग्गहिएहिय उक्कोसपयं जमब्भहियं ॥ २५॥**

यस्माद्विद्यन्ते केचित्खण्डा गोला लोकान्तवर्तिनः 'अन्ने' इति पूर्णगोलकेभ्योऽपरेऽतो जीवराशिः कल्पनया कोटीकोटीदशकरूप ऊनो भवति, पूर्णगोलकतायामेव तस्य यथोक्तस्य भावात्। ततश्च येन जीवराशिना खण्डगोलकाः पूर्णीभूताः स सर्वजीवराशेरपनीयते, असद्भूतत्वात्तस्य। स च किल कल्पनया कोटीशतमानस्तत्र चापनीते सर्वजीवराशिः स्तोकतरो भवति। उत्कृष्टपदं तु यथोक्तप्रमाणमेवेति। तत्ततो विशेषाधिकं भवति। समता पुनः खण्डगोलानां पूर्णता-

विवक्षणादुक्तेति । तथा बादरविग्रहिकैश्च बादरनिगोदादिजीवप्रदेशैश्चोत्कृष्टपदं यद्यस्मात्सर्वजीवराशेरभ्यधिकं ततः सर्वजीवेभ्य उत्कृष्टपदजीवप्रदेशा विशेषाधिका भवन्ति । इयमत्र भावना—बादरविग्रहगतिकादीनामनन्तानां जीवानां सूक्ष्मजीवासंख्येयभागवर्त्तिनां कल्पनया कोटीप्रायसंख्यानां पूर्वोक्तसर्वजीवराशिप्रमाणे प्रक्षेपणेन समताप्राप्तावपि तस्य बादरादिजीवराशेः कोटीप्रायसंख्यस्य मध्यादुत्कर्षतोऽसंख्येयभागस्य कल्पनया शतसंख्यस्य विवक्षितसूक्ष्मगोलकावगाहनायामवगाहनात्, एकैकस्मिंश्च प्रदेशे प्रत्येकं जीवप्रदेशलक्षस्यावगाढत्वात्, लक्षस्य च शतगुणत्वेन कोटीप्रमाणत्वात्, तस्याश्चोत्कृष्टपदे प्रक्षेपात्, पूर्वोक्तमुत्कृष्टपदजीवप्रदेशमानं कोट्याधिकं भवति ॥ २५ ॥ यस्मादेवम्—

**तह्मा सव्वेहिंतो, जीवेहिंतो फुडं गहेयव्वं । उक्कोसपयपएसा, हुंति विसेसाहिया नियमा ॥ २६ ॥**

'तह्मा' इति ॥ २६ ॥ इदमेव प्रकारान्तरेण भाव्यते—

**अहवा जेण बहुसमा, सुहुमा लोएऽवगाहणाए य । तेणिक्किक्कं जीवं, बुद्धीए विरल्लए लोए ॥ २७ ॥**

यतो बहुसमाः प्रायेण जीवसंख्यया कल्पनयैकैकावगाहनायां जीवकोटीसहस्रस्यावस्थानात्खण्डगोलकैर्व्यभिचारपरिहारार्थं चेह बहुग्रहणम् । सूक्ष्माः सूक्ष्मनिगोदगोलकाः कल्पनया लक्षकल्पाः, लोके चतुर्दशरज्ज्वात्मके । तथावगाहनया च समाः कल्पनया दशसु दशसु प्रदेशसहस्रेष्ववगाढत्वात्तस्मादेकप्रदेशावगाढजीवप्रदेशानां सर्वजीवानां च समतापरिज्ञानार्थमेकैकं जीवं बुद्ध्या 'विरलए' इति केवलिसमुद्घातगत्या विस्तारयेत् लोके । अयमत्र भावार्थः—यावन्तो गोलकस्यैकत्र प्रदेशे

१ 'जीवं बुद्ध्या' इति क्वचिन्न दृश्यते ॥

जीवप्रदेशा भवन्ति कल्पनया कोटीकोटीदशकप्रमाणास्तावन्त एव विस्तारितेषु जीवेषु लोकस्यैकत्र प्रदेशे ते भवन्ति सर्व-जीवा अप्येतत्समाना एवेति ॥ २७ ॥ अत एवाह—

**एवंपि समा जीवा, एगपएसगयजियपएसेहिं । बायरबाहुल्ला पुण, हुंति पएसा विसेसहिया ॥ २८ ॥**

एवमपि न केवलं 'गोलो जीवो य समा' इत्यादिना पूर्वोक्तन्यायेन समा जीवा एकप्रदेशगतैर्जीवप्रदेशैरिति । उत्तरार्द्धस्य तु भावना प्राग्वदवसेयेति ॥ २८ ॥ अथ पूर्वोक्तराशीनां निदर्शनान्यभिधित्सुः प्रस्तावयन्नाह—

**तेसिं पुण रासीणं, निदरिसणमिणं भणामि पच्चक्खं । सुहगहणगाहणत्थं, ठवणारासिप्पमाणेहिं ॥ २९ ॥**

**गोलाण लक्खमिक्कं, गोले गोले [१]निगोयलक्खं तु । इक्किक्के य निगोए, जीवाणं लक्खमिक्किक्कं ॥ ३० ॥**

**कोडिसयमेगजीवप्पएसमाणं तमेव लोगस्स । गोलनिगोयजियाणं, दसउ सहस्सा समोगाहो ॥ ३१ ॥**

**जीवस्सिक्किक्कस्स य, दससाहस्सावगाहिणो लोए । इक्किक्कंमि पएसे, पएसलक्खं समोगाढं ॥ ३२ ॥**

**जीवसयस्स [२]जहण्णे, पयम्मि कोडीजियप्पएसाणं । ओगाढा उक्कोसे, पयंमि वुच्छं पएसग्गं ॥ ३३ ॥**

**कोडिसहस्स जियाणं, कोडाकोडीजि[३]यप्पएसाणं । उक्कोसे ओगाढा, सव्वजिया वित्ति[४]या चेव ॥ ३४ ॥**

---

१ 'गोले गोले य लक्खमिक्कं तु' इत्यपि पाठः । २ 'जहन्नो' इत्यपि । ३ 'दसप्पएसाण' इत्यपि । ४ 'वत्तिया' इत्यपि ॥

'तेसिं' ॥ २९ ॥ 'गोलाण' ॥३०॥ 'कोडिसयं' ॥ ३१ ॥ 'जीवस्स' ॥३२॥ 'जीवसयस्स' ॥३३॥ 'कोडिसहस्स' ॥३४॥

**कोडी उक्कोसपयम्मि बायरजियप्पएसपक्खेवो । सोहणयमित्तियं चिय, कायव्वं खंडगोलाणं ॥ ३५ ॥**

उत्कृष्टपदे सूक्ष्मजीवप्रदेशराशेरुपरि कोटीप्रमाणो बादरजीवप्रदेशानां प्रक्षेपः कार्यः; शतकल्पत्वाद्विवक्षितसूक्ष्मगोलकावगाढबादरजीवानां तेषां च प्रत्येकं प्रदेशलक्षस्योत्कृष्टपदेऽवस्थितत्वात्, तन्मीलने च कोटीसद्भावादिति । तथा सर्वजीवराशेर्मध्यात् शोधनकमपनयनं 'इत्तियं चिय' इति एतावतामेव कोटीसंख्यानामेव कर्त्तव्यं; खण्डगोलानां खण्डगोलकपूर्णताकरणे नियुक्तजीवानां तेषामसद्भाविकल्पादिति ॥ ३५ ॥

**एएसि जहा संभवमत्थोवणयं करिज्ज रासीणं । सब्भावओ अ जाणिज्ज ते अणंता असंखा वा ॥३६॥**

**॥ समाप्तेयं निगोदषट्त्रिंशिका ॥**

इहार्थोपनयो यथास्थानं प्राग्दर्शित एव 'अणंता' इति । निगोदे जीवा यद्यपि लक्ष्यमानास्तथाप्यनन्ता एवं सर्वजीवा अपि । तथा निगोदादयो ये लक्ष्यमानास्तेऽप्यसंख्येया अवसेयाः ॥ ३६ ॥ इति सूक्ष्मबादरनिगोदगोलकावगाहनाविचारः ॥

इति श्रीभगवत्येकादशशते दशमोद्देशके निगोदषट्त्रिंशिकावृत्तिः समाप्ता ॥

## ॥ इति सवृत्तिका निगोदषट्त्रिंशिका समाप्ता ॥